# TABLE OF CONTENTS

## अथ पञ्चम उल्लासः

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम् ॥४५॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

कामिनीकुचकलशवद् गूढं चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्तसूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि जीवन्न संप्रति भवामि किमावहामि ॥११४॥

अत्र 'जीवन्नि'त्यर्थान्तरसंक्रमितवाच्यस्य ।

---

वृत्तिकारः सङ्गतिमुल्लासस्य करोति एवमिति । प्रागुक्तनयेन ध्वननं ध्वनिः, ध्वन्यते इति ध्वनिः । तस्मिन् ध्वनौ भेदप्रभेदसहिते निर्णीते निराकृतसमस्तविप्रतिपत्तया युक्त्या निश्चयं प्रापिते क्रमप्राप्ता मध्यमकाव्यप्रभेदाः । तानाह 'अगूढ'मित्यादि । भिदा इति भिदादित्वादङ् ( पा. ३।३।१०४ ) । एवमगूढादिभेदेन गुणीभूतव्यङ्ग्यस्य ध्वनेरष्टौ भेदाः प्रकाराः (४६८) स्मृता इति सम्बन्धः । तेनैतेष्वष्टसु व्यङ्ग्यस्य सद्भावेऽपि न ध्वनिव्यवहारः । यतश्चाप्रधानीभूतोऽयं ध्वनिः कविकाव्यं पवित्रयति ततः प्रधानीभूतस्य ध्वनेरात्मत्वं सुव्यक्तमित्युक्तं भवति । सन्दिग्धतुल्य[योः]परवर्तिना प्राधान्यशब्देन प्रत्येकमन्वयः, तेन सन्दिग्धप्राधान्यं तुल्यप्राधान्यञ्चेति द्वौ भेदौ । तत्राद्ये सोऽपि हि ( रसादि ) रूपेण व्यङ्ग्यं प्रकाशते किन्तु गूढतां निधानवदपेक्षते तथा सति चारुत्वातिशयात् । अत्र दृष्टान्तमाह—कामिनीकुचकलशवदिति । यथाऽस्य रतिसर्वेक्षायमानस्यापि गूढतानिबन्धनं चारुत्वं तथा शब्दवाच्यत्वेन गोप्यमानं सद्व्यङ्ग्यमपि महार्घतामुपगच्छतीत्यतस्तद्दर्शनासाधारणप्रीतिलाभः प्रयोजनमित्युक्तम् ।

यस्यासुहृदित्यादि—जीवन्न संप्रति भवामि, अपि तु मृतोऽहं सम्प्रति, अत एवाह किमावहामीति आनुपूर्वी वहतिः करोत्यर्थः । अत्र जीवन्निति पदं भस्त्रिकावदुच्छ्वासोच्छ्वास—( वदुच्छ्वास ) मात्रधातृत्वपरमनुपयोगात्मिकया बाधया बाधित-

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्ति मन्जु मधुपा गृहदीर्घिकासु ।
पतत्यकारित च रवेर्नवबन्धुजीवपुष्पच्छदाभमुदयाचलचुम्बि विम्बम् ॥११५॥

( व. जी २।३ ९: )

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥११६॥

( वा. रा. १०।३० )

अत्र 'केनाप्यत्र' त्यर्थशक्तिमूलानुरणनरूपस्य । 'तस्याप्यत्र' इति युक्तः पाठः ।

अपरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्याङ्गं रसाद्यनुरणनरूपं वा ।

---

शुद्धर्थं ( मुख्यार्थं ) मभिमतनिमृतशक्तिमत्त्वादिधर्मान्तरेषु परिणमति । तच्च स्लोकया विपयीकृतत्वाद्वाच्यवत् स्फुटं प्रतीयत इत्यगूढम् । वैतालिकः पठति उन्निद्रेति[1] । अत्र चुम्बतीति पदेऽधरमहणलक्षणस्यार्थस्य(स्यन्त) ममद्भावात्तज्झटित्येव संश्लेपोपक्रमलक्षण-व्यङ्ग्यार्थप्रतीति-(86b) रिति ध्वनेरगूढता । अत्रासीदित्यादि । प्रतिपादमात्रेति (-मत्रेति )[2] पादोपादानात् प्रत्येकमेव वृत्तान्तानामद्भुतत्वम् । 'मृगाक्षि', 'मुग्धाक्षि', 'तन्वी'त्यायामन्त्रणं सर्वत्र सुगत (स्वगत)-नायिकाविशेषं बोधयति । रामभद्रोऽत्र वक्तेति । केनापीत्यनेन गयेति प्रतीयमानं वाच्यायमानम् । ध्वनेरेवैतदुदाहरणं भवतीत्याह— तस्याप्यत्रेति ।

अपराङ्गतानिबन्धनं गुणीभावमाह—अपरस्येति । वाक्यार्थीभावः प्राधान्यं, तेन चमत्कारकारीत्यर्थः । यद्यपि यथा यथा व्यभिचारिणामनुकूलरसनिष्पत्त्युपयोगित्व-लक्षणोऽङ्गभावस्तथा तथा न रसानां, तथापि निर्वाह्यस्य रसादेः परिपोषप्रकर्षरूपोपकारित्वा-दस्याङ्गत्वम् । तथा स्मरणविह्वलहृदयत्वाच्छोकावेगमधिकतरमुपजनयदतीव करुणस्योपकारक-मङ्गाङ्गिभावादेव च विरोधिनोरपि रसयोरेकवाक्यानुप्रवेशो न दोषाय । स्वयं लब्धपरि-

---

१ कुत्रापि रामनाटकेऽयं स्यादिति वितर्क्यते ।

२ अत्र प्रत्येकमेवाद्भुतत्वं व्यनक्तीति प्रदीपधृतमन्तव्यं श्रीधरकृतमूलविवरणानु-प्राणितमित्यनुमीयते ।

यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥११७॥

( महा. भा. स्त्री २४।१९ )

अत्र शृङ्गारः करुणस्य।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥११८॥

अत्र भावस्य रसः।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥११९॥

( पद्मगुप्तप्रशस्ती )

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य।

बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशो र्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥१२०॥

अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ।

---

दीपकत्वे वा कथं रसत्वम्? अतो रसत्वगङ्गत्वयोरन्योन्यविरुद्धमित्याशङ्काममे (द्वाऽमे) (७म उ:) निपरिहरिष्यते। कैलासेत्यादि—कैलासालयः परमेश्वरः, भालं ललाटं, कुपितायां पार्वत्यां परमेश्वरः पादयोः पतति। सा च तदैव प्रसन्नेति तात्पर्यार्थः। अत्युच्चा इति—किमपि मनागपि न क्लान्ताऽसीति भूविषयो रत्याख्यो भावोऽङ्गं राजविष-(87a) यस्य रतिभावस्येति।

बन्दीत्यादि—हठहृता स्त्री बन्दी। पश्यतां[ प्रेयसा ]मित्यनादरे षष्ठी

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।

ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणात् ॥१२१॥

अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां, कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।

अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरो-

दवस्थाम् ॥१२२॥

अत्र त्रासोदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः

कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।

प्रमोदं वो दिश्यात् कपटवटुवेषापनयने

त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥१२३।

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत् कश्चिच्चल चपल रे का त्वराऽहं कुमारी

हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः

कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥१२४॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविरोधौत्सुक्यानां शबलता ।

एते च रसवदाद्यलङ्काराः । यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि तथाऽपि कश्चित् ब्रूयादित्येवमुक्तम् ।

---

परयतस्तान्ननास्त्येवेत्यर्थः । असोढेत्यादि 'अथाप्यदमुपेक्षित इत्यसहनत्वं तपसः । अभियुक्त उद्योगेनाश्रित.' ( इ. सं. ४० पृ. ) पश्येदित्यादि—अनेनान्यगोपनीय- पुरुषव्यापारः शङ्काहेतुराक्षिप्यते, अतएवान्यदर्शनं दोषत्वेनोद्भावयति । स्वात्मनाऽनुमन्यत इति कृत्वा प्रारब्धानुबन्धाऽसूया प्रकाशिता । चलेत्यादि भणति । अथ तत्समाभासनगर्भं त्वरामास- निवारणम् । धृतिसूचकमाह का त्वरेति एवमहं कुमारीत्यादौ यथाक्रमं स्मृत्यादयो द्रष्टव्याः ।

भावुक्तं दर्शयति एते चेति ( ४ उ ) चोऽवधारणे । एत एव रसवदाद्यलङ्काराः

**यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथापि 'प्रधानेन व्यपदेशा भवन्ती'ति क्वचित् केनचिद्व्यवहारः।**

---

दण्डिभामहादिभिर्ये लक्षितास्त इत्यर्थः। भामहेन हि 'रसवद्दर्शितस्पष्टशृङ्गारादि-रसोदय'मित्यादिना (भा. का. अ. ३।८) यत्र वाक्यार्थीभूतो रसः स रसवदलङ्कारस्य विषय इत्यभ्युपगतम्।[3] एतच्चासमीचीनं, रसस्य वाक्यार्थीभावेऽलङ्कारत्वानुपपत्तेः। अलङ्कारो हीच्छाऽऽयत्तः पृथक्सिद्धचारुत्वहेतुः प्रसिद्धो, न पुनरात्मैवात्मनोऽलङ्कारः सम्भवति। नहि य एव रसोऽलङ्कार्यः स एवालङ्कारो भवति। एवमुद्भटेनापि 'यत्र चेतनानां वाक्यार्थीभावः स रसवादाद्यलङ्कारस्य वि (47b) षय इति [भामहविवरणे] (ध्व. आ. २।५ वृ.; लो. द्र.) यदुक्तं तदपि न सम्यक्, उपमाऽऽदीनां प्रविरलविषयत्वापत्तेः। यतो रामादिचरितवर्णनमयं काव्यं, तत्र चोपमाऽऽदयः सन्तोऽपि न पृथक् सत्तां लब्धुं क्षमा भवेयुः, रसवदाद्यलङ्कारैरेव काव्यस्य स्पष्टीकारात्। 'अचेतनवर्णने तु क्वचित् सम्भवात् यदि वा निर्विषयतैव तेषां स्यात्

---

3 एते चेति प्राचीनैर्भामहादिभिरनुन्मीलितध्वनितत्त्वदृग्भिरिति शेषः। रसोऽस्तालीति कृत्वाऽऽपाततस्तन्मन्तव्यम्। मतस्यास्य विचारश्चीकाव्यता ध्वन्यालोकीयवृत्तितोऽभिनवगुप्तादीनामाकूततो वाक्यानुसरणेन च दर्शित एव। 'इह हि तावद्भामहोद्भट-प्रभृतयश्चिरन्तनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकत्वनिक्षिप्तं मन्यन्त' इत्यलङ्कारसर्वस्वग्रन्थ आदौ विवृतम्। भामहदण्डिप्रभृतीनां ग्रन्थेष्वाक्षादिपदेनोपात्तानां प्रेयऊर्जस्विसमाहितद्विप्रकारोदात्तानां यथायथं निर्दर्शितस्वरूपाणाञ्च निर्देशो दृश्यते। अत आह यद्यपीति। वस्तुतस्तु भावोदयादीनां रसशास्त्र-जलधिमन्थनालोडितादावाप्तत्वैव लाभ इति न तेषां तत्र पृथङ्निर्देशः। श्रीधरानुयायिनष्टीकाकृतः सर्वेऽप्यत्र रुचकृतालङ्कारसर्वस्वग्रन्थमन्तव्यमुपनिबन्धनीकृत्यैव मूलप्रतीकमेवं विवृण्वन्ति। 'इदानीन्तनाः पठन्ती'त्यत्र श्रीधरग्रन्थस्वरसाम्मम्मट-भट्टानां तेषां पारिभाषिकभावेनालङ्कारोद्देशो नाभिमत इत्यायाति, परन्तु न चैतावता रसवदादीनामलङ्कारवत्त्वातो निष्प्रमनं यथा कैश्चित् प्रतिपादितं 'परमतमेतदस्मन्मते रसवदादीनां नालङ्कारत्व'मिति वदद्भिः, ध्वनिकृतां मते तेषामलङ्कारतयैव संज्ञितत्वात्, 'स एवालङ्कारशब्दवाच्यो योऽङ्गभूतो न त्वन्य' इति लोचने निर्धारितत्वाच्च। अत्र टीकाग्रन्थे भामहेनेति यत्कारिकाऽर्धं यथोद्धृतं तत्तद्ग्रन्थे तथैवानिकन्तया दृश्यते। भामहीयकाव्यालङ्कारे 'शृङ्गारादिरसं यथे'ति पाठः।

यस्माद् यत्राप्यचेतनानां वा रसवदाद्येकार्यीभावस्तत्रापि यथाकथञ्चिच्चैतन्याध्यारोपाच्चेतनवृत्तान्तयोजनया भवितव्यमेव' ( का. अ. सू. वृ. ४।४५ वृः ) ततश्चोपमाऽऽदीनां विषये सर्वत्र रसवदादेः साम्राज्यमिति। अथवा पारमार्थिकचेतनानां भावो रसवदादेर्विषयो नत्वध्यारोपितचैतन्यानामित्युच्यते ( च्येत ) तदानीं रसनिधानभूतस्य काव्यप्रबन्धस्य नीरसत्वमभ्युपगतं स्यात्' ( ध्व. आ. वृ. २१६ )। यथा—तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा। चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते चण्डी मामवधूय पादपतितं जातानुतापेव सा॥ ( वि. उ. ४।१८ ) इति। अत्र ह्युन्मादेन प्रकाश्यमानो विप्रलम्भशृङ्गार एव विलापेन करुणो वा विजृम्भते। अध्यारोपिताच्चैतन्यात्तदनुमतस्य रसवदाद्यलङ्कारस्यापि यद्ययमविषयस्तर्हि का वार्ताऽत्र रसस्येति भावः। तस्मात् सर्वैरेवानुप्रासोपमाऽऽदिभिरलङ्कारैरलङ्कार्ये (891)[4] काव्यस्यात्मभूते रसे रसध्वनिः, अङ्गभूते हि रसादौ रसवदाद्यलङ्कार इत्ययमेव पक्षः श्रेयानिति। 'यथा च चन्द्रादिनोपमानेन मदनाद्यलङ्क्रियते तथा रसादिनाऽपि रसादिकं शरमोक्रियते इति स्वसंवेदनसिद्धमेव, ततश्चोपमाना-( पमाऽऽ ) देरिव रसादेरप्यलङ्कारता युज्यत एव। अतएव रसेन विभावादीनां मध्ये किमलङ्क्रियत इति यत् केनचिच्चोदितं तदनभ्युपगमपराहतमेव प्रस्तुतस्यार्थस्यालङ्कार्यत्वेनाभिधानात्' ( ध्व. आ. २१५ पृ.; लो. ७२।७३ पृ. )। नन्वेवं महापुरुषचरिताङ्गतालक्षणस्योदात्तालङ्कारस्य निर्विषयत्वं स्यात्, तद्विषयस्य रसवदादिना व्याप्तत्वात्? न, स्वविषये तस्यैतदपवादकत्वात्[5], रसादौ च वाक्यार्थीभूते यत्र रसादीनामङ्गत्वं स

---

4 आदर्शलिपेर्लेखकानवधानवशात् पत्रसंख्याऽत्रैव परमेकाधिकसंख्ययाऽङ्किता।

5 रसस्यालङ्कारताभुक्तिस्वीकाराऽभिनवगुप्तसमकालीनानां सरस्वतीकण्ठाभरणकृतो राजेन्द्राणामपि स्वरस.। परन्तु न स पक्षो ध्वनिप्रस्थानीयस्तदनुप्राणितो वा। रसवतोऽतिव्याप्तिमतो महत्त्वं वक्रोक्तिजीविते प्रतिषिद्धं यथा—'अलङ्कारो न रसवत परस्याप्रतिभासनात्। स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि॥ 'काव्ये तस्मिन्नलङ्कारो रसादि'रिति कारिकायां रस एवालङ्कारः केवलो न तु रसवदि'त्यादि 'मत्प्रत्ययस्य जीवितं न किञ्चिदीहितं स्या'दित्यन्तश्च युक्तितयोपन्यस्त' तत्र। 'तन्वी मेघजलार्द्रे'-त्यादौ 'तरङ्गभ्रूभङ्गे'त्यादौ च ध्वन्यालोकोदाहृतपद्ययोरुभयत्रैव रसत्वमलङ्कारत्वञ्च प्रतिभासेते। तस्मान्न कथञ्चिदपि तद्विधानस्य दुरवधानतेति उन्मतं कदाचित्तच्च तत्र। परं नव्यतराणामलङ्कारनयप्रतिष्ठापयितॄणां नैतद्रुचिकरम्। नापि मम्मटग्रन्थे तस्यानिर्देशो विनिगमकः स्यात्, तद्ग्रन्थस्य खण्डितत्वे प्रवादाविर्भावादित्यपि केचित्।

रसवदलङ्कारस्येति । तत्र रसवदुदाहरणं 'अयं स इत्यादि श्लोकद्वयम्। एवं प्रियतरं प्रेयो रत्या प्रियतयोपलक्षितं भावरूपं विद्यते यत्र निबन्धने व्यापाराध्वनि तत् प्रेयस्वत्। यथा **अस्युच्चा** इति । यथा त्वं पृथिवीं धारयसीत्यनलङ्कृतो वाक्यार्थस्तथा नायं सुन्दरतरीभूतो वाक्यार्थ इति प्रेयस्वत्वलङ्कारता । एवमुत्तरत्रापि बोद्धव्यं यदाह—रत्यादिकानां भावानामनुभावादि-(87b) सूचनैः । यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम् ॥ इति (का.अ.सा.सं. ४।४३) रतिश्चात्र देवविषया, न तु कान्ताविषया । ऊर्जो बलं विद्यते यस्य तदुर्जस्वद् यथा **वन्दीकृत्येत्यादि** । हठसंभद्धो रागकारणकः शास्त्रविरुद्ध इत्यूर्जस्विता । कामक्रोधादिभिः कारणैः शास्त्र-विरुद्धेन रूपेण रसभावा यत्र निबध्यन्ते तत्रायमलङ्कारः । शास्त्रविरोधे तु रसवत्प्रेयस्वद-लङ्कारावेव यदुक्तम्—( का. अ. सा. सं. ४।४६ ) अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् । भावानाञ्च रसानाञ्च बन्ध ऊर्जस्व(स्वि) कथ्यत इति । प्रशमः परिहारः समाहित इत्यनर्थान्तरं यथा **अविरलेत्यादि**। यदाह (का. अ. सा. सं. ४।८) रसभावतदाभासवृत्तेः प्रशमबन्धनम् । अन्यानुभावनि शून्यरूपं यत्तत् समाहित'मिति । अस्यार्थः—अनौचित्यप्रवृत्ता रसा भावा वा तदाभासशब्दवाच्याः, तेन न शास्त्रविरुद्धानां रसानां भावानां वा यत्र प्रशान्तिर्न च बध्यते ( निबध्यते ) तत् परिहाररूपत्वात् समाहितम् । ( का. अ. सा. सं लघुवृ. ) न चात्र रसान्तरस्य प्रादुर्भाव इत्याह—अन्येति । रसस्यानुभावैर्नि शेषेण शून्यमिति ।

**कश्चिद् ब्रूयादिति** विच्छित्तेनामानन्त्यादिति 'भावः । तथाहि भावोदयभाव-सन्धिभावशबलताश्च रसवदादिभ्यः पृथगलङ्कारा इदानीन्तनाः पठन्ति । आचार्यो-ऽप्याह—काव्यशो( 90a )भाकरान् धर्मानलङ्कारान् प्रचक्षते । ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ इति ।

---

6 अनेनैतत् सिद्धप्रायमिति श्रीधरस्याशयः । एतच्च "तत्र केचिदाचक्षीरन्", ( ध्व. आ. ५ पृः ) "अन्ये ब्रूयुः", ( ६ पृः ) "अपरे कथयेयुः" ( ८ पृः ) "अन्यो ब्रूयात" ( १६४ पृः ) इत्यादिभिर्भूयोभिरभियुक्तानां प्रयोगैः प्रतिपन्नमेव । एवमपि स्याद्यदाचार्यमम्मटात् प्राचीनतरस्य कस्यापि मतमुद्दिष्टं यस्यैव प्रतिध्वनिं रुय्यकोऽलङ्कारसर्वस्वे करोतीति ।

7 कश्चिद् ब्रूयादिति तन्मन्तव्येन स्वाकूतन्निगूढत्तरथैवेति प्रतिभाति । खण्डितग्रन्थ-परिपूरकोऽलकभट्टोऽप्यत्र तूष्णीमास्ते । अत्र ब्रूयादित्यंशे प्रदीपकृता मन्तव्यं 'ननु गुणीभूतो रसो रसवद्, भावस्तु प्रेयो, रसभावाभासावूर्जस्वि, भावशान्तिः समाहितमित्येषां पूर्वेषा-( उद्भटादीनां ) मलङ्कारव्यवहारो, न पुनर्भावोदयादिषु ।

जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥१२५॥
(वाचस्पतिभट्टस्य)

---

यद्यपि यत्र यत्र गुणीभूतव्यङ्ग्यत्वं तत्रास्त्येवेति नियमस्तथापि यत्र गुणीभूतव्यङ्ग्यस्तत्र 'यदा तात्पर्येण रसभावेन पर्यालोचना क्रियते तदा ध्वनेः सद्भावादनयोः साङ्कर्यमस्त्येवेत्यभिप्रेत्याह **यद्यपीति**। परिहरति—**तथाऽपीति**। अत्र हेतुः **प्रधानेनेति**—प्राधान्यन्तु चारुत्वातिशयनिबन्धनम्। तथाहि "पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्। सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ (कु. स ७।१९) (ध्व. आ. ३।४० वृ.) इत्यादौ यदा तात्पर्येण रसादिपर्यालोचना क्रियते तदानीं हर्षेर्ष्यासाध्वसादिसंवलितलज्जालक्षणव्यभिचारिप्रकाशितस्य शृङ्गारस्य प्रतीतिरुदेतीति यद्यपि ध्वनित्वं तथाऽपि हर्षादिसंवलिताया लज्जाया व्यज्यमानाया अपि 'निर्वचन'मित्यनेन स्वोक्त्या किंचिद्विषयीकृतत्वाद् गुणीभाव एव शोभाऽतिशयहेतुरिति तेनैवात्र व्यवहारः।

अथ वा यत्र (वाच्यस्य) वाक्यार्थीभूतस्याङ्गभूतं शब्दशक्तिमूलमर्थशक्तिमूलञ्च यथाक्रममुदाहरति—**जनस्थान** इत्यादि। जनस्थानं [जनानां स्थानं] दण्डकारण्यम्। **कनकमृगतृष्णा** [कनके मृगतृष्णा कनकमृगे] भ्रान्तिश्च। **वैदेहीति** सम्बोधनं प्रार्थनाऽऽवर्जं पदद्वयञ्च। **लङ्काभर्तुः** रावणस्य. (90b) 'अलमीपद्रूपत्वात् [काभर्तुः] कृतगितस्य च

---

तत् कथमेतदुच्यत इति चेद् 'यदन्यवचनं विना मद्वचनि नाऽऽरम्भाद्धि'कश्चित् प्रेक्षावान् प्रवृत्याद् रसादिना तुल्यन्यायादि'ति ग्रन्थगमनिकां समर्थयति। प्रदीपोपरि प्रभा तु 'तदुक्तमलङ्कारसर्वस्वकृता भावोदयभावसन्धिभावशबलताऽऽद्योऽपि पृथगलङ्काराः' इति विवरणेन प्रेक्षावन्तं निरूपयति च।

8 वाचस्पतिभट्टस्यायं श्लोक इति प्रवाद। जनस्थान इति पदं रामकुलास्थानादावित्यर्थे प्रकृतोपयोगि। एवं वदनपरिपाटीषु घटनेति वदनं वचनं व्याहारक् स्तोत्रस्या घटना घटनोद्योग इति निर्णिण्णयाचरपक्षे। उभयत्र श्लेषाश्रयतदेव शैथिल्यं सोढव्यम्। अत्र ध्वनिरेकालङ्कारोऽपि वाच्याक्षिप्ततया प्रतीयमानरसनोमारोहति। रामस्तुतिपराणामुद्धरणयानामेवैव गतिरित्यवधेयम्।

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥१२६॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः।

वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम्।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२७॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्।

यथा वा—गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।

---

भर्तुः। वदनेषु दशसु इषुघटना शरयोजना वक्रोक्तिपरम्परा च। कुशलवौ सुतौ यस्याः सा सीता शुभधनता च। तदित्थं श्लिष्टपदमाहात्म्याच्च शब्दशक्तिमूलानुरणनोपमतत्सदृश उपमानोपमेयभावः प्रतीयमानोऽपि मयाऽऽप्तं रामत्वमित्यनेन वाच्यतां नीतत्वाद् (नीतो) दैन्यस्य व्यञ्जकमेव।

आगत्येत्यादि—विसंष्ठुलत्वं संकुचितत्वं विलुलितत्वञ्च। प्रसादनं विकस्वरत्वञ्च। पादो रश्मिश्च। नायकेत्यादि—नायिकानायकयोर्वृत्तान्तः। अध्यारोपेणैव स्थित इति—नत्वत्र रविकमलिनीवर्णनरूपो वाच्यो वाक्यार्थीभूतः, तथा नायकवृत्तान्तरूपोऽर्थः प्रतीयमानोऽपि वाक्यार्थतां प्रतिलभते, विशेष्याभिधायिनोऽभयथाऽप्रतिपादकत्वाभावात्। अतः प्रतीयमानस्य तदङ्गत्वम्। भ्रमिमित्यादि—बहिरन्तःसंवित्तिविरहः प्रलयः। अत्र भ्रमिप्रभृतीनां मरणान्तानां साधारणधर्मपर्यालोचनया विषमिति पदं न जलमात्रमभिधाय विरम्य (विरन्तु)[१] शुतसहते, किन्तु व्यङ्ग्यमनुधावति, तं विना जलदभुजगरूपणस्यासङ्गतार्थत्वात्, असिद्धे विप्रलम्भे च भ्रमिप्रभृतीनां निसर्ग[तोऽ]सम्भवादङ्गत्वं स्वभावसिद्धमेवेति तदुपनिबन्धो न दोषाय।

---

9 अत्रेतरत्र च क्वचित् 'न' 'ल' 'श' 'ङ्ग' 'र्ण' 'न्तु' इत्याद्यनययोर्व्यत्यासादयमादर्श-टीकायां कुतोऽपि वङ्गीयलिप्यादर्शतो विहित इति संशया जागर्ति।

इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥१२८॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य। एतच्चैकत्रैकवक्तृगतत्वेना-परत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः।

अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥१२९॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम्।

सन्दिग्धप्राधान्यं यथा—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१३०॥
(कु. स. ३।६७)

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः।

तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥१३१॥ (म. वी. च. २।८)

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

---

गच्छामीत्यादि—विपरीतलक्षणया 'गच्छ गच्छसि चेत् कान्ते'त्यादिना (का. प्र. २।१४१) (१११) यदेवमेकान्ते स्थितोऽप्युदासीन इत्यच्युतपदद्योत्यम्। दर्शनेन किं तृप्तिरुत्पद्यते उपभोगेनैवोत्पद्यते। इतजन इति लोकत्वावदन्यथा मन्यते तत्र किमित्यात्मानं वञ्चयावः। आमन्त्रणं ज्योत्स्नरणम्' (ध. सं. ४१)। उदाहरण-द्वयप्रयोजनमाह—एतच्चेति। अदृष्ट इत्यादि. अत्र वक्त्रभिप्रायरूपस्यास्य व्यङ्ग्यस्य वाच्येन सह चोरजलतरङ्गोलीभावो न तु स्फुटतया पृथक्प्राधान्यमतोऽस्फुटत्वमित्याह—अत्र व्यङ्ग्यं क्लिष्टमिति। हरस्त्वित्यादि—अत्र वाच्यव्यङ्ग्ययोरेकतरस्याप्राधान्यानध्यवसायात् सन्देहसङ्करवत् सन्दिग्धप्राधान्यम्। ब्राह्मणेत्यादि—इदं हि रावणं प्रति परशुराम-

काकाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥१३२॥
(वै. सं. ११५)

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।

असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए वहुए सीअन्ति अंगाइं ॥१३३॥ (गा. स. वै. ८७६)

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्।

---

दूतवाक्यम्। अत्र साम वाच्यं, दण्डश्च व्यङ्ग्यः, अनयोश्चाप्रस्तुतप्रशंसायामिव समं प्राधान्यं, द्वयोरपि परस्परनैरपेक्ष्येण चमत्कारास्पदत्वात्।

मथ्नामीत्यादि—भवतामिति स्वपक्षीयान् प्रति। **पणेन** देयभागेन। अत्र न कोपादित्युच्चारणकाल एव दीप्तता, न गद्गदसाकाङ्क्षकाकुबलाक्षिप्तत्वाभिधेयस्य निषिध्यमानतयैव युधिष्ठिराभिमतसन्धिमार्गक्षमाऽऽह्यत्वाभिप्रायेण प्रतीतिरित्याक्षेपोक्तिरेव ध्वनिसम्भावनापरिहारिणी[10]। 'आक्षेपालङ्कारोऽत्र एवात्र लक्षणेति य आहुस्ते न सम्यक् परामृष्टवन्तः, उक्तक्रमेण मुख्यार्थबाधादिसामग्रीविरहेण लक्षणाया अनवकाशात्।' (ध्व. आ. लो. ३।३८ वृ:) वानीरकुडङ्गोड्डीनशकुनिकोलाहलं शृण्वन्त्याः। गृहकर्मव्यापृताया अपि वध्वाः सीदन्त्यङ्गानि॥ (92b) वानीरो वेतसवृक्षः, कुडङ्गं लतागृहम्। तदिह सुन्दरत्वं सीदन्त्यङ्गानीत्यनेन पदेन। तदित्थमगूढताऽऽदिवशाद् गुणीभावे सति यद्गाद्ध्वनिर्ध्वनिनैव ध्वंस्यते तत एवास्य वक्ष्यमाणलक्षणसमासोक्तिद्विधाऽऽक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्ताप्रस्तुतप्रशंसाऽऽदौ वस्तुमात्रस्य रूपकदीपकापह्नुतितुल्ययोगितासन्देहादावुपमाद्यलङ्कारस्य व्यङ्ग्यस्यापि वाच्यस्योपकारकतया

---

10 एवमपि 'निःशेषच्युतचन्दन'मित्यादौ ध्वन्युदाहरणतया प्राक्प्रदर्शिते शुद्धध्वनित्वमसम्भाव्यम्। तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करसंसृष्टिपक्षावत्यन्तमनुपादेयाविरयर्वाग्भवाः केचन गुणीभूतव्यङ्ग्यत्वमेवावधारयन्ति। युक्तिस्तु चन्द्रालोकटीकायां नागाभट्टकृतायां द्रष्टव्या।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥**

**यथायोगमिति "व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा। ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्" (ध्व. आ. २।३०) इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम्।**

---

गुणीभावादलङ्कारसंदृतावन्तर्भावो भामहादिभिश्चिरन्तनालङ्कारकारैरभ्युपगतोऽपि निर्भर्त्स्यमिव एवेति। एतच्चालङ्कारप्रस्तावे यथास्थानं निगदिष्यते। रसवदादौ तु रसादीनां गुणीभावः प्रतिपादित एव।

एवमिति (**एषामिति**) गुणीभूतव्यङ्ग्यस्य प्रकाराणाम्। **पूर्ववदिति** ध्वनिप्रकारवत्। एवं तावद्रूपता प्रमक्तेत्यत आह **यथायोगमिति**। अङ्गित्वेन व्यङ्ग्यतासङ्गोऽपि (सङ्गेऽपि) हि अलङ्काराणां द्वयी गतिः। कदाचिदङ्गभूतवाच्यालङ्काररहितेन केवलवस्तुमात्रेण व्यज्यते यथा—लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन् स्मेरेऽधुना तव मुखे तरलायताक्षि। क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः॥ इति। अत्र केवलवस्तुमात्रेण चन्द्रतुल्यं वदनमिति रूपकाभिव्यक्तिः। कदाचिद् वाच्यालङ्कारेण यथा—स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान्। योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः॥ यो वियन्महीतलव्यापिनो महोदधेः कुम्भैः परिच्छेदं कर्तुं शक्त इत्यतिशयोक्त्याऽऽक्षिप्तः समुद्रस्य कुम्भ (कुम्भैः) मानासम्भवादभीष्टवर्णनप्रतिषेधरूपो हयग्रीवगुणबाहुल्यरूपव्यङ्ग्यविशेषाभिधितसयाऽऽक्षेपः प्रतीयमानो गुणीभूत इति। अत्र वस्तुपेक्षया सर्वत्रालङ्कारस्य चारुत्वात् प्राधान्यमिति (ध्व. आ. २।२८ वृ द.)। आद्यस्य स्वरूपमाह—**व्यज्यन्त** इत्यादि। अतोऽत्र गुणीभावः सर्वथैव नास्तीत्याह **ध्रुवमिति**। **तासा**मित्यलङ्कृतीनाम्। अत्रैव हेतुमाह **काव्येति—काव्यस्य** कविव्यापारस्य **वृत्तिः** प्रवृत्तिस्तदाश्रयात्तथाविधव्यङ्ग्यालङ्कारप्रवणायत (प्रवणतया)। ध्वन्यङ्गतेति—अङ्गता च यद्यपि व्यङ्ग्यत्वेन व्यञ्जकत्वेन च सम्भवति तथापीह प्रकरण(णे) व्यङ्ग्येन मन्तव्या। तेन ध्वन्यङ्गता ध्वनिभेदत्वमित्यर्थः। **ध्वनिकारोक्तदिशा** ज्ञानेनेति।

एतेऽप्यष्टौ गुणीभूतव्यङ्ग्यस्य भेदाः पूर्ववत्सङ्कलितक्रमेण[११] सजातीयैः सह षट्त्रिंशत्

---

११ एतच्च गणितमतानुसारि $\left(\frac{n(n+1)}{2}=\frac{8\ 9}{2}\right)$ सयुक्तिकमियं गणनाशैल्यस्माभिरलङ्कारकौस्तुभे मौक्तिकावल्यां (६६—६८ पुः 'र' संज्ञितटिप्पन्यां) प्रदर्शितेत्यतो विरम्यतेऽत्र।

साल्ङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।

साल्ङ्कारैरिति तैरेवाल्ङ्कारैः, अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

सगुणीभूतव्यङ्ग्यैः साल्ङ्कारैः सह प्रभेदैः स्वैः ।

सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥ इति (ध्व. आ. ३।४४)

---

(३६) संख्यकाः । शुद्धभेदाष्टकयोजनेन[12] च भेदोत्तमाः स्युश्चतुश्चत्वारिंशत् (४४) । एवं व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां द्विधा व्यवस्थितेः काव्ये ध्वनिगुणीभूतव्य(92b)ङ्ग्ययोः परस्परसम्पर्कैः बहुप्रकारत्वं दर्शयति—साल्ङ्कारैरिति, अतएव ध्वनिनिर्मातुः सम्मतिं कथयति—तदुक्तमित्यादि । तस्य ध्वनेः प्रभेदैर्गुणीभूतव्यङ्ग्येण वाच्यालङ्कारैश्च सङ्कर-संसृष्टिव्यवस्थायां क्रियमाणायां स्वप्रभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारसङ्कीर्णो वाच्यालङ्कारसंसृष्टः संसृष्टालङ्कारसङ्कीर्णः संसृष्टा-लङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते । तत्र स्वभेदं प्रति गुणीभूतव्यङ्ग्यं च प्रति संकरसंसृष्टी प्रागुदाहृते एव । अधुनाऽलङ्कारगते ते प्रदर्श्येते । तत्र व्यङ्ग्यत्वे सत्य-लङ्काराणामुदाहृतभेदाष्टक एवान्तर्भाव इत्यभिप्रेत्य वाच्यालङ्कारापेक्षयोच्यते । तत्र वाच्या-लङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यस्यापेक्षया रसवति सालङ्कारे वाच्ये सर्वत्रैव सुव्यवस्थितम्—'यथा 'चलापाङ्गा'-( अभि. श. १।२० ) मित्यादौ । अत्र रूपकव्यतिरेकस्य शृङ्गारानु-

---

[12] परन्तु मूलभूतमिदमष्टधा कल्पनं सूक्ष्मेक्षिकया विचारपदमर्हतीति विदग्धैः कैश्चिद्विमतिः सूचिता । आचार्यहेमचन्द्रेण काव्यानुशासने 'असत्सन्दिग्धतुल्य-प्राधान्ये मध्यमं त्रेधे'ति सूत्रयित्वा 'इति त्रयो मध्यमकाव्यभेदा न त्वष्टा'विति वृत्तौ विवृत्य स्वकृतविवेके 'न त्वष्टा'विति यथाऽऽह मम्मटः—अगूढ'मित्यादिना स्वकीय-स्वरसः सूचितः । गुणीभूतव्यङ्ग्यस्य भेदान्तरं न सम्भवतीत्याहुरलङ्काररत्नाकर-कारादयोऽपरे विपश्चितः । एषैव तेषां वाचोयुक्तिः । 'कस्यापि गूढप्रतिपत्तिरस्ति यत्रैव तत्रैव परस्य न स्यात् । धीभेदतस्तेन निगूढतायां ध्वनिः स्फुटत्वे तु न चेति वाच्यम् ॥ अस्ते प्रधानं न भवेद्गुणत्वं वाच्यं प्रधानं यदि तत् कुतः स्यात् । सौन्दर्ययोगातिशयेन किं वा व्यङ्ग्येण साक्षादुपबृंहणाद्वा ॥ व्यङ्ग्यस्य सौन्दर्यविशेषहानेरन्याङ्गभावाद्यदि वा गुणत्वम् । तदेव वाच्यं न पुनः स्फुटत्वं नरान्तरादौ तदनिश्चयेन ॥' इति । अलङ्कारसर्वस्वे उपोद्घातग्रन्थोऽपि मतमिदं करीकरोतीत्याभाति । परं यद्व्यङ्ग्यस्यास्फुटत्वे काव्यस्य गुणीभूतव्यङ्ग्यसंज्ञा न सेत्स्यतीति न तन्मतं सर्वस्वकृतो यथाऽलङ्काररत्नाकरकाराणाम् ।

अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥४७॥

एवमनेन प्रकारेणावान्तरभेदगणनेऽतिप्रभूततरा गणना। तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं का गणना तु सर्वेषाम्।

---

ग्राहकत्वं स्वभावोक्तेः शृङ्गार एवानुप्रवेशः' ॥ (ध्व. आ. लो. २।२० वृः) उप्पहजाआए असोहिणीए फलकुसुमपत्तरहिआए। वोरीए वइं देन्तो पामर हो ओहसिज्जिहसि' ॥ उत्पथजाताया इति न तथा कुलोद्भूतायाः। अशोभनाया इति लावण्यरहितायाः। फलकुसुमपत्ररहिताया इति पत्रादिरहिताया। [इत्येवंभूताऽपि काचित् पुत्रिणी वा आलादिपक्षपरिपूर्णतया संबन्धिवर्गपोषिता वा परिरक्ष्यते।][13] बदर्यां वृत्तिं ददत् पामर भो हसिष्यसे सकललोकैरिति' (ध्व. आ. लो. २१६ पृः)। तदिह पामरस्वभावोक्तिर्वा ध्वनिर्वेति (१३२) प्रकरणाद्यभाव एकतरग्राहकं प्रमाणं नास्ति। यद्यप्यलङ्कारोऽवश्यमेव रसमनुगृह्णातीति प्रतिपादितं तथापि यत्नोपकान्तस्यालङ्कारस्य निर्वाह एव रसाभिव्यक्तिहेतुस्तस्य सङ्कराभावात् संसृष्टत्वम्। एतावदेव 'विवक्षा तत्परत्वे'नेत्यादिना 'नातिनिर्वहणैषिते'त्यन्तेन (ध्व. आ. २।१६) ध्वनिकृता प्रतिपादितम्। यथा—कोपात् कोमललोलबाहुलतिकापाशेन बद्धा दृढं नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः। भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥ (अ. श.) अत्र हि यथा बाहुलतिकायाः पाशेन रूपणं तथा यदि वासभवनादीनामपि कारागृहादिभिः स्यात्तदानीमेवौचित्यमिति रूपकस्यानिर्वाह एव रसपरिपोषाय जायते। एवं वाच्यालङ्कारैः सह संसृष्टिः पदाश्रयेणैव न तु वाक्याश्रयेण यथा दीर्घीत्यादि (मे. दू. पू. ३१)। अत्र 'मैत्री'पदे सुहृत्तो विलक्षणार्थविवक्षया झगित्येव मित्रत्वलक्षण[14]व्यङ्ग्यार्थप्रतीतेरविवक्षितवाच्यो ध्वनिः। अत्र गुणवृत्तिममाश्रयत्वात् पूर्वोक्तन्यायेन पदार्थान्[न्त]रेष्वनुप्रासोपमास्वभावोक्तिलक्षणान्यलङ्कारा-[न्तरा]णीति। संकरालङ्कारसंकीर्णो ध्वनिर्यथा—दन्तैः क्षतानि करजैश्च विपाटितानीत्यादि[15]

---

13 बन्धनीगर्भस्थमन्दर्भो ध्वन्यालोकलोचनग्रन्थतः पूरितः।

14 'सदैवानुमतः सुहृत्' 'एकक्रियं भवेन्मित्र'मिति सुभाषितबलात् कमलसौरभेण मिश्रणादेकक्रियाकरणान्मैत्रीपदस्यान्वर्थता व्यङ्ग्यमूलेनेत्याशयः।

15 बौद्धजातकाख्यानमुपजीव्यैव श्लोकस्यास्य प्रवृत्तिः। मूलग्रन्थे रसविरोधप्रकरणेऽस्य दोषासंसृष्टत्वं सूचयिष्यते। समासोक्तिसंसृष्टेन विरोधालङ्कारेण रसस्यानुग्रहोऽत्र लोचनकृता यो दर्शितो मूलतोऽसौ 'रक्तमनसे'त्यादिपदानां श्लिष्टत्वलिङ्गमाश्रयति। दयावीरो बुद्धोऽत्रालम्बनं वाक्यार्थीभूतश्च। रक्ते रुधिरे मनोऽभिलाषो यस्याः रक्तमनुरक्तं मनो यस्या इत्यादुभयपक्षयोर्व्याख्यानम्।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि किञ्चिद्वाच्यतां सहते किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्, विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यं तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्तुर्थः

---

(ध्व आ. ३।४४ वृ )। अत्र रक्तचित्तादि-(93b) समानविशेषणेन नायिका रूपान्यार्थप्रतीतिलक्षणया समासोक्त्या सङ्कीर्णः कथं मुनीना दन्तक्षतादिस्पृहेति विरोधो यस्तेन वाक्यार्थीभूतस्य दयावीरस्य सङ्कीर्णत्वम्। सघटालङ्कारसंश्रये वाक्यार्थध्वनिर्यथा—(ध्व आ ३।४५ वृ) अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु। सोहइ पसारिअगिवाण णच्चिअ मोरवन्दाणं॥ (गा स. ६।६०) अत्राभिनवपयोदरसितेषु पथिकश्यामायितेषु पथिकाना प्रियावियुक्ताना मोहकारित्वेन निशायितेषु दिवसेषु शोभते प्रसृत (प्रसारित) ग्रीवाणा नृत्यं मयूरवृन्दानाम् इति वाच्ये विश्रान्ते 'पहिअ'-'सामाइअ' शब्दशक्त्याऽऽक्षिप्ता अभिनवेषु प्रयोगरसिकेषु पथिकसामाजिकेषु नृत्य नटाना यथेति श्लेष प्रतीयमानोऽनुरणनेन। पथिकश्यामायितेष्विलत्र श्यामा इवाचरन्तीत्युपमा पथिकसामाजिकेष्वित्यत्र पथिका एव सामाजिका इति रूपकसाम्यादुपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपस्य व्यङ्ग्यस्य ध्वने ससृष्टत्वम्। शृङ्गारादिरसानामानन्त्यञ्च प्रागेव प्रतिपादितम्। तदित्थं ध्वनेर्गुणीभूतस्य यदानन्त्यं[16] तेनैषामन्यतमेनापि प्रकारेण भूषिता भारती पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायातीति कविप्रतिभाऽऽनन्त्यं निरन्तरकाव्यस्यानन्त्यमप्यस्य प्रयोजन-(ध्व आ ४।२ द)मिति दर्शितं भवति। तथाच ध्वनि (92a) कार —ध्वनेर्यं सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शित। अनेनानन्त्यमायाति कवीनां प्रतिभागुण॥ (ध्व. आ ४।१) इति।

एवञ्चाजानिक यद्यपि ध्वनेरानन्त्य तथापि सङ्कलनाद्यात्मोपाधिक भेदमाभिप्रेत्याह संकलनेनेति। वस्तुमात्रालङ्काररसाद्यात्मकतया हि व्यङ्ग्यत्रिधा। अविचित्रमिति यत् पूर्वमपि न क्वापि वाक्यार्थेऽलङ्कारभावमन्वभूदिति तद्रूपाभावेनोपलक्षितं विधिनिषेधाद्यनेक प्रकार वस्तुमात्रमुच्यते। एतद्विपरीतन्तु विचित्रमिति। व्यङ्ग्यत्वादलङ्कार्यत्वेऽलङ्कारव्यपदेशो न विरुध्यत इति प्रतिपादयितुं सोपपत्ति दृष्टान्तमाह ब्राह्मणेति। रसादिलक्षणस्त्विति तुशब्दो व्यतिरेके। वस्त्वलङ्कारौ स्वशब्दाभिधेयत्वमपि कदाचिदभ्यासाते, अतो वाच्य-

---

16 'भेदसंख्याऽतिभूयसी'ति मूलेऽत्र यत् तत्र्यासङ्कलने नायासित तन्मतिनैपुण्य मूलमेव। यत्त्वर्वाचीनैः कैश्चिद् गणितगुणितैः संख्योदार साधितस्तेषा-

स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयेत तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेः तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

---

व्यङ्ग्यरूपतया तौ द्विप्रकारौ। रसादिलक्षणस्त्वर्थो न कदाचिद्वाच्यः किन्तु वाच्यसामर्थ्याक्षिप्त एव प्रकाशत इत्यन्वयव्यतिरेकाभ्यां दर्शयति स हीत्यादि। तथाचोक्तम्—रसोद्देशपरः श्लोके रसाध्याये मुनेश्च यः। पूर्णो नवरसास्वादात् स एव स्यात्तु नाटकम्॥ इति॥ (का. मी. अभि. भा. १४अः) केवलविभावादिवर्णने त्वस्ति रसादिप्रतीतिर्यथा (कु. स. ३।६८) विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः। साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन॥ इत्यादौ। अत्र हि अनुरागजन्यावस्थाविशेषानुभाववद्गिरिजा (94b) लक्षणविभाववर्णनामात्रादेव रसप्रतीतिः। यत्रापि हि 'पुटपाकप्रतीकाशो रामस्य करुणो रसः' (उ. रा. च. ३।१) इत्यादौ रसादिशब्दः प्रयुज्यते तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैव रसादिप्रतिपत्तिः, स्वशब्देन सा केवलमनूद्यते' (ध्व. १।४वृः)। आदिशब्दात् स्थायिभावादयः। एवं हि वाच्यत्वेऽभिनयादिरूपं लिङ्गमकिञ्चित्करं स्यात्, इतिहासादिसमत्वञ्च काव्यस्य प्राप्नोति—तस्मात् स्थितमेतद्व्यङ्ग्य एव रसादिरिति। नापि लक्ष्यस्तत्सामग्रीविरहात्।

---

मरसिकत्वमेव प्रकटयति। सार्धचतुर्लक्षभेदानां कथा तावदस्तु, एतावन्त्यपि सूक्तानि तैरधिगतानीत्यभिधानमपि महत् साहसिक्यम्। कविप्रतिभा च तत्र तत्र विपर्यस्ता सत्यात्मानमपह्नुते। न च ध्वन्यालोकश्लोकः 'एतेनानन्त्यमायाती'ति भेदप्रदर्शनतात्पर्यको व्यतिकरितभेदानामव्यपदेश्यतासूचक एव सः। बहुष्वेव सर्गबन्धश्लोकेष्वेतेषां केषामप्यसरः। कविकर्मणि व्यापृतमतित्वाद्रसादिव्यङ्ग्यतिरस्क्रियया विपर्यस्तमतीनामेषां कवीनामित्यस्ति विदग्धानां मार्मोक्तिः। सङ्कलनायास्तोपाधिकं भेदमाश्रित्यैवयुक्तिष्टीकाकृता "न विद्यते यद्यपि पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्। श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रह'मित्याचार्योक्तिमुपजीवति।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्। शब्दशक्तिमूले त्वभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम्।

अर्थशक्तिमूलेऽपि विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षा-सन्निधि-योग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि

---

एवञ्च रसस्य व्यङ्ग्यत्वमेवेति निर्णीय वस्तुनोऽलङ्कारस्य [च] क्रमेण दर्शयति। तत्र विवक्षितवाच्यस्य प्रकारद्वयेऽपि वस्तुमात्रस्य व्यङ्ग्यत्वं द्वितीयोल्लासे प्रतिपादितमेव (१६ का)। शब्दशक्तिमूले तु वस्तुनो व्यङ्ग्यत्वं ध्वनिकाराभिप्रायेण सविवादम्, अलङ्कारस्य तु निर्विवादमेवेति[17]। एवमर्थशक्तिमूले तु वस्तुनोऽलङ्कारस्य च व्यङ्ग्यत्वमिति त्रयाणामपि व्यङ्ग्यत्वं निर्णीतम्।

तत्र मतद्वयेऽपि व्यङ्ग्यस्य वाच्यत्वं निराकुर्वन्नभिहितान्वयवादिनो मताचार्यस्य तावन्मतमाह विशेष[18] इति। समयः पदार्थमात्रे सामान्यात्मनि न विशेषांशेऽस्यानन्त्यात्, व्यभिचाराच्चैकस्य। ततश्चाकाङ्क्षाऽऽदिसहकृतविशेषसंसर्गरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते सामान्यमनन्यथासिद्धेर्विशेषं गम-(95a) यतीति न्यायात्। यदाह 'पदानि स्वं स्वमर्थमभिधायोपरतव्यापाराणि, अथेदानीं पदार्थाः प्रतिपन्ना आकाङ्क्षासन्निधियोग्यताभिरन्वयमुपयान्तो वाक्यार्थमवगमयन्तीति' (शा. व्या. वि.)। नन्वेवमशाब्दो वाक्यार्थः स्यात्? नैवम्, पारम्पर्येणापि तदुपपत्तेः। तथाहि पदैरनन्वितोऽर्थोऽभिहितोऽन्वितप्रतिपत्तौ निमित्तमिति भवति। पारम्पर्येण पदार्थानामन्वितेऽपि हेतुत्वं यत्, स एवाह—न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः। सन्मात्रायमितेष्वेषु तन्मात्रेभ्यः

---

17 अत्र ध्वन्यालोकग्रन्थे 'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते' इत्यादिकारिका 'अलङ्कारो न वस्तुमात्र'' 'वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेष' इति तत्रत्या वृत्तिश्च परामृश्येते।

18 एतन्मते 'जातिरेव पदार्थ' इति सामान्य एव सङ्केतग्रहणाद्विशेषार्थबोधेऽभिधातोऽन्या काचिद्वृत्तिः समाश्रयणीयेति द्वितीयोल्लासे समुट्टङ्कितमेव। विशेषरूपत्वात् पदार्थातिरिक्तो वाक्यार्थो यत्राभ्युपगतस्तत्राभिहितान्वये वाक्यार्थानन्तरकक्षाभाविनो व्यङ्ग्यस्य वाच्यतायां वार्तैव नेत्युपालम्भनिष्कर्षः।

विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम्।

येऽप्याहुः

"शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥
अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबोधेत सम्बन्धं त्रिप्रमाणकम्॥

इति प्रतिपादितदृशा 'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवं-

---

म गम्यते॥ इति (श्लो. वा. ७।२२६) पदार्थप्रतिपादनञ्च वाक्यार्थप्रतिपत्तये प्रयुक्तानां पदानामवान्तरव्यापारो भविष्यति। नचावान्तरव्यापारस्य कारकान्तरेष्वपि व्यञ्जकत्वमिष्यते, पाकजननसमर्था हि ज्वाला काष्ठानामवान्तरव्यापारः। तथाच त एवाहुः (श्लो. वा. ७।३४३) वाक्यार्थमतये तेषां प्रयुक्तं नान्तरीयकम्। पाकज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥ इति। तदित्थं वाक्यार्थप्रतिपत्तेरन्यथाऽप्युपपद्यमानत्वादभिधाशक्तेर्द्विशेष्योपस्थितिपर्यन्तताऽपि नेष्यते तदा पदपदार्थविषयाभिधानलक्षणप्रथमकक्षाऽतिरिक्तविशेष्यप्रतीतिकक्षाऽन्तरितक्रियाकारकसंसर्गात्मकवाक्यार्थकक्षापातिनि व्यङ्ग्ये च तस्य सम्भावनाऽपि न प्रसरतीत्याह का वार्तेति। अतएव हि यो य: कश्चिद्विपश्चिच्छब्दार्थप्रत्ययं नाभ्युपैति (95b) तेन तेन पदार्थमपनुद्य न विरत एवाभिधायाः पदतिरिति(ती) रोतं (रितं) [तत्] तु [कः] स्वीकुर्यात्। तदुक्तं 'विशेषरूपवाक्यार्थमपदार्थमपीच्छता। व्यक्तिरिष्टाऽभिधातोऽन्याऽभिहितान्वयवादिना॥[19] इति।

---

19 अभिहितान्वयवादेऽभिधात एव नाखिलवाक्यबोधव्यापारनिष्पत्तिः, पदान्येव वाक्यानां मूलभूता अवयवा: शब्दार्थप्रत्ययार्थम्। अन्विताभिधानवादिनां वाक्यतोऽर्थबोधः, पदे तु प्रयोगसाचिव्येनार्थप्रत्यय ऊहापोहवशात्। तत्रापि पदार्थानां वैशिष्ट्ये स्वीक्रियमाणे किमभिधात एव कार्यसिद्धिरिति सार्थकः प्रश्नः। इत्थं यदि व्यापारस्य प्राणप्रदत्वं भङ्ग्यन्तरेण स्वीक्रियते तदा कथं काव्यादिष्वभिधातो विलक्षणस्य निखिलानन्दजीवातुभूतस्य व्यञ्जनस्य न तत्परत्वेन साक्षात् स्वीकारः! निमित्तनैमित्तिकार्थविनयेऽप्येवमेव समाधानम्। मूलग्रन्थस्यालत्यग्रत्ययवो यत् सम्पादकं सारश्च सकोयं स्वल्पमंशेन जहातीति विचक्षणानां

विधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते। परतः 'चैत्र गामानय, देवदत्त अश्वमानय, देवदत्त गां नय' इत्यादि वाक्यप्रयोगे तस्य

---

अथान्विताभिधानवादिनामपि मते तन्निराकर्तुमाह येऽप्याहुः[20]रिति। व्युत्पत्तिबलेन हि शब्दोऽर्थमवबोधयति। व्युत्पत्तिस्तु वृद्धव्यवहाराद्भवतीति प्रामाणिकाः। यदाह शब्दवृद्धेत्यादि। प्रतिपादितया दशा दर्शनेन। एतद्विवृणोति देवदत्तेत्यादि-शब्दो (शब्दे) देवदत्त गामानयेत्यादौ वृद्ध पयोजक। अभिधेयमानयनम्। तत्र व्युत्पित्सुः शब्दादी स्वावच्छ्रोत्रादिप्रत्यक्षेण गृह्णाति। अथोत्तमवृद्धप्रयुक्तात्द्वाक्यश्रवणसमनन्तरं येय प्रयोज्यवृद्धस्य स्वतन्त्रा प्रवृत्ति सा बुद्धिपूर्विका, स्वतन्त्रप्रवृत्तित्वान्मदीयप्रवृत्तिवदिति। तच्चेष्टया शब्दतद्भावभावित्वेन शब्दकारणिकां प्रतीतिमनुमिनोति। बुद्धिप्रवृत्त्यो' समानविषयत्व स्वाभाविकमेवेति य(त)द्विषयेव प्रवृत्तिरपि, शब्दस्तु स्वरूपमात्रेण नार्थप्रतिपादननिमित्तं बालवृद्धयोरविशेषप्रसङ्गात्। अतस्तदन्यथाऽनुपपत्तिमूलयाऽर्थापत्त्या तत्र शक्ति प्रकल्पयते। तदेतदाह वाच्यवाचकेति। वाच्यवाचकसम्बन्धग्रहणमेव हि व्युत्पत्ति। विषयाश्रयभावाभ्यां च वाच्यवाचकयोः सद्भावाद्व्युत्पत्तेरुभयात्मकत्वम्। बालस्तत्र व्युत्पद्यते एव नि(96a)विभाग्य वाक्यमेतत्स निर्विभागस्यार्थस्य प्रतिपादकमित्यवधारयतीत्यर्थः। नन्वेवं प्रतिवाक्यं व्युत्पत्तिरपेक्ष्येत। सा चानन्त्याद्दुष्करादेति शाब्दव्यवहारोच्छेदः स्यादित्यत आह परत इति। यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिर्वाक्येनैव च वृद्धव्यवहारस्तथाऽपि यस्य पदस्यावापे यस्यार्थ

---

दूषणोद्घोषणं न तदेकान्तमसङ्गतं, तत्र पुनर्वृत्तिकृता ध्वन्यालोक तत्तस्थलोचनमन्तव्यमखिलस्य यथोपयोगं कक्षीकृत्यावस्थापने निर्बन्ध एव मूलं नेत परं किञ्चित्।

20 'येऽपी'त्यस्य 'तेषामपि मत' इत्यभिनेयांशेनान्वय।...अत्र किमपि वृद्धसम्मतिसूचिकाया कारिकाया विशदविवरणमपेक्ष्यते, न च तदत्रादर्शलिप्यामस्तीति विचित्रत्वमेतत्। द्वितीयोल्लासटीकायामस्मदनुपलब्धाया तदासीदिति सम्भावनाऽनवकाशा 'वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिन' इति सन्दर्भस्य व्याकरणावसर एव तस्योपस्थापनयोग्यत्वात्। 'प्रतिपादितदिशे'ति प्राथिक पाठ। दिशा मार्गेणेत्यर्थान्तरम्।

**तस्य शब्दस्य तं तमर्थमवधारयतीत्यन्वयव्यतिरेकाभ्यां 'प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यत इति विशिष्ट एव पदार्थो वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम् ।**

---

भागस्यावापो यदुद्धारे चोद्धारस्तस्मिन्नर्थे तस्यैव पदस्य शक्तिरवधार्यत इत्याह तस्य तस्येति । तदुक्तम्—व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु । आवापोद्धारभेदेन पदानां शक्तिनिश्चयः ॥ इति । ननु वृद्धव्यवहारप्रयुक्ते वाक्येऽपि पदानां वाचकशक्त्यवधारणमेव नोपपद्यते, पुरुषवाक्यानां लिङ्गभावेनार्थं प्रति प्रमाणत्वाभ्युपगमात् । वाक्यात् कार्यभूतात् प्रत्यायितस्य वक्तुस्तदर्थविषयं ज्ञानं कारणभूतमनुमीयते । तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वाज्ज्ञातभूतार्थनिश्चय इति न वाचकशक्त्याऽर्थावगमः, तत् कुतोऽन्विताभिधानमिति ? नैवं, वक्तृज्ञानानुमानेनान्वये निश्चिते वाक्यस्यानुवादकतया तदर्थबोधकत्वात् । तदुक्तम्—तेनार्थे निश्चिते पश्चात् सोऽर्थो वाक्यस्य गम्यते । तस्यां दशायां वाक्यस्य तस्य स्यादनुवादिता ॥ इति । वाक्यमेवेति न पदम् । यदप्य ( यत्त्व )र्थप्रकरणादिगम्यं पदार्थान्तरसहकृतपदं प्रयुज्यते तदपि वाक्यमेव । यदाहुः—'संहतार्थ (96b)मभिदधति पदानि वाक्यम्' 'एकार्थपरः पदसमूहो वा वाक्य'मिति । ( श भा. ) । तदित्थं वृद्धव्यवहारे वाक्यादेव व्युत्पत्तिरित्याह वाक्यस्थितानामिति । एवं प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि पदानामेव सा शक्तिर्वरमभ्युपगम्यतामित्युक्तन्यायात् पदानामेकैव साक्षादन्वयबोधनशक्तिराश्रयितुं न्याय्या, न पुनः पदानां पदार्थानाञ्च स्वार्थावबोधने पदाभिहिता एव च पदार्थाः स्वार्थावबोधका इति शक्तित्रयकल्पना युक्तेत्याह—पदानामिति । अन्वितानामित्यन्वितार्थानां यदि वाऽन्वययोग्यानामित्यर्थः । सङ्केतः शक्तिः, पदान्वयव्यतिरेकानुविधायि व्यवहारो वा । न च विशिष्टः पदार्थातिरिक्तो वाक्यार्थ इत्याह नत्विति । वैशिष्ट्यमन्योन्यान्वयबोधनसामर्थ्यम् ।

ननु यान्येव 'गामानये'त्यादौ गवादिपदानि तान्येव 'गां पश्य, अश्वमानये'त्यादावपीति निश्चयाद्विशेषेषु चानन्त्यव्यभिचारादिदोषात्तत्र प्रतियोग्या(ग्य)न्वितस्वार्थबोधकत्वविषयतया शक्तीनामप्यानन्त्यकल्पनाप्रसङ्गात् क्रियासामान्यान्वित एव कारके कारकपदानां कारकसामान्यान्वितायामेव च क्रियायां क्रियापदानामन्वयव्यतिरेकमूलस्य सम्बन्धस्य ग्रहणात् सम्बन्धानुसारेण चाभिधानात् सामान्यान्वयाभिधायित्वैव पदानां युक्ता, न पुनर्विशेषान्वयाभि-( 97a ) धायिता । तेन वाक्यार्थप्रतीतिरनुपपन्ना,

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरस्तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः। तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य 'निःशेषच्युते'त्यादौ विध्यादेश्चर्चा।

---

विशेषान्वयरूपत्वाद्वाक्यार्थस्येत्यत आह यद्यपीति। प्रत्यभिज्ञायत एवेदमिति प्रत्यभिज्ञानम्, तद्रूपेण प्रत्ययेन। तान्येवेति न पुनर्भिन्नानीति। तदुक्तं 'त्रिधा शब्दा भिद्यन्ते रूपतः स्वरतोऽर्थतश्चेति।'[21] परिहरति तथाऽपीति। सामान्यावस्थित(च्छादित) इति— प्रतियोग्यन्वयप्रकारयोः साधारणरूपेणोपस्थितेः। प्रतिपद्यते नत्वभिधीयते। प्रतिपत्तौ हेतुमाह—व्यतिषक्तानामिति मिलितानां पदान्तरसन्निधापितैः पदार्थविशेषैरन्वितानां विशेष एव पर्यवसानात्, तदतिरेकेऽनुपस्थितकल्पने च प्रमाणाभावादिति भावः। उपसंहरति इतीति। अन्वितैरेव पदार्थैरन्वितानामेवाभिधानमिति ये वदन्ति तेषामप्यस्ति सामान्यविशेषरूप इत्यनेनान्वित( इत्यनन्वितः ? )सामान्यरूपः, स्वार्थस्तु विशेष रूपः। गोशब्दो हि स्वार्थगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते। एवं क्रिया पदमपि। अतिविशेषभूत इति—विशेषान्वयरूपः स्वयमेव चेदवाच्यस्तर्हि निषेधादी वाच्यविध्यादिरूपव्यङ्ग्यमर्थं प्रति का कथाऽभिधाव्यापारस्येत्याह तत्र दूर इत्यर्थान्तर-

---

21 शाब्दिकानामयं नयोऽलङ्कारविवेकप्रस्तावेऽतितरां सोपयोग इति शास्त्रेऽस्मिन्नस्य साम्राज्यम्। तत्र रूपभेदेन शब्दभेदस्वीकारपक्षस्तु सर्वसिद्ध एव। स्वरतोऽर्थभेदस्य निदर्शनानि वैदिकमन्त्रेष्वभिनयादिसाध्ये रूपके लौकिकव्यवहारे च काक्वादिसहकृतस्तत्र समाक्रियाणि। अर्थतो भिन्नानां शब्दानामभिधानकोषेषु व्युत्पत्तिः शिष्टा शिष्टानुशासनात्। काव्येषु च ततो वैचित्र्याधायकत्वं श्लेषादिकारणमभ्युपगमनीयमेव। द्वितीयोल्लासे द्वितीयतृतीयकक्षयोरनयोरुपनिबन्धः। सर्वासामेव शब्दभेदानां व्यञ्जनायां साधूपयोगः। प्रथमस्य पर्यायभेदमात्रभिन्नस्य हर-भव-कपालिप्रभृतीनामन्वयव्यतिरेकाभ्यां व्यवस्थितिश्चतुर्थे पञ्चम उल्लासे च सोदाहरणं निदर्शिता। द्वितीयस्य प्रयोगोऽल्पीयानपि काव्ये न विरल इति द्वितीयोल्लासटीकायां सूचितः। तृतीयस्याभिधाऽऽदिनियन्त्रणकृतो बहुल एवावकाशः।

अनन्वितोऽर्थोऽभिहितान्वये, पदार्थान्तरमात्रेणान्वितस्तन्वितामिधाने, अन्वित-विशेषस्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

यदप्युच्यते 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति, तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? शब्दस्य प्रकाशकत्वान्न कारकत्वम्। ज्ञापकत्वन्तु अज्ञातस्य कथम्? ज्ञातत्वञ्च सङ्केतेनैव। स चान्वितमात्रे। एवं च निमित्तस्य

---

वाचोयुक्तिरेव। साक्षाच्छब्दव्यापारविषयत्वसम्भावना परिहरणीयेत्याह—अर्थान्तर-भूतस्येति—तदेतत् सामान्यान्वयाभिधानवादि (वादि) नोक्तम्। विशेषान्विताभिधान-वादिनस्तु विशेषान्वयेऽप्याकाङ्क्षासन्निधियोग्यतोपाधिवशेनानन्त्यव्यभिचारादिदोषपरिहारात् सम्बन्धग्रहणं सुकरमिति तदभिधायितैव पदानां युक्तेत्याहुः। तथाचोक्तम्—आकाङ्क्षा-सन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान्। स्वार्थानाहुः पदानीति व्युत्पत्तिः संस्थिता यदा॥ आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन॥ अतएव प्रत्यभिज्ञाविरोधो नास्ति। यच्चानन्त-शक्तिकल्पनं स्यादित्याशङ्कितं तदपि न, एकस्यैवाकाङ्क्षितसन्निहितयोग्यान्वितस्वार्थाभिधान-शक्त्या प्रतियोगिभेदेन चक्षुरादीनामेव कार्यभेदोपपत्तेः। यथैकयैव दर्शनशक्त्या चक्षुर्घटादि-प्रतियोगिसहायभेदान्नानाज्ञानानि जनयति तथा शब्दोऽपि प्रतियोगिभेदादिति। किञ्च क्रिया-कारकस्वभावालोचनयाऽपि कारकमात्रेणान्वये सिद्धे वृथा सामान्यान्वयाभिधायिता शब्दस्याङ्गी-क्रियते। तस्माद्विशेषान्वयाभिधानमेव श्रेयः[22]। एवञ्च यद्यपि विशेषरूपतया वाच्य एवैषां वाक्यार्थस्तथापि देशकालकारकविशेषोपधानवशादुत्पद्यमानतात्कालिकक्रियासंसर्गः शेषरूप-पूर्वापरिचितोऽपि विशेषभूतोऽयमर्थो विशेषान्वयाभिधानेऽप्यवाच्य एव प्रतीयत इति भावः। एवञ्च सामान्यान्वयाभिधानं विशेषा-(९४a) न्वयाभिधानं वाऽस्तु, उभयथाऽप्यन्विताभि-धानपक्षे व्यङ्ग्यसमर्थं (सामर्थ्यं) नत्वभिधाया [न] सम्भावनाऽपि प्रसरतीति भावः। मतद्वयमुपसंहरति अनन्वित इत्यादि।

योऽपि दिवाभोजनाभावविशिष्टपीनत्वानुम(मि)तरात्रिभोजनवद्व्यङ्ग्यमर्थं प्रति व्यापारान्तरमन्तरेण श्रुतत्वाच्छब्दस्य निमित्तभावं कल्पयते तन्मतमुद्भाव्य निराकरोति—यदप्युच्यत[23] इति तदप्यविचारिताभिधानमिति सङ्गतिः। तदेतदेव विवृणोति

---

22 'निर्विशेषं न सामान्यं भवेच्छशविषाणवदि'ति न्यायाश्रयणमत्र गतिः।

23 'यदप्युच्यते' 'ये त्वभिदधती'ति पदद्वयं संकलय्यैव दशरूपकावलोककृता काव्य-निर्णयाख्ये निबन्धे मतपोषणम्—'ध्वनिश्चेत् स्वार्थविश्रान्तं वाक्यमर्थान्तराश्रयम्।

नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति 'नैमित्तिकानुसारेण निमित्तानि कल्पयन्ते' इत्यविचारिताभिधानम्। (ध्व. आ. लो. १८-१६ पृ. द्र. )

ये त्वभिदधति 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति च 'विधिरेवात्र वाच्यः' इति, तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानांप्रियाः। (ध्व. आ. लो. १८ पृ. द्र. ) तथाहि 'भूतभव्यसमुच्चारणे

तत्रेत्यादि। शब्दो हि न कुलालवद् घटप्रायमर्थं करोत्यपि तु प्रदीपवत् प्रकाशयति। ज्ञापकोऽपि न चक्षुरादिवदज्ञातः, अज्ञातस्य तस्याज्ञापकत्वात्। एवञ्चेति—सङ्केतसव्यपेक्ष एव शब्दः स्वव्यापारमारभते न तु स्वभावत एवेति व्यवस्थितौ यतैवास्य सङ्केतस्तावन्मात्रस्य प्रतिपत्तिर्न्याय्या, न पुनश्चतुर्थकक्षापातिनोऽर्थान्तरस्येति। यदि तु पूर्वसङ्केतग्रहणसंस्कृतस्य प्रतिभानवतस्तथा प्रतिपत्तिर्भवतीत्यनेन क्रमेण निमित्तनैमित्तिकभावोऽभिधीयते तदैतदङ्गीक्रियत एव, व्यङ्ग्यव्यञ्जकभावं प्रत्युपायतया शब्दार्थयोः प्रथममुपादीयमानत्वात्। तदुक्तं ध्वनिकृता (ध्व. आ. १।६-१० ) आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः। तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥ यथा शब्दार्थ (98b)द्वारेण वाक्यार्थः संप्रदी(ती)यते। वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः॥ इति।

अथ तत् परमुद्देश्यं यस्यासौ तत्परस्तस्य भावस्तात्पर्यं, शब्दस्य व्यङ्ग्यपरत्वं निर्विवादमाह 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। [ यथा ] धनुष्मता मुक्तः शरः शत्रोः कवचखड्मामादिकं निर्भिद्यैकयैव प्रवृत्त्या व्याप्रियते तथैव शब्दोऽपि दीर्घदीर्घाभिधाव्यापारैः स्वार्थाभिधानमर्थान्तरप्रतीतिञ्च तात्पर्यतः करोतीति किमत्र व्यापारान्तरकल्पनागौरवेणेति ये ब्रुवते तान् प्रति साटोपपरिहासमाह **येत्विति**[24]। **तात्पर्यवाचोयुक्तिः**

तत्परत्वं स्वविश्रान्तौ तत्र विश्रान्त्यसम्भवात्॥ एतावत्येव विश्रान्तिस्तात्पर्यस्येति किंकृतम्। यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतमिति। 'परिकल्पिताभिधाऽऽदिशक्तिबलेनैव समस्तवाक्यार्थावगतेः शक्त्यन्तरपरिकल्पनं प्रयास एवे'ति मतसंक्षेपश्च दशरूपकावलोके। परमेतदपि विमर्शनीयं यदि तु व्यापारान्तरादपि शब्दस्य निमित्तत्वं साध्यते तदाऽभिधालक्षणे अपि दत्तजलाञ्जली स्यामिति।

24 एते खल्वभिधादीर्घत्ववादिनो मीमांसकैकदेशीया येषामालङ्कारिकमण्डले भट्टनायक एव प्रवरः प्रतिनिधिः। एतन्मतोपरि लोचनकृतामाक्षेप. प्रश्नादपथ आपतित इतरत्र चात्राशत उद्धतश्च।

भूतं भव्यायोपदिश्यते' (शा. भा. ३।४।४१) इति कारकपदार्थाः क्रियापदार्थे-नान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाऽभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते, यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं, हवनस्यान्यतः सिद्धेः, 'दध्ना जुहोति' इत्यादौ दध्यादेः करणत्वमात्रं विधेयम्। क्वचिदुभयविधिः क्वचित्त्रिविधिरपि. यथा— 'रक्तं पटं वय' इत्यादावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं, न तु प्रतीतमात्रे। एवं हि 'पूर्वो धावती'त्यादावपरार्थेऽपि क्वचित्तात्पर्यं स्यात्।

---

वाचकत्वम्। देवानांप्रियाः षष्ठ्या अलुक् (पा. ६।३।२१ वा:)। तथाहीति तेन बुद्धिस्थेन प्रकारेणोपपाद्यते ह्येतदित्यर्थः। सिद्धं परार्थत्वादप्रधानं, साध्यं स्वपरार्थत्वात् प्रधानम्। न च गुणप्रधाने(न)भावमन्तरेण वाक्ये पदानां समन्वयो भवति। तत्र साध्यत्वात् प्रधानं क्रिया, सिद्धत्वादप्रधानं कारकाणीत्यर्थः। एवञ्च परिनिष्पन्नरूपत्वादात्मलाभनिरपेक्षस्य सिद्धात्मनः साधनभावो घटते, न तद्विपरीतस्येति। यद्यपि कारकपदार्थाः सिद्धात्मानस्तथापि कुर्वत् कारकं नाकुर्वत्, इतरथा प्रधानक्रिया प्रति तस्यानानुकूलत्वादित्याह भूतेत्यादि[25]। न तत्समस्तस्यैव वाक्यार्थस्य साध्यसाधनभावेनान्वयसिद्धस्यापि साध्यमानता (99a) ऽध्यवसीयते। अतएव प्रथमदाहेऽदग्धस्य भागस्य दहनाय पुनर्दाहो यथा तथा च [य]दन्यतोऽनधिगतसिद्धिकं तत्रैव भगवती तात्पर्यशक्तिर्निविशते, क्वचिद्विशेषणमात्रे, क्वचित् कारकमात्रे, क्वचिद्विशिष्टे यथा लोहितोष्णीषादिषु। यदि पुनः प्रतीतिमात्रे तात्पर्यं

---

25 'भूतभव्ये'ति मीमांसान्यायस्य विशदविवरणं मीमांसानयविशारदेन श्रीधरेण न कृतमित्यसम्भवमेव मन्यमानैरस्माभिरत्र स्वल्पो ग्रन्थपातः शङ्क्यते। मीमांसकनये क्रियैदंपर्याद्वाक्यस्य क्रियाप्राधान्यम्। यदाहुः—'साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्। क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते' इति, गुणवदिति क्रियाकारकविशेषणयुक्तम्। भूतं द्रव्यं भव्यं क्रियां निर्वर्तयतीति द्रव्यस्य गुणभूतत्वात् क्रियातोऽद्रव्यानुगमो हि वाक्यविदां मतः।

यत्तु 'विषं भक्षय मा चास्य गृहे भुङ्क्थाः' इत्यत्र 'एतद्गृहे न भोक्तव्यम्' इत्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते, तत्र चकार एकवाक्यतासूचनार्थः. न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा 'माऽस्य गृहे भुङ्क्थाः' इत्युपात्तशब्दार्थ एव तात्पर्यम्।

---

स्यात्तदाऽतिप्रसङ्ग इत्याह एवं हीति। आदिपदात् पारावार-ह्रस्व-दीर्घादयः साक्षेपा द्रष्टव्याः।

नन्वेवं विषं भक्षयेत्यादौ विधेयत्वेन मुख्यत्वाद्विषभक्षणेऽपि तात्पर्यं स्यात्, अतोऽत्र का गतिरित्यत आह यत्त्विति। अत्र प्रकरणात् सुहृदि वक्तरि विषभक्षणनियोगस्यानुपपत्तेः, 'भिक्षामट गाश्चानये'तिवन्न वाक्यद्वयमित्याह तत्र चकार इति। तदिह विषं भक्षयेत्येतावति न विश्रान्तिः, किं तर्हि माऽस्य गृहे भुङ्क्था इत्यत्र, आख्यातार्थस्य साध्यस्वभावस्य प्राधान्यमपरार्थत्वात्। न च प्रधानयोरुपसर्जनयोरिव वा सम्बन्धो घटते, मिथोऽनपेक्षत्वादित्युक्तमेव। अतश्चैकवाक्यताद्योतकचकारबलादवश्यमत्र गुणप्रधानभावः कल्पनीयः। ततश्चाख्यातं साव्ययकारकविशेषं वाक्यमत्र पुरुषाश्रितसंख्याऽऽख्यातपदाशङ्कानिरासार्थम्[26] एकतिङित्यादि (पा. २।१।१ भा. वा.) वार्तिककारलक्षणानुसारेण[27]। विषं भक्षयेत्यस्य स्वरूपावस्थितौ प्रधानार्थस्यासिद्धेः 'कृदभिहितो (99b) भावो द्रव्यवत् प्रकाशमानः क्रियया समवायं गच्छति, तिङभिहितस्तु न गच्छती'ति (म. भा. ३।१।६७)

---

26 नामादीनामाख्यातवो वैलक्षण्यं मीमांसानयेऽपि प्रकटितम्—येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरे तिष्ठति, न क्रियेवोत्पन्नमात्रं विनश्यतीत्यर्थः, तानि नामानि (शा. भा.)......येषां तु शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते (प्रयोगकाले येषामर्थो नोपलभ्यत इत्यर्थः), तान्याख्यातानीति शास्त्रं भावशब्दान् पर्यायशब्देनोपदिशति। कथं पर्यायशब्दता भावशब्दानाम्? यत एषां विभक्तय आख्यातिक्य इत्युच्यन्ते (शा. भा २।२।४४)। वैयाकरणानां वाक्यलक्षणन्तूद्यनहितपूर्वेटिप्पण्यामुद्धृतम्।

27 अर्थैकत्वादेकं वाक्यमित्यादि पूर्वमीमांसासूत्रानुयायित्वं महाभाष्यवार्त्तिकस्येति टीकाकृत्। 'एकशब्दः समानवचनो न तु संख्यावाची'ति कैयटः।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः, ततः कथं 'ब्राह्मण पुत्रस्ते जातः', 'ब्राह्मण कन्या ते गर्भिणी', इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्। कस्माच्च लक्षणा, लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः। किमिति च श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-

---

भाष्यवचनात् कि(क्र)द्वाच्यत्वेन गुणभावो गुणानाञ्च यत् प्रधानभूतं तदेव कथं नाम विशिष्टं प्रतीयतामित्येवमर्थमुपादानादनयोः परस्परमुपकार्योपकारकभावेनावस्थानादेतद्गृहभोजनस्यात्यन्तमकरणीयत्वे तात्पर्यं पर्यवस्यतीत्याह इति सर्वथेति। एवं वाक्यानामपि परस्परमुपमानोपमान-(मुपमानोपमेय)भावादिभिरिवादिशब्दप्रयोगे मुक्तकमन्दानितकानिष्ठे-(दिष्वे) कार्या(र्यो)भावो द्रष्टव्यः।

अथ केवलाभिधाव्यापारवादिनं प्रति दूषणान्तरमाह यदि चेति। 'ब्राह्मण पुत्रस्ते जातं' इत्यादि वाक्यश्रवणानन्तरं ये हर्षादय उत्पद्यन्ते ते वाच्या इति तेनाधिनाऽभ्युपगतम्, यतोऽमी वाक्यार्थप्रतिपत्त्या क्रियन्ते[28]। न च शब्दस्य कारकत्वं, ज्ञापकत्वात्तस्य। अतः शब्दोऽत्र हर्षादीन् प्रति तरु(रोः) कुसुमविकाशान् प्रति कुलालादि च (कुठारादिवत्) कारणकारणीभूतः। यदि चैषामपि शाब्दत्वमभ्युपगन्तव्यं तदा शब्दादेव केवलात् सकलार्थप्रतिपत्तिनिष्पत्तेः श्रुतार्थापत्त्यादिप्रमाणान्तराङ्गीकरणमपि वृथा स्यात्[29]। एवञ्चाभिधयैव क्रोडीकृतत्वाद्द्वितीयकक्षापातिन्या लक्षणाया अप्यङ्गीकारे [न] विशेषं पश्याम इत्याशयवान् पृच्छति कस्माच्चेति। किञ्च यदि दीर्घदीर्घाभिधैव व्यापारस्तदा (१००१) श्रुत्यादिविनियोग- श्रुत्यादिबलाबलत्वेति क्रियाऽपि वाक्यार्थविशेषप्रतिपत्तिहेतु-

---

२8 'तद्भूतानां क्रियाऽर्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादि'ति पूर्वमीमांसासूत्रमत्रोपयोगि। शब्द एव वेद इव लोकेऽपि प्रतिपत्तिनिमित्तमिति चाभिधाव्यापारवादिन आशय.।

२9 'निमित्तेषु सङ्केत', नैमित्तिकस्तु सावर्थः सङ्केतानपेक्ष इति चेत्, पश्यत श्रोत्रियस्यानुवाक्यहतबुद्धेरुक्तिकौशलम्। योऽह्यसौ पर्यन्तकक्षाभागार्थ- प्रथमं प्रतीतिपथमवतीर्णस्तस्य पश्चात्तनाः पदार्था निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतमिति लोचने दीर्घदीर्घतराभिधानपक्षं समर्थयमानानां भट्टनायकप्रमुखानां मतेऽसङ्गतिः सोपहासोत्प्रासं दर्शिता। 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति वचनतो 'यावत्कार्यप्रसारित्वात्तात्पर्यं'

समाख्यानां पूर्वपूर्वबलीयस्त्वमित्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् ( ध्व. आ. लो. १६ पृ. द्र. ) ।

---

र्भवदनुमताऽपि न स्यात्, एकनिष्पत्तेः सर्वेषां समत्वप्रसङ्गादित्याह **किमिति चेति**। तत्र द्वितीयान्तं पदं श्रुतिस्तृतीयान्तमपीति । नाम्नः ( नाम्ना ? ) पदार्थे सामर्थ्यं **लिङ्गम्**। एकार्थपरः पदसमूहः म(सं)हत्यार्थमभिदधति पदानि वा **वाक्यम्**। कर्तव्यस्येतिकर्तव्यताऽऽकाङ्क्षा **प्रकरणम्**। यथासंख्यं **स्थानम्**। यौगिकं नाम **समाख्या**। तैः प्रधानेऽङ्गत्वोपपादनं श्रुत्यादिविनियोगः । तत्र श्रुतितो यथा दर्शपौर्णमासयोः 'व्रीहीनवहन्ती'त्यादि । अवघाते व्रीहीणां विनियोगो द्वितीयाप्रतिपादित इति श्रौतः । तथा 'पशुना रुद्रं यजेते'त्यत्र पशुनेति तृतीयाश्रुत्या रुद्रयागे पशोरङ्गभावः प्रतिपाद्यते । लिङ्गतो यथा 'बर्हिर्देवसदनं दामी'त्यत्र लवनलिङ्गादनेन मन्त्रेण बर्हींषि लूनीयादिति प्रतीयते । वाक्यतो यथा '**श्वेतं** छागमालभेत' । अनैकवाक्योपस्थानात् श्वेतगुणाश्रयच्छागावच्छेदकत्वेन क्रियाऽङ्गभावो गम्यते । प्रकरणतो यथा 'समिधो यजति', 'तनूनपातं यजति', 'इडो[बर्हि]र्यजति', 'स्वाहाकारं यजती'त्यादि प्रयोजनानां [प्रयाजानां] दर्शपौर्णमासप्रकरणपठितानां तदङ्गत्वमवगम्यते । स्थानतो यथा मार्जनाघमर्षणोपस्थानजपहोमादिस्थानेषु पठितानां (100b) मन्त्राणां यथाक्रमं तत्तेवाङ्गभावो भवति । श्रुत्यादयश्च क्वचित् समस्ता क्वचिद्व्यस्ता एव विनियोजयन्ति । समस्ता यथा—*अनेन कल्याणि करे गृहीते महाकुलीनेन महीव गुर्वी । रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः*॥ (र.वं. ६।६३) व्यस्ता यथा—*म ह्वयितस्तत्राणसहः सतां गतस्तत् कार्मुकं कर्मसु यस्य शक्तिः। वदन् द्वयीं यत्कलेऽर्थजाते करोत्यसंस्कारहताभिवोक्तिम्*॥ (कि. अ. ३।४८)[30] 'श्रुत्यादीनां समवाये पारदौर्बल्यमर्थविप्रकर्षा'दि'ति ( जै. सू. ३।३।१४ ) श्रुत्यादिबलाबलम् । तत्र लिङ्गापेक्षया श्रुतेर्बलीयस्त्वं यथा 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इत्यादि-

---

न तुल्याश्रुत'मितीतरैः स्वीकृतस्य दीर्घतरतात्पर्यस्यैवास्य शक्तिर्विस्तृता । व्यङ्ग्याश्रितेऽर्थे पुनः सत्र एवार्थप्रतिपत्तिर्नोपदेशकालापेक्षा । प्राचीनास्तूद्भटादयो वाच्यमेव रसप्रत्ययं स्वीकुर्वन्ति । यत्तु प्राक्प्रदर्शितनये मीमांसकसिद्धान्तव्यावर्तनन्तदपि ग्रन्थकृतोद्धा(टित)मेव । तेषामेव शास्त्रात्तन्नातदीर्घत्वं समर्थितं स्यादिति चाशयः ।

30 अयमंशोऽस्थानस्थो ग्रन्थान्तरस्थो वा लिपिकारानवधानवशादत्र स्थापितः स्यात् । शृङ्गारप्रकाशेऽष्टमप्रकाशेऽस्य प्रसङ्गस्य विवेचनमस्ति । तन्मूल एव वाऽस्यावतारः । तथात्वेऽप्यवतरणिकाऽपस्य ग्रन्थांशस्य पातोऽत्र स्यात् ।

किञ्च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि (१३४) कथं दुष्टत्वम्? न ह्यत्रासभ्योऽर्थः पदान्तरैरन्वित इत्यनभिधेय एवेत्येवमाद्यपरित्याज्यं स्यात्। यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्। न चानुपपन्नम्, सर्वस्यैव विभक्ततया प्रतिभासाद्वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताऽऽश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था।

---

बलादत्र ऐन्द्रया ऋचा (ऋ. सं. ८।६।५१) इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थाने विनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते। तेनेन्द्रपदाऽपेक्षितया गार्हपत्यस्यैवोपस्थानं भवति। एवमितरत्रापि पारदौर्बल्यात् पूर्वपूर्वबलीयस्त्वं द्रष्टव्यम्। तदिह निमित्ततावैचित्र्यमेव समर्थकम्, अन्यथा मुख्याल्लाक्षणिकस्यापि न भेदः स्यात्। तदित्थमेवं निधस्तान्निमित्तताविचित्र [वैचित्र्य]मनुमन्यसे [चेत्] तर्ह्यस्मन्नये कः प्रद्वेष इत्युपसंहरति **इत्यन्विताभिधानवादेऽपीति।**

किञ्च न केवलमस्माभिरेव सहृदयहृदयाह्लादि काव्यमार्गोपयुज्यमानं व्यञ्जकत्वमाश्रितं यावदन्विताभिधानवादिभिरपि रसभावानपेक्ष्य (१०।a) काव्याश्रितसङ्केतविशेषमात्रविद्भिरभ्युपगतमिति दर्शयति किञ्चेति। 'कुरु रुचिमुद्दीना ह्ठा'दित्यादौ[31] पदद्वयव्यत्यासे काश्मीरकादिभिरसास्वादः (रसस्यास्वादः) स्मर्यत इत्येवंविधा या हेयता सा न स्यात्, तस्यार्थस्यानभिधेयत्वेन प्रतीत्यविषयत्वात्। अपरञ्च सर्वत्र हेया इत्यसाधुत्वादयो नित्याः, विषयभेदेन हेयोपादेयत्वात्। श्रुतिदुष्टार्थदुष्टादयस्त्वनित्याः। व्यङ्ग्यव्यञ्जकभावाश्रयेण कथं विभागोपपत्तिरिति चेदत्राह—व्यङ्ग्यस्येति। तथाहि ये कष्टादयः शृङ्गारे दुष्टास्त एवौचित्याद्वीभत्सादावुपादेयाः। तत्र शृङ्गारे हेयस्य जुगुप्सादायिपदार्थस्योपादेयत्वं बीभत्सेषु प्रसिद्धमेव। रौद्रे यथा—'स्त्यानावनद्धघनशोणितशोणपाणि'रिति (वे. सं. १।२१)।

---

31 एतच्चाभिधाव्यतिरिक्तं व्यापारान्तरं नाम्नोति मतस्याक्षेपपरं दूषणं काश्मीरकैरेवाभ्युद्धृतमिति मत्समोल्लासेऽश्लीलदोषविवरणे सूचितमस्माभिः। 'कुरु रुचि'मिति कस्यापि श्लोकस्यांशः। रत्नेश्वरेणैतदनुवादि 'उड्डीय गगने दूरं चलण्डामरवेष्टित-। अयमुत्पतते पत्री ततोऽत्रैव रुचिं कुरु' इत्युदाहरणं दत्तम्।

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ॥१३५॥ (कु. स. ५।७१) इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपानां काव्यानुगुणत्वम्? (व. जी. १७ पृः)

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोऽसौ। न हि 'गतोऽस्तमर्क' (भा. का. अ. २।८७) इत्यादौ ॥१३६॥ वाच्योऽर्थः कश्चिदन्यथा भवति। प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते। तथाहि 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामहे इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति।

---

शान्ते यथा—उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते (२६६ श्लोः)॥ करुणे यथा—नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम्। तदिदं विषहिष्यते कथं वद वामोरु चिताऽधिरोहणम्॥ (रघु. ८।५७) इति।

एवञ्च शब्दविशेषाः क्वचिद्विषये चारवः क्वचिदचारवो यथा 'माल्यानुलेपनादयः शृङ्गारे चारवो बीभत्से पुनरचारव' इत्यादि यदुद्भटेन दर्शितं (भा.वि. का: अ-सा.स. ५।६१-६६) तदप्यस्य रसस्यैव ते व्यञ्जका अस्य च नेति व्यञ्जकापेक्षया व्यञ्जकभाव एवान्वय-(१०१b) व्यतिरेकाभ्यामुपपादितः(तया)। अत्रापि वैजात्याद्विप्रतिपन्नं लक्ष्यसन्दर्शनेन निरुत्तरीकरोति—द्वयमित्यादि। पूर्वं समागमेन कलैका शोचनीयता प्राप्ता सम्प्रति तु समागमप्रार्थनया द्वयमित्यर्थः। तदिह कपालेन सकलामङ्गलनिधानत्वं निन्दिताचारनिरतत्वादिकञ्च व्यज्यते। यतो यस्य दर्शनस्पर्शनसम्भाषणादिकमपि गर्हितं तस्य समागमप्रार्थनया शोचनीयताप्रकर्षमानीयमाना कला विवक्षितार्थस्य कामपि कान्तिमुन्मीलयतीति कपालिपदस्य व्यञ्जकत्वस्यैव वैलक्षण्यम्।

किन्त्वे(किञ्चै)तद्विषययोर्वाच्यव्यङ्ग्ययोरेकत्वानेकत्वकृतोऽपि भेदोऽस्तीत्याह—अपि चेति। न च प्रकरणादिलक्षणप्रमाणान्तरानुपगमेनात्मलाभादस्य शब्दत्वहानिः स्यादिति वाच्यम्, प्रमाणान्तरोपनिपातस्य कश्चिच्छब्दव्यापारविषयत्वहानिं प्रत्यनिमित्तत्वात्। इतरथा वाचकप्रतिपादितेऽर्थे सत्योऽयं न चेति निश्चयार्थमाप्तोक्तत्वादिप्रमाणान्तरानुपगमेन सम्यक्प्रतीतौ क्रियमाणायां तस्यापि वाच्यस्योक्तप्रमाणान्तरविषयत्वसद्भावाच्छाब्दत्वं न स्यात्।

वाच्यव्यङ्ग्ययोः 'निःशेषे'त्यादौ निषेधविध्यात्मना—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्। १३७।
( भ. श. )

इत्यादौ संशय-शान्त-शृङ्गारान्यतरगतनिश्चयरूपेण,

कथमवनिप दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः॥१३८॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य, पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयस्य, शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चायगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्यस्य, 'गतोऽस्तमर्क'इत्यादौ प्रदर्शितनयेन संख्यायाः,

कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं।
सभमरपउमग्घाइणि वारिअवामे सहसु एण्हिं॥१३९॥ (गा स वे ८८६)

---

तदित्थमुपपादितमपि भेद शिष्याणामेकप्रघट्टकेन हृदि निवेशयितुं स्वरूपकालाश्रयनिमित्तकार्यसंख्याभेदतो दर्शयति—वाच्यव्यङ्ग्ययोरिति। यद्येतावताऽपि (1023) भेदो न स्यात्तदा नीतानीतादौ (नीलपीतादौ) भेदो न स्यादिति सङ्गतिः। तत्र विधिनिषेधौ सन्देहनिश्चयौ निन्दास्तुती च परस्परभिन्नस्वरूपे बालस्यापि सुप्रसिद्धौ।

मात्सर्येत्यादि—आर्यास्तत्त्वार्थविचारकुशलधियः। स्मरेण स्मेरा विलासिन्यस्तासामिति प्रथमं वाच्यं प्रतीयते पश्चाच्च चतुर्थकक्षापाती व्यङ्ग्य इति वाच्यं प्रति शब्द एवाश्रयः, परं प्रति शब्दस्तदेकदेशादिश्च। शब्दशासनं व्याकरणमर्थशासनं मीमांसा। एतद[शब्दा]वगमादेवाभिमतं, परमस्तु नैवमित्याह प्रकरणादीति। प्रतिभा हि भगवतस्तृतीयं चक्षुः। 'येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः' (तत्त्वोक्तिरत्नकोष. व्य. विः २।११८, ह.) न चात्र शब्दानुशासनज्ञानेन विदग्धत्वं सहृदयचक्रवर्तित्वं [स्यात्]। चमत्कृतिरास्वादप्रधाना बुद्धिरित्यर्थः। [अ]नयो भेदस्तूदाहृतदिशा स्वयमुन्नेय इत्याह गतोऽस्तमित्यादि। कस्स वेति—कस्य वा न भवति अनीर्ष्यालोरपि रोषो

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत् क्वचिदपि नीलपीतादौ भेदो न स्यात्। उक्तं हि "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति।

वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्। किञ्च 'वाणीरकुडंग' इत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति।

---

दृष्ट्वा प्रियायाः सव्रणमधरम्। सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥ 'कस्यानीर्ष्यालोरपि। सभ्रमरपद्माघ्राणशीले। शीलं हि कथञ्चिदपि वारयितुं न शक्यते। वारितवामा प्रतिषिद्धकारिणी। सहस्वेदानीमुपालम्भपरम्परामित्यर्थः। तद्भर्तृसन्निधाने परपुरुषदष्टाधरगोपनाभिप्रायेण सखीविषयं वाच्यं, भ्रमरेण दष्टोऽधरो न परपुरुषेणेति सखीकृतसमर्थनरूपो व्यङ्ग्यः पति (102b) विषयः। अनया विना त्वं न भवसि तत्र ह्रीयं प्रिया तदस्या [अ]पराधोद्घाटनं न कार्यमिति पत्युर्वैदग्ध्ये सति सहस्वेत्यपि तद्विषयम्। अद्य मया समर्थितं पुनः प्रकटेऽङ्गे त्वया खण्डनादि न कर्तव्यमित्युपपतिविषयम्। प्रियायाः सव्रणमधरं दृष्ट्वा रोषो भवति, अप्रियायास्तु दृष्ट्वा परिहासहेतुरानन्दो जायते, तद्वर्गो मा युष्माकं भूदिति सपत्नीविषयम्। अक्षार्थं इदानीमेव किञ्चिद्वदति त्वं कुप्यसि, ततः पादपतनादिना यदि प्रार्थ्यसे तत् सहस्व क्षोभस्वेत्यर्थं इति सखीविषयं, नान्यथाऽस्याः सम्भावनीयमिति प्रातिवेशिकविषयं, युक्तया मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयम्, अद्य मया समर्थितं, पुनस्त्वया सावधानया भवितव्यमिति सखीविषयमेवे"ति (ध्व. सं. ४२ पृः) वाच्यव्यङ्ग्ययोर्भूयान् भेदः। न च विरुद्धधर्माध्यासकारणभेदमन्तरेण भेदतद्धेतुत्वात् सतत्त्वान्तरं परिघटयितुमीष्टे कश्चित्। एवञ्च भिन्नविषयत्वाद्भिन्नरूपत्वाभानयोर्भेद एवेति स्थितम्। अथ यत्र व्यङ्ग्यस्याप्राधान्येनावस्थानं तत्र वाच्यत्वेनैवासौ व्यपदेष्टुं युक्तो व्यञ्जकस्य तत्परत्वात्, 'यत्परः शब्दः स शब्दार्थ' इति न्यायात्।

वाचकतात्पर्याविषयस्य वाच्यत्वं न तु व्यङ्ग्यत्वम्, अतश्चाभिधाव्यञ्जनाव्यापारयोरैक्यमेव न पुनर्भेद इति यत् केनचिदाशङ्कितं तदपा (103a) कर्तुमुपपरयन्तरमाह वाचकानामिति। पुनस्तात्पर्यवादिनं प्रति दूषणान्तरमाह किञ्चेति। यत्र व्यङ्ग्यस्य गुणीभावस्तत्र शब्दार्थत्वमनुपपन्नं शब्दस्यातत्परत्वात्, 'यत्परः शब्दः स शब्दार्थ' इत्युक्तत्वात्। प्रतीयते चासावर्थो यथा 'वाणीरकुडङ्गे'त्यादौ (४ उः) महाकविनिबद्धे लक्ष्ये। न च विना व्यापारं

ननु 'रामोऽस्मि सर्वं सहे' (११३श्लो:) इति, 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः 'प्रिये नोचितम्' (१४०) (रा. अ. ध्व. आ. लो. १८२ पृ:) इति, 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा'मित्यादौ (११०श्लो:) लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति, तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयमभिनवः प्रतीयमानो नाम ?

उच्यते । लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्येनार्थेनानियतसम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धोऽनियतसम्बन्धः संबद्धसंबन्धश्च द्योत्यते।

न च—अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि ॥१४१॥

(गा. स. ७,६७)

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत् कथमत्र लक्षणा ?

---

शब्दोऽर्थमवबोधयति। एवञ्चेदनुमन्यसे तर्हि यत्र प्रकारादिप्रतिपत्तिनिर्धारितविशेषत्वात्पर्यालोचनया लब्धविश्रान्तिः प्रतीयमानस्याङ्गत्वेनावभासते तत्र ध्वनित्वमपध्वस्तं कथमपलपितुं पार्यत इति भावः ।

एवं व्यञ्जकस्य वाच्यत्वं निराकृत्यास्य लक्ष्यत्वसम्भावनां निराचिकीर्षुराशङ्कते नन्विति । यत् किञ्चिद्व्यञ्जकत्वे प्रमाणमुक्तं तत् सर्वं लक्ष्यत्वेऽप्यस्ति । तथाहि—रामोऽस्मीत्यादौ राज्यभ्रंशवनवासादयो लक्ष्यन्ते, प्रत्याख्यानरुचे. (-रुचः) कृतं समुचितं क्रूरेण ते रक्षसा सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः। व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥ (रा. अ ४म अः) इत्यत्र मायासीताशिरश्छेददर्शने 'राम'पदेन साहसैकरसिकत्व दुष्कृतफलभोक्तृत्वशोच्यजनत्वादयः, रामोऽसावित्यत्र लोकोत्तरपौरुषत्वादय इति (103b)। कोऽयमभिनव इति यतः शब्दो वाचको लाक्षणिकश्चेति विपश्चिद्भिर्निश्चित्य द्विधैवाभिदधे, तद्व्यापारोऽप्यभिधालक्षणालक्षणतया द्विधैव, तद्विषयोऽपि वाच्यलक्ष्यरूपतया तावानेवेत्यभूतपूर्वतया किंशब्दः प्रश्ने, नामेत्यसूयायां, लक्ष्यातिरिक्तो नास्त्येवेत्यर्थः ।

अत्र सिद्धान्तमाह—लक्षणीयस्येति। प्रतीयमानस्तु वक्तृप्रतिपत्तृ(त्तृ) प्रकरणादिसामग्रीसन्निधानाद्व्यवातिशयलक्षणोपाधिप्रभवः औपाधिकः प्रवर्तक इत्यौपाधिकत्वेन प्रवृत्तेर्न तथेति । प्रतिव्याप्तिमप्यस्य दर्शयति न चेति । 'अत्ता एत्थे'त्यादि गाथा प्रागेव व्याख्याता (४४ पृ) ।

लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम्। यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा, अतएवाभिधापुच्छभूता सेत्याहुः।

न च लक्षणाऽऽत्मकमेव ध्वननं, तदनुगमेन तस्य दर्शनात्। न च तदनुगतमेव, अभिधाऽवलम्बनेनापि तस्य भावात्। न च्योभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः। न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धे—इत्यभिधातात्पर्यलक्षणाऽऽत्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव।

---

अविवक्षितवाच्यो ध्वनिः कथं लक्षणातो भिद्यत इति चेदत आह **लक्षणायामपीति**। एतेनाश्रयाश्रयिभावादनयोरैक्यं सर्वथा न सम्भवतीत्युक्तं भवति। अथ प्रयोजनविषयोऽपि द्वितीयो लक्षणाव्यापार एवास्त्विति चेदत आह **यथा चेति**। **अभिधापुच्छभूता** तच्छेषभूतेत्यर्थः।

नापि लक्षणा ध्वनिश्चेति पर्यायरूपमित्याह **न चेति**। **तदनुगमेन** लक्षणोपजीवकत्वेन। यथाऽविवक्षितवाच्ये ध्वनावेतद्रूपेणैवास्त्विति चेदत आह **अभिधाऽवलम्बनेनापीति**। यथा विवक्षितान्यपरवाच्ये ध्वनावर्थे तर्हि( हि )तयात्मकमेतदेवैकं रूपमस्त्विति चेदत आह **अवाचकेति**। यन्त्रे माल (1042) वाद्यादारभ्य [32]कौशिकात् करुणविप्रलम्भयोः शृङ्गारवीररौद्रभयानकरसानामभिव्यक्तिः। सा च [33]तद्विदामनुभवसिद्धैव। तर्हि शब्दमात्राश्रितत्व-

---

32 यन्त्र इति सङ्गीतशास्त्रोद्दिष्टे यन्त्र इत्यर्थेऽयं पाठः स्यात्। मैथिलीगनान्यदेव-कृतभरतभाष्यात् सरस्वतीहृदयालङ्काराभिधानगतस्यैतस्य समर्थनप्रमाणमीक्ष्यम्। (B. O. R. I. Mss. Folio. 141. Ch. 9 v. 23-29)

33 अयमर्थः उपक्षिप्त कविगुरुभिः 'तं सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धराग' मित्यादिकुमारपद्ये तथा 'स्वरश्रुत्यादिलक्षणमिवाप्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः' इत्यादिसन्दर्भेण व्यङ्ग्यरसस्यान्यथोपलब्धिमीमांसाप्रसङ्गे चालङ्कारिकमूर्धन्येनानन्दवर्धनाचार्येण। 'रसान्तरेषु शृङ्गारादिरसभेदेषु प्रतिबद्धरागं प्रतिनियमेन प्रवर्तितो वसन्ततिलकादिरागो यस्मिंस्तं, यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः। यदाह कोहल 'शृङ्गारे सदा गेये

तत्र "अत्ता एत्थ" इत्यादौ नियतसम्बन्धः, "कस्स व ण होइ रोसो" इत्याद्यनियतसम्बन्धः,

विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥१४२॥

(व. ल. ६११ ; गा. सं. वे ८१६)

इत्यादौ संबद्धसम्बन्धः। अत्र हि 'हरि'पदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते, तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य संकोचः, ततो ब्रह्मणः स्थगनम्, तत्र सति गोप्याङ्गस्यादर्शनेनानिर्यन्त्रणं निधुवनविलसितमिति ।

---

मत्यास्तिति चेदत्राह—अशब्देति । आदिपदादधोनक्[त्व]कुचकम्पबाष्पावेगादयश्चेष्टाविशेषा रहस्यव्यञ्जकतया प्रसिद्धाः । तदेवमेतेभ्यः सर्वेभ्यो विलक्षणमन्यद्रूपमिति प्रकरणमुपसंहरति इत्यभिधेति ।

अथ व्यङ्ग्यस्य नियतानियतसम्बन्धत्वम् । 'कस्स व ण होइ' इत्यत्रानियतविषयसम्बन्धत्वं प्रदर्शितमेव । सम्बद्धसम्बन्धो यथा विपरीअरए इत्यादि । विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । हरेर्दक्षिणनयनं रसाकुला झगिति स्थगयति ॥ सम्बद्धसम्बन्धा च विषयपरम्परया ग्रन्थकृतैव दर्शिता ।

---

पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः । भयानके च बीभत्से शान्ते गेयो नपुंसके ॥' इति कुमारपद्यस्य मल्लिनाथकृतटीकायाम् । 'आदिग्रहणेन जात्यंशतद्ग्रामरागभाषाभाषान्तरमार्गा देशीमार्गाः संगृह्यन्त' इति मातङ्गादिमतानुसारिणो लोचनकृतश्च ध्वन्यालोकव्याख्याने । टीकाकृत समकालीनैः शार्ङ्गदेवाचार्यैर्गोलविकापटमञ्जरीदीपकमानडाटकादीनां रागाणां रूपरसादितथ्यान्युद्घाटितानि । 'आरक्तवर्णो धृतरक्तयष्टिर्वीरः सुवीरेषु कृतप्रवीरः । वीरैर्धृतो वैरिकपालमाली मतो बुधैर्मालवकौशिकोऽयम् ॥ शय्यासु सुप्तं नलिनीदलानां वियोगिनीं वीक्ष्य विषण्णचित्ता । सुवर्णवर्णा गृहमागता सा सुभाषयन्ती किल टक्कसंज्ञा ॥' (स. र. आ.) इत्यादि तत्तत्प्रसङ्गे द्रष्टव्यम् । रसादिसामञ्जस्येन निषादादीनां जातिभेदो यन्त्रवाद्ययोजना तद्वैलक्षण्यञ्च भरतनाट्यशास्त्रे (२८ अः N. S. edn) विवृतानि । अभिनवभारत्यां सङ्गीताध्यायेष्वप्येतस्य सङ्कलनम् ।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः', 'वाक्यमेव च वाचकम्' इति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्युपदर्शितोदाहरणादौ विध्यादिर्व्यङ्ग्य एव (ध्व. आ. लो. १९९-२०० पृ: द्र: )।

---

इदानीमखण्डवादिनामपि मते व्यङ्ग्यं दर्शयन्नाह अखण्डेति। त एवमाहुः—वाक्येनैव तावद्व्यवहारः। न च वाक्यावस्थाया पदानि पदार्था वा वि(भि)द्यन्ते। यथा हि चित्रे नीलपीतरक्तादयः पानके गुडाम्लीकामरिचादयः[34] ग्रामरागे षड्जर्षभगान्धारादयः पृथक्त्वेन नावभासन्ते (वृ. दे. ११८९) तथा क्रियाकारकविशेषणादिपदानि तदर्थवाक्यार्थाभ्यामभेदेनैव प्रतीयन्ते। वाक्यार्थो हि पदपर्यायस्त्वखण्ड एवाभिधीयमानो दृश्यते तद्यथा मुण्डं करोति मुण्डयति, श्लोकैरुपस्तौति उपश्लोक(104b)यति, श्रुत्वा छन्दोऽधीते श्रोत्रियः, कलापिपूर्द्धिय-मानकलापेषु विगलितकलापेषु वा देशकृतं कलापकं, केशेषु केशेषु गृहीत्वा युद्धं वृत्तं केशाकेशि, अश्नीत पिबतेति सातत्येन यस्यां क्रियायां नामाख्यानमिच्छति सा अश्नीतपिबतेति, दक्षिणपार्श्वे लुब्धेन विषदिग्धेन शरेण मर्मणि निर्मितं मर्म यस्यास्ति स दक्षिणेर्मा, दक्षिणात् समुद्रादद्रिराजं हिमवन्तं यावद्योजनानां दशशती विजयमानः समस्तराज्ञां च आयतनं चक्रवर्ती यो राजसूययाजी च ईश्वरो मण्डलस्य यथाज्ञयैव राज्ञः प्रशास्ति स सम्राड्विज्ञेय (अ. को. क्ष व. २३) इति। अपि च ललाटं पश्यतीति लालाटिकः, कुक्कुटीं चरतीति कौक्कुटिकः। तत्र ललाटशब्देन दूरेऽवस्थानं लभ्यते। तेनानुपश्लेषः कार्येषु चानुपस्थानम्। यः सेवकः स्वामिनः कार्येषु नोपयुज्यते ललाटमेव वा कोपप्रसाद-चिह्नं लक्षणाय पश्यति स लालाटिक उच्यते। तथा कुक्कुटीशब्देन कुक्कुटीपातो लक्ष्यते तेन देशस्याल्पता। यो हि भिक्षुरनिक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छंस्तावत्येव देशे चरति यो वा तथाविधगारमानगतधाभि(वि)तोऽपि दर्शयति कुक्कुटीपातादिकानां (पातान्तिकानां) चेष्टाला(नां) वाऽनुकरोति यः स कौक्कुटिक इत्युच्यते (पा. ४।४।४६ भा. द्र)। एवञ्च यथा पदपर्यायवाक्यानामखण्ड एवाविभक्तो (105a) देशविभाग एकोऽर्थोऽभिधेयस्तथा 'देवदत्त गामभ्याज शुक्लां दण्डेने'त्यादीनामपदपर्याया[णा]मपि वाक्यानां सन्निविष्टानेक-शक्तिरूपः सर्वोपाधिविशिष्टः क्रियाऽऽत्मा नष्टोद्देशविभाग एक एवाभिधेयो भवति। पदानान्तु प्रकृतिप्रत्ययादिवदविभक्तप्रतिपत्त्यर्थमेवान्वयव्यतिरेकाभ्यां व्यावहारिकोऽर्थापोद्धारः शब्दा-पोद्धारश्च क्रियते, अपोद्धाराणाञ्च विनिविष्टभेदानामिव पुनर्योगो विधीयत इति।

---

34 तिन्तिडी चिञ्चाऽम्लिकेति वनौषधिवर्गेऽमरः। अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिलेति चन्द्र आद्याक्षरस्य दीर्घत्वमप्यनुशास्ति।

अत्रापरे[35] ब्रुवते—किमत्रैव वक्तव्यम्, अखण्डवादिभिरेभि पदपदार्थानामिव वाक्यावस्थायां वाक्यवाक्यार्थानामप्यवान्तरवाक्यावस्थायामसत्यत्वं मन्यते न वा ? यथा 'दुग्धा गौ, उपाध्याय पयसा भुक्त्वा मामध्यापयतु, येन मागधीयान दृष्ट्वा पिता तुष्यति, तुष्टश्च मे मोदकान् ददातीति। किञ्चातो यदि मन्यते पदैः किमपराद्धम् ? अथ न मन्यते तथापि पदैः किमपराद्धं येन तुल्येऽप्यारभ्यारम्भकत्वे पदानामेवासत्यत्वमभ्युपगम्यते न वाक्यानाम् ? अथ वाक्यान्यवान्तरवाक्यावस्थायामसत्यानि तर्ह्यवान्तरवाक्यानामपि महावाक्यावस्थायां, महावाक्यानामपि विद्यास्थानावस्थायां विद्यास्थानानामपि शब्दब्रह्मावस्थायां शब्दब्रह्मणोऽपि परब्रह्मावस्थायामसत्यत्वमिति न[36] कस्यचित् किञ्चिदपि विचार्यं भवति। न च पद(105b)स्यासत्यत्वमसत्यत्वं तेऽपि मन्यन्ते येनाविद्यमानावपि प्रकृतिप्रत्ययादिवद्विद्वत्प्रतिपत्त्यर्थम् अन्वयव्यतिरेकाभ्यामपोद्धृतपदपदार्थौ भिन्नाविव पुनर्योजयन्ति। यदि हि सर्वथैवासत्यत्वमवाचकत्वञ्च पदानामभ्युपेयते तत्तदारब्धवाक्यानामपि तथात्वे शाब्दव्यवहारोच्छेद प्रसज्यते, अत॰ पदपदार्थपदवीकल्पनाऽवश्यमपरिहार्यैव। एवञ्च सत्र परमेश्वराद्वय ब्रह्म, तदतिरिक्तं सर्वं मिथ्या—तथाहि विश्वमिदं न सद् विचारबाध्यत्वात्, नासत् प्रतीयमानत्वात्, नाप्युभयात्मकं विरोधात्, नाप्यनुभयात्मकं तत्त्वादेव, अतश्चतु शिखरोत्तर-शून्यमिदं ब्रह्मातिरिक्तं निर्वक्तुमशक्यम्। ब्रह्मणस्तु पदेनाभिधानमनुपपन्नं, निर्धर्मकत्वेन सङ्केतागोचरत्वात्। अत पदपदार्थविभागमन्तरेणैव चक्षुरादिवत् वाक्यं वाचकं ज्ञानजनकमिति ये आहुस्तैरपि शाब्दं ज्ञानमविद्यादशायां सविकल्पकमेवेति व्यवहारार्थमवश्य पदपदार्थपदवीकल्पनाऽपि स्वीकर्तव्यैव। तदेतदाह तैरपीत्यादि। ततश्च खण्डपद इवाखण्डपदेऽपि व्यङ्ग्य एव विध्यादिरित्याह तत्पक्षेऽपीति।

---

35 अपर इत्यखण्डवादिना द्वैविध्य प्रकटयता टीकाकृताऽत्र वैयाकरणसाधारण्याद्विवर्तवादिना भर्तृहरिप्रभृतीनां मतस्य वैलक्षण्यमाविष्कृतम्। तत्राद्यमते 'अपोद्धृत्यैव वाक्येभ्य प्रकृतिप्रत्ययादिव'दिति तन्मतविवरणप्रसङ्गे व्यक्तिविवेकव्याख्याने इदमुक्तं—'अपोद्धृत्येति वैयाकरणदर्शने वाक्यस्यैव वाचकत्वं तत्र पदानामपोद्धृत्याऽन्वाख्यानं यथा पदेभ्य प्रकृतिप्रत्ययादीनाम्। यावता लोके पदसमुदायार्थसमुदायमवैति नावयवादिति शृङ्गारप्रकाश एतन्मत निष्कर्षं।

36 पदवाक्यावान्तरवाक्यमहावाक्यादिक्रमेण विभागो हि निबन्धकृतां शैलीति विस्तारतस्तदुल्लेख।

**ननु वाच्यादसम्बद्धं तावन्न प्रतीयते, यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवञ्च सम्बन्धाद् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति।**

---

अथ शब्दस्य व्यङ्ग्यं प्रति लिङ्गत्वं ध्वनिकृदेवाशङ्क्य निराकरोमित्यभिप्रेत्य[37] बोध्यस्या(वाच्यस्या)र्थस्य व्यङ्ग्यं प्रति यद्व्यञ्जकत्वं तल्लिङ्गत्वमेवेत्याशङ्कते **ननु वाच्यादि**ति। **तावच्**छब्देन न कस्याप्यत्र विमतिरिति दर्शयति (106a) इतरथाऽतिप्रसङ्गात्। तथाच ध्वनिकारः 'शब्दार्थयोः प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव व्यङ्ग्यव्यञ्जके-(कत्व)लक्षणो व्यापारः' (ध्व. आ. ३।३३ वृः १९७ पृः) इति। **एवञ्चे**ति सम्बन्धमन्तरेण नास्ति व्यञ्जकभाव इति व्यवस्थितौ ध्रुवमप्रतिबन्धोऽत्र बोद्धव्यः। **अप्रतिबन्धे** सति तस्याबश्यमभावात्। प्रतिबन्धस्तु व्यापकयोगव्यवच्छेदनाय व्याप्तिव्यतिरेकेण न विभाव्यत इत्यत आह **व्याप्तत्वेने**ति। ततश्च **नियतधर्मि**विषयतोन्नियतस्यैव। नियतपदेन सन्दिग्धाश्रयसिद्धत्वं निरस्यति। **त्रिरूपा**दिति पक्षधर्मताऽऽदिसंज्ञकरूपत्रययुक्तादित्यर्थः।

---

37 एवं ध्वनिविषये विपक्षविमतिर्ध्वन्यालोकं तदुपरि लोचनञ्चानुसृत्य लिधाऽत्र विवेचिता। वाक्यविदां मीमांसकानां मतमादौ खण्डितम्। तत्तु मीमांसामतमुपजीवतां हृदयदर्पणकृतामभिनवगुप्तपादैः प्रतिपक्षतया धर्षितानां मतविवेकेन सुष्ठु साधितम्। पदविदां वैयाकरणानां मतमधुना परामृश्यते। 'तत्र कृत्रिमशब्दार्थवादिनां नैयायिकसौगतादीनां मतं न व्यञ्जनप्रस्ताव उपयोगीत्यास्तां तद्विचारः। अखण्डबुद्धिवेद्यो वाक्यार्थ इति येषामुद्घोषस्तेषां परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्य प्रवृत्तोऽयं ध्वनिव्यवहार इति। तैः सह किं विरोधाविरोधौ चिन्त्येते' इति कृतवेदिनो मनीषा ध्वन्यालोककृतः। अभिनवगुप्तपादास्तु 'येऽप्यविभक्तं स्फोटं वाक्यं तदर्थञ्चाहुस्तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया', 'अविद्यापदे पतितैस्तैरपि व्यापारान्तरमभ्युपगन्तव्य'मित्येवदाहुः। तदुक्तेरनुरणनं मम्मटग्रन्थे। अत्र विवर्तवादिनां शब्दब्रह्मणो विवर्तं निखिलं प्रमाणयतां स्फोटमतं प्रतिष्ठापयतां भर्तृहरिप्रभृतीनां मतमालोचितम्। तैरपि प्रसिद्धादुच्चारणादिव्यापारादभ्यधिको ध्वनिर्नामोक्तः। वयमपि तथैव ब्रूम इति काऽत्र विचिकित्सा? श्रीधरादिभिरपाधारयवैदान्तिक-

तत्रानुमेये पर्वतादौ धर्मिणि लिङ्गस्य सत्त्वमेव विनिश्चितमित्येकं रूपं पक्षधर्मतासंज्ञकम्। तथा सपक्ष एव सत्त्वं निश्चितम्, समानः पक्षः सपक्षः पक्षेण सह सदृशो दृष्टान्तधर्मीत्यर्थः। सपक्ष एव सत्त्वं निश्चितमित्यन्वयसंज्ञकं द्वितीयं रूपम्। तथाऽसपक्षे चासत्त्वमेव निश्चितं, न सपक्षोऽसपक्षस्तत्रासत्त्वमेवेति व्यतिरेकसंज्ञकं तृतीयं रूपम्। यद्यपि सपक्ष एव सत्त्वमित्युक्ते सामर्थ्यादेवासपक्षे चासत्त्वमिति गम्यते तथापि द्वयोरुपादानं प्रयोगनियमार्थम्। अन्वयप्रयोगो व्यतिरेकप्रयोगो वा नियमवानेक एव प्रयोक्तव्यो न तु द्वावपीति। तदित्थं त्रीणि रूपाणि (106b) यस्य लिङ्गस्य तस्मादनुमेये परोक्षविषये प्रतिपत्तुर्ज्ञानमनुमानं यत् तद्भूय. **पर्यवस्यति**, अतो नास्ति लिङ्गलिङ्गिभावादपरो व्यङ्ग्यव्यञ्जकभाव[37] इति। यद्यपि 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥' (प्र. वा. १।३०) इति तदुत्पत्तितादात्म्याभ्यामेवाविनाभावनियमः, न च वाच्यव्यङ्ग्ययोः सम्बन्धस्तदुत्पत्तिलक्षणः कार्यकारणभावाभावात्, नापि तादात्म्यलक्षणोऽत्यन्तं भिन्नत्वेन प्रतिभासमानात् (...नत्वात्)। तादात्म्य ह्येकत्वमभिधीयते यथा वृक्षशिंशपयोः, तथापि वाच्यप्रतीति(त्य)विनाभाविनी व्यङ्ग्यप्रतीतिरिति चेत् तत्प्रतीत्योर्निमित्तनिमित्तिभावेनावस्थाना-

---

मतं संस्मरद्भिरत्र यद्विवर्तस्य सत्यासत्यत्वचिन्तनं परामृष्टं तदस्थानविहितागामतया ध्वनिसम्प्रदायसिद्धान्तबाह्यतयाऽपि नात्यन्तमुद्वेगजननं मन्तव्यम्। अर्वाग्भवानां प्रदीपकृतां 'व्यवहारे तेषां भट्टनयस्वीकारा'दित्यनेन सन्दर्भेणात्र वेदान्तिमतखण्डनं परामृष्टमिति यदुक्तं तदप्यविचारिताभिधानम्।

37 व्यक्तिवादिभिर्योमनाऽऽत्मतया विद्यमानानां रत्यादीनामलौकिकानामकृत्रिमत्वं व्यङ्ग्यव्यञ्जकप्रतीत्योरक्रमताऽतएव निमित्तनिमित्तिभावातिरिक्तं काव्यानुमानस्य तर्कानुमानाद्विलक्षणत्वं च विपोष्यते। अनुमानपक्षसमर्थकैस्तु ये लोके रत्यादयो रामादिगताः स्थैर्यभाजोऽवस्थाविशेषाः केचित्त एव काव्ये कविप्रभृतिभिर्वर्णनाद्यर्थमात्मन्यनुसंहिताः सन्तो भावयन्ति तांस्तान् रसानिति भावा इत्युच्यन्ते इति तदर्थं मुनिलक्षणसम्मतिमप्युद्धरद्भिरसंलक्ष्यक्रमव्यङ्ग्येऽपि परैर्न क्रमसद्भावानपलापान्नियमेनैव निमित्तनिमित्तिभावपक्ष उत्थापितः। तत्र रसादीनां सहृदयगतत्वमेव न सर्वगतत्वं, व्यञ्जकत्वप्रतीतिकाले हि नियमेन च व्यङ्ग्यप्रतीतिरिति नास्माकमाशयः परं व्यङ्ग्यप्रतीतिकाले तु नियमेन व्यञ्जकप्रतीतिर्भवत्येवेत्याशयेनासंलक्ष्यक्रमत्वमक्रमत्वकल्पमिति खण्डनम्।

तथाहि

''भम धम्मिअ ! वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण ॥१४३॥ (गा. स. २।७५)

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति—यद् यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

---

दस्ति तदुत्पत्तिलक्षणः सम्बन्ध इति भावः (न्या.कु.अ. १।१८ पृ.)।[39] अनुमानन्तु द्विधा स्वार्थं परार्थञ्च । स्वस्मा एव यत्तत् स्वार्थं ज्ञानात्मकम् । पर्वतादौ धूमादिकं दृष्ट्वा यस्य प्रतिपत्तुर्ज्ञानमुत्पद्यते स एव तेन ज्ञानेन परोक्षमर्थं प्रतिपद्यते नान्य इति स्वार्थं तदनुमानमुच्यते । परस्मै यत्तत् परार्थं वचनात्मकम् । त्रिरूपलिङ्गप्रतिपादकं हि वचनं परं प्रतिपादयति ज्ञापयतीति वचनमप्यनुमानशब्देनोच्यते, उपचारात् । यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानसे, धूमश्चा-[त्र]द्रव्य इति व्याप्तिपक्षधर्मतासंज्ञकं द्व्यवयवमेव साधनवाक्यं सौगतानाम् । अन्ये तु प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमन(1072)ञ्चेति पञ्चावयवं साधनवाक्यमाहुः । अग्निरत्र धूमात् । यत्र धूमस्तत्राग्निर्यथा महानसे, तथाचायं, तस्मादग्निरत्रेति निगमनमित्याख्यातमेतत् ।

**तथाही**ति—तथात्वे ध्वनिकृतोदाहृतां गाथामेव प्रथममुपदर्शयति **भम** इत्यादि । भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन । गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन ॥ कच्छं कूलं, कुडङ्गं लतागहनम् । इयं हि कस्यचिद्विविक्तनदीलतागृहे परपुरुषदत्तसङ्केतायाः पुष्पावचयादिनिमित्तं धार्मिकस्य तद्देशभ्रमणं मनोरथविघ्नभूतं मन्यमानाया उक्तिः । अत्र यौ वाच्यव्यङ्ग्यावर्थौ

---

39 सङ्केतविषयातिरिक्तवाचकादिघटितविप्रतिपत्तिपराणां तार्किकाणां मतं तावद्विचारपदवीमर्हतीति तेषामुद्देशः । एतच्च लिङ्गलिङ्गिज्ञानं समासतो ध्वन्यालोके विवेचितम् 'अस्त्यभिसन्धानावसरो व्यञ्जकत्वं शब्दानां गमकत्वं, तच्च लिङ्गत्वम्, अतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवे'त्युपक्रम्य 'तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तु'मित्यन्ते सन्दर्भे (२०१-२०३ पृ.) । व्यक्तिविवेककृद्भिर्महिमादृतैर्महिमभट्टैः स्वमतिमनोपयेति यदुपस्थापितं तत्त्वस्यैव प्रपञ्चितम् । प्रयोगोपस्थापनचेष्टोदाहरणाभ्यासैरचेष्टि नातः परं किञ्चित् । मम्मटग्रन्थे तदुदाहरणानां स्थालीपुलाकन्यायेनावमर्दनम् । परमार्थतस्तु लौकिकानुमानसोपानमलौकिकरसादिपदवीं कथङ्कारमारोहेदित्येवास्तु ।

अत्रोच्यते। भीरुरपि गुरो प्रभोर्वा निदेशेन प्रियानुरागेणान्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि, गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्। न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च। तत् कथमेवंविधाद्धेतोः साध्यसिद्धिः?

---

विधिनिषेधात्मकयोः तयोर्धूमाग्न्योरिव साध्यसाधनभावेनावस्थितिः। तदिह गोदावरीनिकुञ्जो धर्मी दृप्तसिंहसद्भावो हेतुः, कुञ्जवासिनेति तद्विशेषणेन पक्षधर्मता च सूच्यतैव। तदस्य हेतोः साध्यस्य च विश्वस्तभ्रमणविभिन्नलक्षणस्य महानसस्थान[40](महानदस्थान) लक्षणो विरोधः प्रसिद्ध एव। तदिह प्रेक्षावतः प्रवृत्तिरनिष्टसाधनाभाववत्त्वव्याप्ता तद्विरुद्धस्यात्र दृप्तसिंहत्वमिति व्यापकविरुद्धोपलब्धया भ्रमणविधेः प्रतिषेधो न तु व्यञ्जय इति। तदेतदाह अत्र गृह इत्यादि। एवञ्च सर्वस्यैव ध्वनेरनुमानान्तर्भावो वेदितव्यः। अनुमानस्य(107b) तदु(तद)पेक्षया महाविषयत्वात्, महाविषयत्वञ्चास्य ध्वनिव्यतिरिक्तेऽपि विषये समासोक्त्यादौ गुणीभूतव्यङ्ग्यादौ च सर्वत्र सम्भवात्।

तदित्थं ध्वनिसमव्यापकं पूर्वपक्षमुक्त्वा तत्र सिद्धान्तमाह—**अत्रोच्यत** इति। अत्रेति पूर्वपक्षे उच्यत इति सिद्धान्तः। इह धार्मिकेत्यप्रतिपत्तो भीरुर्वा स्याद्वीरो वा। तत्राद्ये तावद् यद्भ्रमणानुमानमाशङ्कितं तदसमीचीनं हेत्वाभासात्। तथाहि सव्यभिचारादयो हेतुलक्षणाभावादहेतव एवेंयुक्तमेव। तत्र सव्यभिचारोऽ**नैकान्तिकः**। एकोऽन्तः सपक्षः, अपरश्च विपक्षस्तदुभयगामीत्यर्थः। तथा चा(ना)यं हेतुरित्याह **भीरुरपीति**। **प्रियानुरागेणेत्य**न्येन प्रयोजकाभिमतकर्तृत्वं दर्शितम्। [अन्येन]**चैवम्भूतेने**ति निधिलाभप्रत्याशाऽऽदिरूपेण। **सत्यपी**त्यादिना साध्याभाववति साधनसद्भावः प्रकटीकृतः। द्वितीये तु साध्यविपरीतव्याप्त्या विरुद्धम्। वीरा हि सिंहव्याघ्रादिकसुपरप्लुतमृगयाकूतूहलोत्तरलितास्तदध्यासितं प्रदेशमवश्यं परिभ्रमन्त्येव। एतच्च 'व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्' (७५ पृ) इति ग्रन्थ आश्रयभेदात् प्रतिपादितमेव। पुनस्तत्तिलघीयस्तया लुब्धकाकादिवत्परिहार्यत्वं पौरुषाविषयत्वञ्चेति। ततो भयमिव (208a) भयं धीरेऽपि सम्भाव्यत एवेत्याह—**शुनो बिभ्यदपी**ति। अथ स्वरूपासिद्धत्व

---

40 प्राक्तनान्येन केनापि लिपिकरेणेत्थं पाठः कल्पितः, अनुमितौ व्याप्तेरेव हेतुत्वेन ग्रहणात्।

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।

व्यक्तिविवेकादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं

---

दर्शयति **गोदावरीति**। तत्र सिंहसद्भावः शब्देन प्रतिपादितः। शब्दस्तु सर्वत्र नार्थाविनाभावभाजनम्, नदीतीरे पञ्च फलानीत्यादिवदनाप्तोक्तौ व्यभिचारात्। यदाहुः 'आप्तोपदेशः शब्द' इति (न्या. सू. १।१।७)। 'आप्तः खलु साक्षात्कृतधर्मा यथा-प्रमितस्यार्थस्य चिख्यापयिषया प्रवृत्त उपदेष्टा करणपाटववान्, तस्योपदेशः परप्रयोजन-वद्वचनमात्रं शब्दः प्रमाण'मिति (वा. भा.)। तत्र च वाच्यगतं ततोऽधिकं सत्यत्वमनु-मानान्निश्चीयत इति वाच्यस्य प्रतीतिर्नानुमानिकीत्युक्तमेव। अतएव **प्राभाकराः** श्रूयमाणेषु लौकिकवाक्येषु व्यभिचारित्वशङ्कानिरासार्थं वाक्यार्थविषयं वक्तृज्ञानमर्थसातत्यमिति निर्णीत-वन्तः। न चात्र तथा, विप्रलिप्साऽऽदेः सम्भवात्। अतएव प्रसिद्धैतद्व्यापारान्तर-प्रभृतीन् परित्यज्य मत्तेभकुम्भपाटनैकरसिकदृप्तकेसरिणः कौलेयकवधाभियानलक्षणमनौचित्य-मपि न सम्भावनीयम्। तदेतदाह **न च वचनस्येति**। तदित्थं वैलक्षण्यक्षतिकृदाक्षिप्तो-ऽयं हेतुरित्याह **तत्कथमिति**। भयानकरसविप्रकृते चात्र निषेधावगतिः, धार्मिकस्य भीरु-प्रकृतित्वनियमावगममन्तरेणैकान्ततो निषेधगमस्याऽभावात्।

(108b) केवलार्थसामर्थ्यं निषेधे निमित्तमयं नायमर्थशक्तिमूलानुरणनरूपस्य वस्तुध्वनेर्विषय इति **भट्टनायकः**। अत्राप्युच्यते—भयानकरसावेशोऽयं वक्तुर्वा स्यात् प्रतिपत्तुर्वा? तत्र न तावद्वक्तुः, भयकारणसद्भावविवक्षामात्रेण तस्य भ्रमोत्पत्तेरे-वासम्भवात्। प्रतिपत्तुस्तु रसावेशो रसाभिव्यक्त्यैव। रसस्य च वाच्यत्वं केनापि नाभ्युपगतं किन्तु व्यङ्ग्यत्वमेव। किञ्च प्रतिपत्तुरपि रसावेशो न नियतः। न ह्यसौ नियमेन भीरुधार्मिकसब्रह्मचारिहृदय इत्युक्तमेव। अथ तद्विशेषेऽपि सहकारि कल्प्यते तर्हि वक्तृप्रतिपत्तिप्रतिभाऽनुप्राणितो ध्वननव्यापारः किं न सह्यते? किञ्च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति ध्वनेरेवैतत् साम्राज्यम् (ध्व. आ. लो. १।४)। वस्तुतस्तु नात्र भयानकरसानुवेधः किन्तु कुलटायाः सम्भोगाभिलाषसङ्केतस्थानोद्दिविशिष्टकाव्य-संवलनोचितशृङ्गाररसानुवेधः सहृदयहृदयावर्जक इत्यास्तामेतत्।

निःशेषेत्यादौ तु हेतोरनैकान्तिकत्वं स्फुटमेवेत्याह **तथेति**। तर्हि व्यञ्जकत्वमेषां कथमिति चेदाह **व्यक्तिविवेकादिना चेति**। व्यक्तिर्व्यञ्जनव्यापारः। अधमपदेन

प्रमाणप्रतिपन्नमिति कथमनुमानम्? एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यन- पेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तद्दूषणम् ॥

## इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥५॥

नीचवृत्तिना। तथाचोत्तमसंसर्गविशिष्टवतो नीचसंसर्गः, तेन त्वयि रक्तूला (स दूला)मनुरज्यत इति। (109a) अधमपदसहकृतेन वापीस्नानतुल्ययोगक्षेमरत- चिह्नाना चन्दनच्यवनादीना व्यञ्जकत्वम्। नन्वेवमधमत्वमेव गमकमस्त्विति चेदत्राह— न चेति। नन्वेवमुपपादकधर्मासम्बन्धात् कथं व्यङ्ग्यस्य प्रतिपत्तिरिति चेदत्राह— एवंविधादिति। प्रतीतिमात्रसारं हि काव्यम्। न ह्यग्निष्टोमादिवाक्यवत् सत्यार्थ- प्रतिपादनद्वारेण प्रवर्तकताप्रामाण्यमन्विष्यते, प्रीतिमात्रपर्यवसायित्वात्। प्रीति(ते)रेव चालौकिकचमत्काररूपाया व्युत्पत्त्यङ्गत्वात्। अतो भ्रमणस्यासत्यत्वनिरूपणमनुप- युक्तमेव, तावतैव विन[ने]येषु विधिनिषेधव्युत्पत्तिसिद्धेः[41]। प्रमाणपरीक्षा ह्यत्र प्रत्युत कर्तुरहृदयत्वं शुष्कतर्ककर्कशहृदयत्वञ्च प्रकाशयति, निरुपयोगिग्रहणात् (ध्व.आ.लो. २०३पृः)। एतच्च रसाभासादिप्रस्तावे प्रागप्युक्तमेव। अनुमानपक्षे त्वर्थान्तरप्रतिपत्तिर्नोपपत्तिमन्तरेण पटीयस्यपि जातु जाघटीतीत्युक्तमेव। एवंविधस्यापि ध्वनेर्यद्यत्रानन्तर्भावस्तर्हि सहृदय- संवादापरपर्यायसहृदयत्वपरवशीकृतत्वेनानुमानस्मरणादिसरणिमनारुह्य तन्मयीभवनोचित- चित्तवृत्तिचर्वणाप्राणतया वाच्यैर्विभावादिभिः सदैव यो रसः प्रतीयते तत्र लौकिक- कार्यकारणानुमानादिसंस्कृतहृदयानां तटस्थानां (109b) प्रतीतिरेव नास्तीति[42] धूमाव-

---

41 'विनेयानुन्मुखीकर्तुं' काव्यशोभार्थमेव वे'त्यादिना यद्यप्युभयोरप्येतयोरुपस्थापनं तथापि कविसमयविमर्शाऽविसंवादितया गृहीतस्य रसादितात्पर्यौपयिकस्य सुख- प्रीत्यानन्दादिपर्यायस्य वस्तुन उत्कर्ष स्थापितः। प्रीत्यात्मा च रसस्तदेव नाट्य- (काव्य)मित्याद्युक्तिभिरभियुक्तैः स्थापितम्।

42 'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्। व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाच'मिति नमस्कारोद्देश्यश्लोके यत् साहसमाविष्कृतं तस्योत्तरविधायकमिदम्। अनुभवसिद्धे रसादिलक्षणेऽर्थेऽन्वयव्यतिरेकानुविधानकार्यकारणसमाधानादि- चिन्ता नितरामप्रासङ्गिकी। 'निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः'।

गमानन्तराभिसरणवद्विभावादिप्रतिपत्त्यनन्तरं रसादिप्रतिपत्तिरिति 'अशक्तास्तत्पदं गन्तुं ते नो निन्दां प्रचक्रिरे' इति न्यायादनुमानाङ्गीकारपातालमसा[ख]भिदधानाः प्रतीतिपरामर्शबाह्यत्वादनादरणीया एव। एवञ्च लिङ्गलिङ्गिभावादपरोऽस्त्येव व्यङ्ग्यव्यञ्जकभाव इति स्थितम् ॥

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके

पञ्चम उल्लासः ॥५॥

---

ते च वैयाकरणतार्किकमन्यजरन्मीमांसकादय इति सम्प्रदायसम्मतं गणनम्। तेषां विप्रतिपत्तिपरम्पराऽशक्तिमत्तोज्जृम्भिता न वास्तवीति। 'अशक्ता' इति लौकिकन्यायोद्धृतम्। 'तामुपहास्यतामात्मनः परिहरन् कथमविसन्धानसचेता भ्रूयात्। अस्त्यविसन्धानावसरो व्यञ्जकत्वं शब्दानां गमकत्वमिति ध्वन्यालोकग्रन्थे सूत्रणावनिकयोक्तम्। व्यक्तिविवेके तैर्वाद एवारब्धो न सिद्धान्तनिष्ठेति, न च तत्र प्रतिभातिरस्कृतिरिति सन्तोष्टव्यम्। 'अन्यैरनुल्लिखितपूर्वमिदं ब्रुवाणो नूनं स्मृतेर्विषयतां विदुषामुपेयाम्। हास्यैकचारणगवेषणया नवार्थतत्त्वावमर्शपरितोषसमीहया वे'ति ग्रन्थोपसंहारपद्यं स्मरणीयम्।

शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥४८॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे वा शब्दस्य ।

तथाचोक्तम् ( भा. का. अ. १।१३-१४ )—

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताऽऽननम् ॥

---

अथोत्तममध्यमकाव्यस्वरूपनिर्णयान्तरितमवरकाव्यस्वरूपं स्मारयति सूत्रकारः—**शब्दार्थेति** । **पूर्वमिति** द्वितीयोल्लासे (प्रथमोल्लासे) शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतमिति कारिकांशेन (५ का.) । तच्च न स्वातन्त्र्येण द्वैरूप्यमित्याह—**गुणप्राधान्यत** इति । एवञ्च यद्यपि शब्दार्थचित्रे द्वे अन्योन्यपरिहारेण न सम्भवतस्तथापि 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायात् यस्य यत्रोद्रेकात् प्राधान्यमवसीयते तेन तत्र व्यपदेशो जायत इत्याह **नत्विति** ।

अत्रैव **तथाचोक्तमित्यादिना** इष्टं द्वयन्तु न इत्यन्तेन प्रामाणिकसम्मतिं दर्शयति[1] ।

---

१ अत्र 'एतासु कारिकास्वर्थं परिच्छेत्तुमपारयन् । पदे पदे पलायिष्ट सान्धिविग्रहिक-स्खल'निति (४र्थ पृ: २५ खण्डे) यच्छ्रीविद्याचक्रवर्तिना श्रीधरमताक्षेपे साटोपं गर्जनं स पुनरनुत्थानहतः पक्ष इति न बहुमानमर्हति । चित्रकाव्यमाहोस्विद्-भागशो द्विरूपमिति सन्देह उद्भावित. । 'सन्दिग्धेऽर्थे प्रवर्तनार्हाणां पूर्वाचार्य-न्यायकारिकाणामवतरणिका कृता भवती'ति तेषां घोषणं भामहग्रन्थसारस्या-ज्ञानमेव प्रकटयति । तच्च स्वातन्त्र्येण न द्वैरूप्यमिति श्रीधरनिर्देशः समञ्जस एव । स एवाचार्यमम्मटस्य सिद्धान्त इति तु न काऽपि विप्रतिपत्तिः । अनुप्रासादि-रूपायाः शब्दधर्मविच्छित्तेरन्यैव औपम्यादिधर्मविच्छित्तिरिति तु सिद्धमित्युक्तिस्तु ( सम्प्र. प्रका. ४ पृ. ) मूलन्यायघातिनी । अर्वाग्भवैः रसगङ्गाधरकृद्भिः काव्य-विभागप्रसङ्गे सैवाङ्गीकृतेति द्रष्टव्यम् । परं रसगङ्गाधरकृन्मम्मटमतं दूषयितुं प्रवृत्त इत्यवधेयम् ।

रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।

---

उक्तमिति भामहेन ( का. अ. १।१३-१५ )। **तस्येति**—शब्दार्थयुगलात्मनः काव्यस्य । यद्यपि रसनिष्यन्दमयस्यास्य सङ्घटनाऽऽश्रितगुणौचित्यनिबन्धनं सौन्दर्यमस्त्येव ( ध्व. आ. ३।६ वृ° द्र° ) तथाऽप्यलङ्काराणामवश्यमुपादेयतेति दृष्टान्तमुखेन द्रढयति[2]—**न कान्तमपीति** । **विभाति** विशेषेण शोभते । बहिर्भवं बाह्यं हाराङ्गदादिवत्, शाब्दमित्यर्थः । विशिष्टोत्पत्तिर्व्युत्पत्तिर्विशेषलक्षणप्रभवेत्यर्थः । **नार्थव्युत्पत्तिरीदृशी**—अर्थस्य स्वतःसिद्धत्वात् लक्षणसाध्या नास्ति, [ अपि तु ] विशिष्टसूक्ष्मार्थपरिचयचातुरीलक्षणा व्युत्पत्तिः कवेरस्त्येवेति भावः । **शब्दाभिधेयेति**—अभिधेयोऽर्थः, शब्दार्थालङ्कारभेदादित्यर्थः ।

---

2 द्रढयतीति 'क' पुस्तके पाठः ।

3 इयम दण्ड्यादिप्राचीनैरुद्दिष्टाऽभियोगापरपर्याया काव्यसम्पत्तिहेतुभूता कविकौशलशैली शक्तिः, प्रतिभानं वर्णनीयवस्तुभूतनूतनोल्लेखशालित्वं व्युत्पत्तिस्तदुपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकौशलमिति शक्तिव्युत्पत्त्योर्भेदप्रदर्शनपरो ध्वन्यालोकपरिलोचनमप्य इमामेव कक्षीकरोति । 'क्रियायां सम्प्रवृत्तस्य हेवाकानां निबन्धनम् । कस्यचिन्मृगडिम्भादेः स्वभावोक्तिरुदाहृते'ति प्राचोद्भटेन लक्षिता क्रमप्रधानावयवा स्वभावोक्तिर्व्युत्पत्तिसाधकोपादाने प्रधनपाटवं प्रकटयति । यद्वा 'व्युत्पन्नमिति गौडीयैर्नातिरूढमभीप्यत' इति दण्डिना कटाक्षिता सुसिद्धसंस्कारसारा कविक्रियैव व्युत्पत्तिरयेनात्र व्यपदिश्यते यस्या द्राक्षापाक इति वामनोपज्ञा संज्ञा यस्याश्च सामान्यतो महत्त्वं श्रीधरेण तृतीयोल्लासविवेकेऽस्माभिश्च काव्यमीमांसामवोदारेण तत्र विदितम् ।

उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥१४४॥

(व. जी. १० पृ: ; स. क. आ. १।२७)

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥१४५॥

---

प्रथममिति । छेदच्छविरिति । छेदक्रियावान् पदार्थश्छेदशब्देन प्रतिपाद्यते । अत्र यद्यपि[4] 'क्रमप्रधाना स्वभावोक्ति'रित्यर्थचित्रत्वमप्यस्ति तथापि वर्णानामनपेक्षितार्थानामेव सादृश्यनिबन्धनं वैचित्र्यं सहृदयहृदयावर्जकमित्यनुप्रासालङ्कारस्य प्राधान्याच्छब्दचित्रत्वम् । **सरसविसिनीकन्दच्छेदच्छविरिति** तु हीनोपमानता चिन्त्यैव । **ते दृष्टीति**— नीचत्वमधमत्वं खर्वत्वञ्च । अलीकमसत्याप्रिययोर्ललाटे च । **कालता** श्यामता सपाप्मताऽपि । **कुटिलतामिवेति**—सहोपमा, कुटिलतया सह कालतां न त्यजन्तीत्यर्थः । श्लेषश्च शब्दालङ्कारो गुणीभूतः ।

ननु चाव्यङ्ग्यं चित्रतया निरूपितं, न च काव्यं तथा सम्भवति, सर्वस्मिन्नेव काव्यप्रकारे रसादीनां सद्भावात् । (110b) तथाहि चतुर्वर्गव्युत्पत्तिबाह्यस्य संस्पर्शः काव्ये नोपपद्यते, तस्यावस्तुत्वात् । वस्तु च सर्वमेव जगद्वर्ति ध्रुवं यस्य कस्यचिद्भावस्य भाऽङ्गतां[5] प्रतिपद्यते, यतश्चित्तवृत्तिविशेषा रसादयः । न च तदस्ति वस्तु यत्र चित्तवृत्तिमुपजनयति[6] तदनुपादाने वाग्विषयविषयतैव तस्य न स्यात् । कविविषयश्च चित्रतया निरूप्यते । तद्गोचरे चावश्यं विभावानुभावव्यभिचारिपर्यवसायितेति । अस्ति च प्रकृतोदाहरणद्वयेऽपि किञ्चिच्छृङ्गारवीररसप्रकाशनं, तत् कुतश्चित्रमेतदित्याशङ्क्याह

---

4 एतच्च प्राचीनस्य कस्यापि लक्षणं रुद्रटोक्तजातिलक्षणमनुसारयति । तच्च संस्थानावस्थानक्रियाऽऽदि यद्यस्य यादृशं भवतीत्यादिना प्रकटितं 'हरति मुचिर'-मित्युदाहरणेन च निदर्शितम् ।

5 ध्रुवं कस्यचित् रसस्य भावस्य चाङ्गताऽर्थमिति "क" पुस्तके पाठः ।

6 वृत्तिविशेषमुपैतीति "ख" पुस्तके पाठः ।

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्यवसानं, तथाऽपि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत् काव्यद्वयमुक्तम्। अत्र च शब्दार्थालङ्कार-भेदाद्बहवो भेदाः, ते चालङ्कारनिर्णये निर्णेष्यन्ते ॥

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम षष्ठ उल्लासः ॥

---

**यद्यपीति**। परिहरति **तथापीति**। 'विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चने'त्यादिना (ध्व. आ. २।१८) योऽलङ्कारनिवेशनसमीक्षाप्रकारो ध्वनिकारेणोक्तस्तमनुस्मरन् यदा कविः शब्दालङ्कारमर्थालङ्कारञ्चोपनिबध्नाति तदा विवक्षा[7]-प्राधान्याद्रसादिशून्यताऽपि सम्भवति यथा पाकानभिज्ञसूदविरचिते मांसपाकविशेषे। अथवा वाच्यसामर्थ्यवशेन वस्तुसौन्दर्य-बलाद्रसादिप्रतीतिरवश्यं भवन्त्यपि विवक्षाविरहात् परिदुर्बला भवति, असमञ्जसदधिगुड-मरिचसंयोगनिर्मितशिखरिणीरसास्वादवत्[8]। विवक्षोपरूढ एव च काव्यशब्दानामर्थः। तदेतदाह **स्फुटस्येति**। (१११a) एतेन रसस्यात्यस्फुटतरत्वं विवक्षितम्, अस्फुटत्वे गुणीभूत-व्यङ्ग्यस्य सम्भवात्। तदिदं सर्वथा रसादिप्रतीतिविरहस्तद्दौर्बल्यमित्युभयथाऽपि नीरसत्वे सति चित्रविषयतेति तात्पर्यम्[9]। तदाह ध्वनिकारः (३।४२-४३. ध्व. आ.

---

7 तदा तद्विवक्षितेति 'क' पुस्तके पाठः।

8 सरसस्वादुशीलायां पाककलायां प्राचीनानामादरं आर्यसाहित्ये तदनुप्राणिते देशभाषासाहित्ये च साग्रहमुपवर्ण्यते। शिखरिणीपाके टीकाकृत्प्रकटिते पटिमा यथोपाधीयते तथाविचक्षणानां स्खलनगलनञ्च तथैव सहजमिति विगीयते च। वङ्गोत्कलमिथिलाऽऽदिषु देशेषु प्राचीनानां दध्योदनमिवैतत्सदृशानाममृतकर्पूरक्षीर-सारमनोहराहरिवल्लभप्रभृतीनां बहुलं प्रचलनं संस्कृते भाषायां च मध्ययुगीयकाव्येषू-पस्थाप्यते। यथा बङ्गीये श्रीचैतन्यचरितामृतकाव्येऽन्नकूटवर्णनान्तराले (मः ४।६७-७५) शिखरिणीप्रसङ्गे—दश विप्र अन्न रान्धि करे एक स्तूप ॥ तार पाशे दधि-राशिर पर्वत हैल। सूप आदि व्यञ्जन भाण्ड चौदिके धरिल ॥ तार पाशे दधि दुग्ध माठा शिखरिणी। पायस मत्थनि सर पाशे धरि आनि ॥ श्रीकृष्ण-नैवेद्यस्य वैचित्र्यवर्णने च—(मः १४।२५-३४) दधि दुग्ध ननी तक रसाला शिखरिणी। शलवण मुद्गाङ्कुर आदा खानि खानि ॥

9 तथा च साहित्यचूडामणिकृता निष्कर्षः 'शब्दार्थचित्रघटनापटवः कवीन्द्राः संस्थानवर्णगतिबन्धविमृष्टशोभाम्। मत्पोदरामनुदरामिव राजकन्यामल्पध्वनिं

ध्वः ) रसभावादिविषयविवक्षाविरहे सति । अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा । तदा नास्त्येव तद् काव्यं ध्वनेर्यत्र न गोचरः ॥
इति । यद्वत्र इति यमकश्लेषबन्धादय उपमाऽऽदयश्चेति ।

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते [10]काव्यप्रकाशविवेके
षष्ठ उल्लासः ॥

---

मणितिभङ्गिनिभामनन्तो'ति । इत्थमेव हि साहित्यदर्पणकृता यैरानन्दवर्धनकृत-
विनिगमकप्रमाणमनुसृत्य चित्रस्य काव्यत्वं प्रत्याख्यातम् । रसगङ्गाधरकृता-
ऽर्धचित्रस्य जागरूकगुणीभूतव्यङ्ग्यकाव्यरूपेण स्वीकारः शास्त्रेऽस्मिन्नित्यालङ्कार-
पद्धतेर्घ्यवैचित्र्यस्वीकारेणाभिनवोऽपि प्राचीनशैलानुसारो वस्तुसामान्यपरिग्रह-
मूलश्चेति ध्येयम् ।

10 इति काव्यप्रकाशविवेके श्रीश्रीधरविरचिते इति 'ख' पुस्तके पाठः ।

## सप्तम उल्लासः

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥४९॥**

---

उल्लाससङ्गतिमाह **काव्यस्वरूपमिति**—"सम्यक् प्रयुक्तो हि शब्दः स्वर्गे लोके च कामधुग् भवति" ( महाभाष्य १।१ ), दुःप्रयुक्तः पुनरधर्माय सम्पद्यते ( का- आ. १।६ द्र० ) । सम्यक् प्रयोगश्चास्य तदोपपद्यते यदा दोषहानगुणोपादानादिकं स्यात् । अत्रापि दोषहानमेव तावत् प्रथममुपादेयं यतः कमनीयरूपादिसम्पदुपेतमपि वपुः श्वित्रबिन्दुनैकेन दौर्भाग्यमनुभवति । उक्तञ्च ( का. आ. १।७ ) तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन । स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ किञ्च—नाकवित्वमधर्माय मृतये दण्डनाय वा[1] । कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥ इति (भामह का. अ. १।१२)। दोषाश्च निःशेषतः समुद्दिष्टलक्षणाः (11b) सुज्ञाता भवन्ति । न च विभागः सामान्यलक्षणं विनेति प्रथमं तदाह **मुख्यार्थेति** । शब्दार्थशरीरं काव्यं तत्र च करचरणाद्यवयवप्रायाः शब्दा बुद्ध्यादीन्द्रियस्थानीया अर्थाः । रसस्त्वात्मा । "यत् कैश्चिद्विपश्चिद्भिरितिवृत्तादिभिः सह रसादीनां धर्मधर्मिभावव्यवहारो न त्वात्मशरीरव्यवहार इत्यभ्युपगतं त एवं प्रष्टव्याः, किं रसादयो वाच्यधर्मा रूपादिसदृशा आहोस्वित् माणिक्यजातित्वसदृशाः ? तत्राद्ये यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं सर्वस्य द्रष्टुः प्रतिभासते तथा सहृदयस्य चासहृदयस्य वाच्येनैव रसादयः प्रतिभासेरन् । न चैवम्, असहृदयान् प्रति नैव भासते । द्वितीयेऽपि यद्यपि माणिक्यगतमसृणत्वस्निग्धत्वार्चिष्मत्त्वादिलक्षणं जात्यत्वं वैकटिकस्यैव संवेद्यं नेतरेषां तथा काव्यगतं रसादिरूपं सहृदयस्यैव संवेद्यं नेतरेषामिति सर्वसाधारणः प्रतिभासः प्रतिरोद्धुं शक्यस्तथापि यथा जात्यत्वे प्रतिभासमाने वैकटिकेन

---

[1] 'धर्मविलसधर्माय व्याधये' इत्यादि मुद्रितपुस्तके पाठः ।

हतिरपकर्षः। 'शोङ्काया इत्याद्यग्रहणाद्वर्णरचने।

विशेषलक्षणमाह—

तस्य जात्यत्वस्य[2] रत्ने रत्नस्वरूपादतिरिक्तत्वं नैव न लक्ष्यते रत्नस्वजात्यतयोरभेदात् तथा रसादीनामपि विभावादिव्यतिरिक्तत्वमेव लक्ष्यते। न चैवम्।" (ध्व. आ. ३।३३ वृ. लो.)। न खलु विभावादय एव रसा अपि तु रसास्तै (६० पृ:)रित्यादिना भेदस्य बहुधा प्रतिपादितत्वात्। तस्मात् स्थितमेतत्, रसादयो जीवभूता वाच्यादयस्तु शरीरभूता इति जीवशरीरव्यवहारो न च गुणगुणिव्यवहार इति। एवञ्च मुखे प्रारम्भे प्रधानतयेहं '-विषयीभवतीति स एव मुख्य इत्याह रसश्चेति। **चोऽवधारणे**। **वाच्यो** विभावादिरूपः। अतः सोऽपि यथाऽऽश्रये शरीरे मुखं प्रधानं तथाऽत्र मुखमिव **मुख्यः**। विशिष्टैरेव घटनाऽऽदिभिरुपनीयमाना विभावादयो रसमयत्वेन प्रतिभासन्ते[3], अतस्तेष्वपि स इति। स दोषः। तेन रसप्रतीतिविघ्नविधातृत्वात् प्रतिपन्नप्रतीतेः प्रस्तुताया उद्घातभाव-[4] परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीति। पारम्पर्येणापि[5] तं प्रति यस्य दुष्टत्वं तस्यापि चेदत्यन्तहेयता तर्हि यः साक्षादेव रसभङ्गहेतुः स प्रकृष्टो दोष इति तस्यान्तरङ्गत्वं सुव्यक्तमेवेति। आस्वादयितृ(।१२।)णां यत्र च सत्काव्यविश्रान्तिस्तदेव रससर्वस्वम्। तत्र **हति**शब्दस्य साक्षाद्वाच्योऽर्थो न सङ्गच्छत इति व्याचष्टे **हतिरपकर्ष** इति।

---

2 अत्र 'तत्र चे'त्यादि 'जात्यत्वस्ये'त्यन्तोऽंशः 'क' पुस्तके स्खलितो लक्ष्यते।

3 पद्यरूपा रसा इति प्राचीनानामुद्भटादीनां सिद्धान्तोऽत्र कटाक्षितः। नव्यमते विभावादयोऽभिव्यञ्जकपादानभूता रसस्य।

4 एवं 'ख' पुस्तके। उद्घातद्वयः......इति 'क' पुस्तके पाठः।

5 मूलकारिकायां मुख्यार्थपदेन साक्षात् सङ्केतितस्यार्थस्य ग्रहणं कथं न स्यादित्यपेक्षायां 'रसश्च मुख्य'इति, स्वरूपतोऽन्यथा ग्रन्थकृता ध्वनिवादानुयायिसिद्धान्तानुसारेण रसदोषाणां मुख्यता स्वीकृता, कथं तर्हि वामनरुद्रटादिमतमनुसृत्य पददोषप्रभृतीनामादाववतरणमिति प्रश्ने 'तदाश्रयाद्वाच्य' इति निर्देशः। अस्य कारिकांऽशस्य 'वाच्योऽपि मुख्यार्थ' इति 'अभिधाव्यञ्जनयोरुभयोरपि मुख्यत्व'मित्यादि च केषाञ्चित् कारानुशासनं विवरणम्। श्रीधरस्तु पारम्पर्येणापीति समीचीनं मार्गमनुसरति।

दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥
सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥५१॥
श्रुतिकटु परुषवर्णरूपं कष्टम् । यथा—
अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥१४५॥
अत्र कार्तार्थ्यमिति ।
च्युतसंस्कृति व्याकरणलक्षणहीनम् । यथा—

---

दुष्टमिलनेन प्रत्येकमन्वयः । यद्यपि वाक्यस्य प्रयोगयोग्यतायाः प्रयोगानर्हतायाश्च निश्चयार्थमयं परामर्शस्तथापि वर्णादिष्वपि निर्दोषेषु वाक्यमपि तदारब्धं तथाविधं भवतीति पदैकदेशादिगतदोषनिरूपणमुपपद्यत एव । यदाह—'यादृशाद्धि जायते तादृगेव भवती'ति । एवञ्च पदैकदेशगतदोषनिरूपणस्य प्राथम्ये न्याय्येऽपि पदैकदेशस्य प्रविरलविषयत्वमित्यादौ पददोषा उक्ताः । प्रथमं हि पदमुच्चरितं श्रुतिपथमवतरति ततस्तावतैव यस्य वैरस्यावहत्वं स प्रथमनिरस्यो दोष इत्याह श्रुतीति । दुर्योचरो वर्णः परुषस्तदारब्धत्वात्तदात्मकत्वम्, अतएव कष्टोच्चारणीयतया कष्टमिति[6] ।

अनङ्गेत्यादि । मङ्गलगृहं शस्तं स्थानमायतनम् । कृतार्थस्य भावः कार्तार्थ्यमिति पदं माधुर्यव्यञ्जकवर्णरचनागुम्फितमपि श्रवणसमकालोद्वेजकत्वादास्वादयितॄणां शृङ्गारास्वादविघ्नं विधत्त इति दुष्टम् । अत एवंविधानि पदानि कविभिः शृङ्गारे त्याज्यानि । श्रुतिसुखकरमपि यत्तु स्वं रूपमेव(12b)विरुद्धं तद्धेयमित्याह—च्युतेति । च्युता स्खलिता संस्कृतिः संस्कारो यत्र । लक्ष्यते प्रकृतिप्रत्ययविभागपरिकल्पनयाऽनेनेति लक्षणं तेन हीनं त्रिमुनि-

---

6 अत 'परुषवर्णरूपं कष्ट'मिति श्रीधरधृतपाठः । अन्येषु केष्वपि मूलकोषेषु तथैव पाठो दृश्यते ( T.S.S. edn. II ६ पृ. fn. ) । सरस्वतीकण्ठाभरणे दोषस्यास्य कष्टमिति व्यपदेशः (६ पृ.) 'पदं श्रुतेरसुखदं कष्टमित्यभिधीयत'मिति··· । अत्र रत्नेश्वरकृतटीका भाष्यप्रकाशगतालोचिका द्रष्टव्या । पुनर्यत्किञ्चिदेव वा ।

पतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत् पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥१४६॥

( सू. जी. ११०७ )

अत्रानुनाथत इति । "सर्पिषो नाथते" इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम् 'आशिषि नाथ' (पा. १।३।२१ वाः) इति । अत्र तु याचनमर्थः । तस्मात् 'अनुनाथति स्तनयुग'मिति पठनीयम् ।

---

प्रणीतव्याकरणोपात्ततद्विशेषरहितमित्यर्थः । 'देशीपदानान्तु[7] संस्कारशून्यतया-देशावानन्तर्भावः'। पतदित्यादि मन्दविपक्वं कमपक्वम् । हन्तेति विस्मये । पुलिन्दः शबरः । पत्रं मयूरपक्षः । कुञ्जरकुलं कर्तृ कुम्भाभयाभ्यर्थनादीनं त्वामनुनाथत इति । याचनायामनुनाथतीति स्यात्तु [अनु]नाथत इति । अर्थद्वारेणापि पदस्य दुष्टत्वमङ्गीक्रियत एव, कष्टव्यतिरिक्तस्य सर्वस्य तद्रूपत्वात् । गावीगोण्यादीनामपि हि विषयान्तरे साधुत्वं गवार्थत्वे तु दुष्टत्वम् । पदार्थान्तरापेक्षत्वाद्वाक्यगतं दुष्टम्, अथ कथं पददोषोऽयमिति चेत्, न, प्रकृत्यर्थमात्रस्योपसंग्रहणेन नियमनात्, नाथतेरात्मनेपदिन 'आशिषि नाथ' (पा. १।३।२१ वाः) इत्यात्मनेपदविधानमाशिषि नित्यार्थं, तेन याचनाऽऽदौ विकल्प इति ज्ञापितं भवति । अतएव 'नाथसे किमु पतिं न भूभृतः' (कि. भ. १३।५६) इत्यादि सिध्यतीति क्रीडआदिसूत्रे (पा. १।३।२१) मैत्रेयः । ज्ञापकसमुच्चये च पुरुषोत्तमदेवेनाप्येवमुल्लिखितम् । अत उदाहरणान्तरमत्र बोध्यम् । यथा 'महाराजन् शृणुष्वेदं स्वादितोऽद्य विधात्रया । भाग्यवन्तस्य पुंसस्य पिता मरति यौवने' इत्यादि ।

---

7 'देशीमपदाना'मिति (ख) पुस्तके पाठः ।

8 यत्त्वस्याचार्यहृदयापरिज्ञानात् टीकाकृतः श्रीधरस्यातीव साहसमुदाहरणान्तरप्रदर्शनं (सं. प्र. ११ पृः २४ सं.) इति विपोषितं तत् खलु मैत्रेयरक्षितपुरुषोत्तमप्रभृतीनां प्राच्यदेशीयानां वैयाकरणप्रकाण्डानां मर्यादाबोधेन सोढव्यम् । प्राचीनाष्टीकाकृतो रुचकश्रीधराद्या 'न हि कश्चिन्महाभाष्यकृति मम्मटाचार्ये स्खलनोद्भाव्यं प्रेक्षावाननुमन्यत' इत्यादि वचनं न सम्यग् नापि विचक्षणपद्धतिरिति मन्यन्ते ।

अप्रयुक्तं तथाऽऽम्नातमपि कविभिर्नादृतम्। यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥१४७॥

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' (अ. को. ।१।) इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते।

असमर्थं यत्तदर्थं पठ्यते, न च तत्रास्य शक्तिः। यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥१४८॥

अत्र हन्तीति गमनार्थम्।

निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम्। यथा—

---

अथाप्रयुज्यमानत्वमेव[9] यस्य दुष्टतायां बीजं तल्लक्षयति अप्रयुक्तमिति। असाधुपदमप्येवं सम्भवतीति चेदत्राह तथाऽऽम्नातमपीति नामानुशासनेन साधुतया प्रतिपन्नमपीत्यर्थः। दुष्टताबीजमाह कविभिरित्यादि। यथा 'दैवत'शब्दः पुंसि समाम्नातोऽपि लिङ्गानुशासने [ देवासुरात्म...पङ्काभिधानानि पा. लि. अ. ४३सूः ] कविभिर्न प्रयुज्यते। एवं पादादौ खलि-नु-प्रभृतयोऽपि कविसमयादप्रयुज्यमानत्वेनावगन्तव्याः। अत एवंविधानि पदान्यलङ्कारकाराणां समयादवसेयानि। प्रयुज्यमानमपि सशक्तिकमेव प्रयोज्यं नाशक्तिकमित्यसमर्थं लक्षयति। सामर्थ्यं शक्तिः, तन्निषेधस्तु [10]सति सम्भवे प्रयुज्यत इत्याह तदर्थं पठ्यत इति। न च तत्रास्य शक्तिरिति बहुप्रयोगाभिप्रायेण, जङ्घा-जघन-प्रभृतिषु प्रयोगविशेषेष्वस्य गत्यर्थत्वात्। तीर्थान्तरेष्वित्यादि। सुरस्रोतस्विनी गङ्गा। अत्र हन्तीति हिंसायां शक्तं गमने प्रयुज्यमानं शक्तिविरहादसमर्थमित्युच्यते। यस्य पदस्यानेकोऽर्थः प्रसिद्धश्चाप्रसिद्धश्च तत्र अप्रसिद्धेनार्थेन निहतः प्रतीत्यविषयीकृतोऽप्रसिद्धोऽर्थो

---

9 'तद्भवं तत्समं देशीत्यनेकः प्राकृतक्रमः' इत्याचार्यदण्डिमते 'देशी'पदानां शब्दानुशासनानियन्त्रितत्वमालङ्कारिकनये स्वीकृतम्। एवं धातुपारायण-लिङ्गानुशासनाद्याम्नायानां न सर्वथा सर्वत्र साम्प्रान्यम्। शब्दविद्यामतयोगाश्रितप्रयोगेषु कविसमयपरतन्त्रताऽनपलपनीया।

10 'तन्निषेधस्त्वगति सम्भवे...प्रयुज्यत इत्यत आह तदर्थं पठ्यत' इति 'क' पुस्तके पाठः।

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥१४९॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते।

अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥१५०॥
(व्य. वि. २०३ पृ.)

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम्।

निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम्। यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन ॥१५१॥
(ना. शा. १।१२)

---

यस्य तनिहतार्थं गूढार्थमित्यर्थः। समर्थमपि विरोहितार्थं हेयमित्यस्य तदनन्तरं[11]लक्षणम्। एवमुक्तत्वोऽपि लक्षणम्(113b)प्रतिपन्नेया। यावकेत्यादि विलोक्येति वाक्यार्थस्य कर्मता। अत्र रुधिरपदस्य शोणिते भूयसी प्रसिद्धिरुज्ज्वलीकृते तु प्रयोगः।[12] अनुचितार्थमनन्वर्थं नाम। तपस्विभिरित्यादि—सत्रिभिरिति याज्ञिकैः सदाऽग्न्यादिदानरतैः। रणमेवाश्वमेधस्तत्र पशुत्वमुपागतास्तपस्विप्रभृतीनामपि दुर्लभां गतिं शूराः प्रयान्तीति शूराणां समरोत्साहोद्दीपने विवक्षिते पशुतेति पदं परोक्षीव इति कृत्वाऽनुचितार्थं, पशुसाधारणकातरत्वाभिव्यञ्जनात्। निरर्थकमिति प्रयोजनशून्यस्य प्रयोगः, कथमिति चेदत्राह पादपूरणेति। पूरणं वृत्तनिर्वाहस्तन्मात्रं प्रयोजनं यस्य, मात्रपदेन प्रयोजनान्तरनिरासः। तदुक्तं '(क)वचित्प्रबन्ध इव क्लिष्टपदप्रचारः प्रकटनुद्दिनोयोजनासङ्कीर्णं'ति।[13] उत्फुल्लेत्यादि अत्र 'हि' शब्दो न हेत्वार्थं द्योतयति। न वा वाक्या-

---

11 असमर्थादनन्तरमिति प्रकरणलभ्यम्।

12 माणिक्यचन्द्रकृतसङ्केते 'कश्मीरभाषयोज्ज्वलशब्दोऽरुणार्थ' इति दर्शनादुज्ज्वलारुणार्थपदानां पर्यायभ्रान्त्यैव प्रयोगसाहसम्।

13 वामनादर्शसरणेषे तु "शकाम्बबन्ध इवानवबद्ध हि निपात" इति लभ्यते। रत्नेश्वरस्तु सरस्वतीकण्ठाभरणटीकायां श्रीधरदर्शितमेव प्रयोगं तदुक्त्याऽनुवदति।

अत्र 'हि' शब्दः ।

अवाचकं यथा—

> अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
> अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥१५२॥
> (कि. अ. १।३३)

अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्र च नाभिधायकम् ।

यथा वा—

> हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
> तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम् ।
> किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत् कथं
> तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥१५३॥ (वि. उ. ?)

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् ।

यच्चोपसर्गसंसर्गादर्थान्तरगतम् ।[14] यथा—

---

लङ्कारार्थो यथा "स एव हि महादेव" इत्यादौ, किन्तु पादमेव पूरयतीति निरर्थकः। युष्मदिति—एकवचनेन भगवतीं सम्बोध्य प्रसादसम्बन्धितया बहुत्वनिर्देशस्तेन न वचनप्रक्रमभेदोऽप्यत्र चिन्त्यः। असमर्थं हि तत्रार्थे न निर्धारितशक्तिकम्, अवाचकन्तु न तथेति तस्माद्भेदः। अवन्ध्येत्यादि—हार्दं स्नेहः। विद्विषादर इति (१।५०) आदरो बहुमानो दरो भयञ्च। नह्युदास्तुः स्नेहो बहुमानाय प्रभवति न वा कोपशून्यस्य भयायेति। जन्तुपदं जननयोगाज्जन्मिमात्रस्य वाचकं नत्वदातुः, तावति समयाभावात्। अथ जन्तुशब्दः प्राणिपर्यायोऽपि कुत्सिते प्राणिनि प्रयुज्यत इति प्रकरणादिनाऽत्र विवक्षितार्थप्रतीतिर्भविष्यतीत्युच्यते तत्रोदाहरणान्तरमाह—यथा वेति। हा धिगिति निपातसमुदयेन निर्वेदातिशयो ध्वन्यते। विधुरो विमुखः। अत्र 'तद्विच्छेदरुजाऽन्धकारितमिदं' मित्यनेनाध्यवसायमाणस्य प्रकाशमयत्वस्यानाविरुद्धत्वेन विवक्षितम्। तत्र दिनं कल्पितमित्युक्तम्। न च 'दिन'शब्दः प्रकाशमयपर्यायः। सूर्योदयास्तमयपर्यन्तत्वाद्गत्यवच्छिन्नः कालो दिनमित्युच्यते। अतः प्रकाशमय इत्यस्मिन्नर्थे दिनशब्दस्यावाचकता।

---

[14] अवाचकमिति पूर्वेणान्वयः।

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालिकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥१५४।
(व्य. वि. ३८५ पृ:)

अत्र दधदित्यर्थे विदधदिति।

त्रिधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्। यथा—
साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥१५५॥

जङ्घेत्यादि। किसलयशब्दो यदाऽत्र पल्लववाची स्यात्तदा सस्थानस्थालक्तक-दोप्ति[15]प्रसरेण रूपणं न घटते। तस्मात् पल्लपक्ष(वत्र)-परोऽयम्। करालो दन्तुरः। मञ्जुर्मनोज्ञध्वनिः। मञ्जीरं नूपुरम्। उपसर्गेण धात्वर्थो बलादन्यत्र नोयते। प्रहाराहारसंहारप्रतिहारविहारवत्॥ इति विपूर्वो दधाति. करोत्यर्थो ननु विशिष्टधारणार्थः। यो हि यं (114b) विदधाति स तं धारयतीत्यपीति कथमत्र दुष्टतेति चेत्, तत्र—यत. कृती रूपे व्यवच्छिन्ना, धारणञ्च संयोगेऽवच्छिन्नम्। तत्र यौगपद्येनोभयप्रतिपादनमशक्यम्। धारणपर्यन्तार्थावबोधने तु कृते-रप्राधान्याद्धारणार्थतैवेति दोषस्तदवस्थ एव। असमर्थे शब्दशक्तिस्वाभाव्यम्। इह तु निमित्तवैचित्र्यमिति तस्मादिह्यते। ऊर्ध्वचरणन्यासरूपाभिनयविशेषात्मा दण्डपादः[16]। अस्य च समासोक्त्यैवाम्भोजतुल्यत्वप्रतीतेर्यत्तस्याम्भोजशोभां विदधदिति पुनर्वचनं यच्च भगवतीविषये[ण] भावेनास्योपवर्णनं तदविचाररमणीयमेव। श्रीर्यस्यास्ति तत् श्रीलम्. सिध्मादेराकृतिगणत्वाल्लच् (पा. ५।२।९७), कपिलकादिपाठाल्लत्वं (पा. ८।२।१८ वा), न श्रीलम् अश्लीलमकान्तमित्यर्थ.। तत्र विधिव्रीडाव्यञ्जकं भवति यथा साधनमिति पदं हस्त्यश्वादि-

15 प्राप्तिप्रसरेणेति 'स' पुस्तके पाठ.।

16 नाट्यशास्त्रीयाष्टोत्तरशतकरणानामन्यतमस्य दण्डपादाख्यस्य विवरणेऽभिनवभारतीमयः (१।१४२) 'पूर्वतोऽभ्यञ्चितं कृत्वे'त्यादिः 'क्षिप्रापविद्धकरणं दण्डपादा तु सा स्मृते'-(ना. शा. १०।४४) त्येतत्सहितमेव 'पादसहितदण्डत्वरितहस्तं न्यसेदिति शाठोपरिकमादिविषय'मित्यन्तस्तुलनीय.।

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथ वाऽऽनतिमृते तेनानिशं चुम्बिता ॥१५६॥
(अ. श.)

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्-
घनरुचिरकलापो निःसपत्नोऽस्य जातः।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः॥१५७॥ (वि. उ. ४।२२)

एषु साधन-वायु-विनाशशब्दा व्रीडाऽऽदिव्यञ्जकाः।

सन्दिग्धं यथा—

आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥१५८॥

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामिति सन्देहः।

अप्रतीतं यत् केवले शास्त्रे प्रसिद्धम्। यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत् कर्म बन्धनम्॥१५९॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः।

---

परतयोपात्तं पुरुषध्वजं स्मारयति। किञ्चिज्जुगुप्साव्यञ्जकं यथा लीलेत्यादौ शृङ्गारार्थिणि काव्ये वायुपदम्। किञ्चिदातङ्कव्यञ्जकं यथा मृदुपवनेत्यादि। अस्येति प्रकरणान्मयूरस्य[17]। सति विद्यमाने मत्प्रियायां विद्यमानायाम्[18]। अयम्(एष) बर्हं इति—तत्केशपाशमनुहरेत्, तदभावे तु किमनुहरेदिति। तदिदमुर्वशीविप्रलब्धस्य पुरूरवस उक्तौ विनशेपदमुभयकोटिसंश(115a)र्शि। सन्दिग्धं यथा आलिङ्गित इति। सम्परायः संग्रामः। अत्र वन्द्यामिति हठहृतस्त्रीपक्षे सप्तम्यन्तं वन्दनीयापक्षे द्वितीयाऽन्तमिति साधकबाधकप्रमाणाभावात् पदस्वरूपमेव सन्दिह्यमानम्। अप्रतीतमिति केवलग्रहणेन लोकनिरासः। यथा सम्यगित्यादि—अत्र आशयते(अस्येयेति)ति। तथाच पातञ्जलसूत्रम् (१।२४)

---

17 मयूरेति पाठान्तरम्।

18 इति यावदिति वाक्यविरतिः। 'विद्यमानाया'मिति 'क' पुस्तके पाठः।

ग्राम्यं यत् केवले लोके स्थितम्। यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम्।

तपनीयशिलाशोभा कटिश्च हरते मनः ॥१६०॥

अत्र कटिरिति।

नेयार्थं 'काश्चिन्नैव त्वशक्तित' (त. वा. ७०० पृ:) इति यन्निषिद्धं लाक्षणिकम्। यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्।

करोति ते मुखं तन्वि! चपेटापातनातिथिम् ॥१६१॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते।

अथ समासगतमेव दुष्टमिति सम्बन्ध[19]। अन्यत् तु केवलं समासगतं च।

क्लिष्टं यतोऽर्थप्रतिपत्तिर्व्यवहिता। यथा—

---

"क्लेशकर्मविपाकाशयैरपरामृष्ट पुरुषविशेष ईश्वर" इति। 'क्लेशोऽविद्या, कर्माणि सुकृत-दुष्कृतानि, तत्फलं विपाकः, तदनुगुणा वासना आशया मनसि वर्तमाना पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति। यो ह्यनेन भोगेनापरामृष्ट स पुरुषविशेष ईश्वर' (व्या. भा) इति। **शास्त्रादाविति**—आदिपदेन पुराणादि। **केवले लोके** न तु शास्त्रे, यथा पूर्वं शास्त्रानभिज्ञ-विषये प्रयुज्यमानं सदुष्टं, न तथेदमपीत्यप्रयुक्ताद्भिद्यते। यथा **राकेत्यादि**—**राका** *पूर्णिमा,* **विभावरीकान्त**-*चन्द्रः,* **तपनीयं** *सुवर्णम्।* नीयते ज्ञायते साक्षादनुक्तो न्याय-बलादस्यार्थं इति **नेयार्थम्**। तच्च द्विधा रूढमरूढञ्च। तत्राद्यमभिधेयप्रायम्, इतरद्दुष्टम्। तर्हि सर्वस्यैव लाक्षणिकस्य दुष्टता स्यादित्यत आह **यन्निषिद्धमि**ति। अत्र हेतु—**अशक्तित** इति प्रयोजनं विना लक्षणया प्रयुक्तमित्यर्थ[20] (115b)। अत त्वन्मुखेन तादृशश्चन्द्रो जित इति मुख्येन यदोच्यते तदा न किञ्चिन्न्यूनम्। लक्षणया च नाधिकं वैचित्र्यमिति। एकमेव चेदेवविधं पदं त्याज्य तर्हि बाहुल्यमेषामेकत्रेति दूरतरनिरस्तमिति। अर्थस्य प्रतिपत्ति-रर्थप्रतिपत्तिः। सा व्यवहिता यस्माद्भवति तत् **क्लिष्टं**, समासादेकपदमिति पदमेवेदं दुष्टम्।

---

19 नेयार्थमथेत्यादौ समासगतमेवेत्यन्तो प्रकृते कारिकाग्रन्थ इति यावत्।

20 अत्र 'निरूढलक्षणा काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तित.' इति समग्र' तन्त्रवार्त्तिकीयं वचनं परामृष्टम्।

अलिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल ! तव चेष्टितम् ॥१६२॥

अत्रालिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः ।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् । यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥१६३॥

अत्र मिथ्यामहिमत्वं नानुवाद्यम्, अपि तु विधेयम् । यथा च—

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केशरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥१६४॥

( कु. स. ३।५५ )

अत्र 'मौर्वीं द्वितीया'मिति द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । यथा च—

---

**अलिलोचने**त्यादि—अलिर्मुनिः । व्यवहितार्थप्रत्ययत्वञ्च ग्रन्थकृतैव दर्शितम् । विशेषण-विशेष्याभिधायिपदरचनाविशेषः समासः । तत्र विशेषणस्यावच्छेदकत्वादप्राधान्यं विशेष्यस्य तु विधेयत्वात् प्राधान्यमिति तथात्वेन कविना विवक्षितस्यार्थस्य यत्र समासेनाप्राधान्यं वितन्यते तद्विधेयाङ्गस्याविमर्शनादविमृष्टविधेयांशं नाम । यथा **मूर्ध्नामि**त्यादि । **उद्वृत्त-कृत्तम्** उन्मर्यादया हठात् कर्तनम् ।···**महिम्नामिति दोष्णां** विशेषणम् । अत्र मिथ्या-महिमत्वं बहुव्रीहावन्यपदार्थप्रधाने न्यग्भावितमित्यनुवाद्यकोटौ प्रविष्टं, तथा च न विवक्षित-मिति दुष्टत्वम् । एवं समासान्तरेऽपि यथा **स्रस्ता**मित्यादि । **केशरो** बकुलः । **द्वितीय-मौर्वी**मिवेत्युत्प्रेक्षायां कर्मधारयसमासे उत्तरपदार्थप्राधान्यात् पूर्वपदार्थस्याप्राधान्यमित्यनु-चितम् । एतदेव द्रढयितुं पाठान्तरमाह (११6१) **मौर्वी**मित्यादि । "न चात्र पाठे वृत्तभङ्गः शङ्कनीयः, तस्य ध्वन्यतामात्रलक्षणत्वात्, 'पादान्तेषु बहुलं गुरु'रिति ( छः सू ) बहुल-ग्रहणेनात्रापि वसन्ततिलकादाविव गुर्वन्ततानियमस्यान्यैरनादृतत्वात् ।" (व्य. वि. २य वि)[21]

---

21. 'गुर्वन्ततानियमस्य सकर्णकैरत्राप्यनादृतत्वा'दिति मुद्रितव्यक्तिविवेकेऽशुद्धप्रायः पाठः । सकर्णकैरपि वृत्तविशेषज्ञानयुक्तैरपीति च व्याख्यानम् । यत् पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्वत्र द्वितीयचतुर्थपादविषयं, प्रथमतृतीयपाद-

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि ! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥१६५॥
(कु. स. ५।७२)

अत्र 'अलक्षिता जनि'रिति वाच्यम् । यथा च—

आनन्दसिन्धुरतिचापलशालिचित्तसन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता तान्तिं तनोति तव सम्प्रति
धिग् धिगस्मान् ॥१६६॥

अत्र 'न मुक्ते'ति निषेधो विधेयः । यथा—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥१६७॥ (वि. उ. ४।७)

---

वपुरित्यादि—अत्रापि जन्मनोऽलक्ष्यत्वं विधेयं, बहुव्रीहौ तु न्यग्भावितम्, अतएव पाठान्तरमाह अलक्षिता जनिरिति । एवञ्च क्रमभङ्गोऽपि न भवतीति भावः । नञ्-समासे यथा आनन्देत्यादि—संदाननैकसदनं बन्धनैकनिवासः । उदन्तो वार्ता । तान्तिः ग्लानिः । अमुक्तेति त्यागनिषेधः प्राधान्येन विवक्षितः, स च समासे न्यग्भावितः । यत्र निषेधस्य प्राधान्यं विवक्षितं न तत्र समासो तथा नवेत्यादि । यथा दृप्तनिशाचर इत्यादि

---

विषयन्तु वसन्ततिलकादावेवेति साहित्यदर्पणकृता ममोद्घोषणं 'न पादान्त-लघोर्गुरुत्वं च सर्वत्रे'ति वामनमतमनुसृत्य । आचार्यहेमचन्द्रोऽपि छन्दोऽनु-शासनवृत्तावाह (१।५) :—'वंशस्थकादिचरणान्तनिवेशितस्य गत्वं लघोर्न हि तथा धृतिशर्मदायि । प्रोक्तं वसन्ततिलकादिपदान्तवर्ति गत्वं यदत्र विहितं विबुधैर्यथा ल' इति । गत्वं गुरुत्वं, लो लघोः । क्षेमेन्द्रेण सुवृत्ततिलक उपजातिवंशस्थप्रभृतीनां लक्षणेषु (१।१८) च्छन्दःशास्त्रानुसारेण कृतेष्वपि स्वकृत इन्द्रवज्रोदाहरणे 'तौ जन्मे'ति श्लोके 'ज्वलदिन्द्रवज्र[पातेति'] तृतीयचरणेऽप्राप्त-गुरुभावान्तलघोः प्रदर्शनं कविकुलशिरोमणेः कालिदासस्य कृतौ 'भास्वन्ति रत्नानि महौषधीश्च पृथूपे'त्यादेर्बहुश उपलम्भश्च तत्प्रतिषेधस्य न तथा सविजना-दृतत्वमिति सूचयति । अत्राधुनिकपाश्चात्यविमर्शकाणां मतम् E. A. Sonneschien's What is Rhythm प्रभृतिनिबन्धेष्ववलोकनीयम् ।

इत्यत्र । न त्वमुक्तताऽनुवादेनान्यदत्र किञ्चिद् विहितम् । यथा—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥१६८॥ (र. वं. १।२१)

इत्यत्रात्रस्तताऽनुवादेनात्मनो गोपनादि ।

विरुद्धमतिकृद् यथा—

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥१६९॥

अत्र कार्यं विना मित्रमिति विवक्षितम्, अकार्येषु मित्रमिति तु प्रतीतिः । यथा वा—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥१७०॥

अत्र कण्ठग्रहमिति वाच्यम् । तथा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥१७१॥
(म. वी. च. २।२८)

अत्र 'भवानीपति' शब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति । तथा—

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥१७२॥

---

समासः क्रियते न तर्हि विवक्षितार्थस्य प्रतिपत्तिः[22] स्यात् । न चात्रात्रस्ततामुपेत्यान्यत् किञ्चिद्विधेयं यथा जुगोपेत्यादौ । अत्र नीतिशास्त्रबोधितकर्तव्यभावमात्मगोपनादिकं राज्ञा विधेयमिति तत् कृतं न तु त्रासादित इत्यत्रस्त इत्यादेर्विधेये गोपनादौ न्यग्भावो युक्त एव । सुधाकरेत्यादि—विशारदो धृष्टः । अकार्यमित्रमित्येतत् पदं निरुपधि-मित्रपरतया प्रयुक्तम्, अकार्यं यन्मित्रम् अकार्येषु वा (166b) यन्मित्रमिति समासान्तरेण प्रकृतोपमर्दिनीं धियमुत्पादयति । चिरेत्यादि । गलग्रहपदमालिङ्गने प्रयुक्तं पूर्वप्रकान्तानन्ददायिताविरुद्धस्वनिःसारणमतिकृत् । न त्रस्तमित्यादि—तेनेति

22 प्रतीतिरिति 'ख' पुस्तके पाठः ।

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना।
बर्हिनिर्ह्लादनार्होऽयं कालश्च समुपागतः॥१७३॥ ( रा॰ ? )

एवमन्यदपि ज्ञेयम्।

अपास्य च्युतसंस्कारमसमर्थं निरर्थकम्।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन॥१२॥

केचन न पुनः सर्वे। क्रमेणोदाहरणानि—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनपारीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च॥१७४॥

( भ॰ का॰ १।२ )

---

दाशरथिना। तारकादयो दैत्याः, भवस्य पत्नी भवानी, इन्द्रवरुणभवशर्वरुद्रेत्यादिना ङीप् (पा॰ ४।१।४९) आनुगागमश्च। तस्याः पतिरिति। अम्बिका माता तस्याः रमणः कामुक इति—एवंविधानि पदानि विरुद्धां धियमुत्पादयन्ति। श्रुतिकटु समासगतं यथा सेत्यादि। बर्ही मयूरस्तस्य [ निर्ह्लादनं ] निर्ह्लादः केकारवः। तदर्हः कालः समय इति समस्तं श्रुतिकटुपदम्। एवमन्यदिति यथाऽऽक्रोशे दासीकामुक इति च्युतसंस्कृति।

इत्थं पददोषान्विविच्य वाक्यदोषान् कथयति वाक्येऽपीति। एते पूर्वोक्ता दोषाः। तत् किं सर्वेऽप्येते अत आह—अपास्येति निःसंस्कारादि दोषत्रयं हित्वेति। पदसंस्कारवादिनो हि पदान्येव संस्क्रियन्ते न वाक्यानीत्याहुः।[23] सोऽध्यैष्टेत्यादि—अपारीत् तर्पितवान्। षड्वर्गः कामक्रोधलोभहर्षमानमदाः। समूलघातं 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' (पा॰ ३।४।३६) इति णमुल्। समूलं हतवानित्यर्थः। अत्र स इति, अध्यैष्टेति, वेदानिति, त्रिदशानित्या(१।७३)दि पदं संहत्य श्रुतिकटुपदम्। अप्रयुक्तं

---

23 पदसंस्कारं शास्त्रमिति केषाञ्चिद्वैयाकरणानां दर्शनं, वाक्यसंस्कारं शास्त्रमित्यन्येषाम्। पूर्वस्मिन् दर्शने पदान्येव पृथक् क्रियन्ते पश्चाद्वाक्यघटनेति निष्पन्नपदं पश्चाद् वाक्यघटनायामपि न निवर्तते, निष्पन्नत्वात्। एतस्यैव परामर्श उपरत टीकाकृत्कृतमन्तव्ये।

स यातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताऽऽद्यैश्च द्यतु दोषैरसम्मतान् ॥१७५॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः ।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाऽधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः ॥१७६॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो !
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथाऽपि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ॥१७७॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोकयमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थम् ।

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥१७८॥

अत्र प्राभ्रभ्राड्-विष्णुधाम-विषमाश्व-निद्रा पर्णशब्दाः प्रकृष्टजलद-गगन-सप्ताश्व-सङ्कोच दलानामवाचकाः ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥१७९॥

---

यथा स इत्यादि । यातु ददातु । भावुकानां कुशलानाम् । द्यतु खण्डयतु । अत्र दुश्च्यवन इन्द्रपर्यायतया ख्यात् । 'अनेडमूकस्तु वक्तुं श्रोतुमशिक्षित' ( अ. को. ३।१।३९ ) इति नामानुशासनसिद्धान्यपि कविभिर्न प्रयुज्यन्त इति दुष्टानि ।

सायकेत्यादि—श्लोको यशः । अत्र सायकादिशब्दे खड्गादयोऽर्था उक्ताः, न च तेष्वेषां भूयसी प्रसिद्धिः किन्तु शरादिषु । कुविन्दः कुम्भोपभुक्, तन्तुवायश्च । पटयसि पटुं करोषि पटं करोषीति च । गुणाः सौन्दर्यादयस्तन्तवश्च । अभितः सर्वत आरोह-परिणाहाभ्यां च । यशः इत्यत्र प्रश्लेषेणायशश्च । नग्ना वन्दिनो दिगम्बराश्च । आच्छादनमावरणं यत्नश्च । प्राभ्रेत्यादि—आप्य प्राप्य । प्राभ्रादिशब्दा न मेघादौ सङ्केतिता इत्यवाचकाः । भूपतेरित्यादि—कम्पना सेना कम्पनसहिता च । "वामं

अत्रोपसर्पण प्रहणन मोहन-शब्दा व्रीडाव्यञ्जकत्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम् ॥१८०॥

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥१८१॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्याप्तिकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विराजते ॥१८२॥

अत्र सुरादिशब्दाः किं देव-सेना शर-विभूत्यर्थाः, किं मदिराऽऽद्यर्था इति सन्देहः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥१८३॥

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

---

शत्रून् प्रति विरुद्धं कान्तश्च । उपसर्पणं सेवा रतारम्भश्च । मोहनमनुरञ्जनं धातुसंक्रमणञ्च । प्रहणनं शस्त्रादिना प्रहारो नाभ्यादौ चपेटाऽऽदिदानञ्च ।

तेऽन्यैरित्यादि—वान्तमुद्गीर्णम्. 'उत्सर्जनं बहिः कुर्या'दित्यादाविवोत्सर्गशब्दो मूत्रपुरीषोत्सर्गं स्मारयति । प्रवर्तनं मूत्रपुरीषत्यागो वमनञ्च । पितृवसतिः पितुर्गृहं श्मशानञ्च । पावकः पवित्रोऽग्निश्च । अन्वयः कुलं सम्बन्धश्च । अ 1.7b)-शेषितं निःशेषितम् । शोकशल्यकमिति 'क' प्रत्ययोऽपि चिन्त्यः । सुरालयेत्यादि—प्राप्ता पर्याप्ता सम्पूर्णा कम्पना सेना येन पर्याप्तकम्पश्च । मार्गणं याच्ञा शरश्च । भूतिर्भस्मेति द्वितीयोऽर्थः । तस्येत्यादि—"योगिनो नवधा भवन्ति मृदूपायो मध्योपायोऽधिमात्रोपायश्चेति । त्रयमपि चोत्तममध्यतीव्रसंवेगात् प्रत्येकं त्रिधेति । ध्यानादीनामाधिक्यं संवेगः । तत्र मृदूपायतीव्रसंवेगाभ्यामधिमात्रोपायतीव्रसंवेगस्यासन्नतरः समाधिलाभः समाधिफलञ्च भवति" ( यो. सू. १।२०-२२, व्या. भा. द्र: ) चित्तवृत्तयस्तु सर्वाः सुखदुःखमोहात्मिकाः । 'अभ्यासवैराग्याभ्यां तन्निरोधः' (यो. सू. १।१२)। 'तत्र स्थितौ यत्नोऽभ्यास' (यो. सू. १।१३) इति 'चित्तस्य वृत्तिशून्यस्य प्रशान्तवाहिता स्थितिः, तदर्थः प्रयत्नो-

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥१८४॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रद्वन्द्वं बोधय[24] साम्प्रतम् ॥१८५॥

अत्राम्बररत्नपादैः क्षततमा अचला भूः कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्यः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥१८६॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटाञ्जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥१८७॥

(ध्व. आ. १४३ पृ.)

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यं, न वृथात्वविशेषितम् । अत्र तु शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो, न वाक्यार्थस्य ।

---

ऽभ्यासः । स तु दीर्घकालनैरन्तर्यात् सेवितस्तपसा ब्रह्मचर्येण विद्यया श्रद्धया च सम्पादितः संस्कारवान् व्युत्थानसंस्कारेण झगित्येवानभिभूतविषयो दृढभूमिरित्युच्यते (यो. सू. व्या. भा. १।१३, १४)। ताम्बूलेत्यादि स्फुटमेव। वस्त्रेत्यादि—सत्त्वरजोभ्यां परं तमः। नेत्रद्वन्द्वं बोधय साम्प्रतमिति प्रभातं जातम् उत्तिष्ठेत्यर्थः। तदिह व्यवहितार्थपरामर्शाद्वस्त्रवैदूर्यादयः 'कश्चिन्नैव स्वशक्तित' इति लक्षणया प्रयुक्ता इति नेयार्थता। धम्मिल्लस्येत्यादि—धम्मिल्लः संगतः केशपाशः। अत्रासत्त्यायोग्यताभ्यां (१३४०) व्यवहितार्थपरामर्शने क्लिष्टत्वम्। न्यक्कार इति—'यद्वृत्तयोगः प्राथम्यम्' इत्यादिकस्य लक्षणस्य (व्य. वि. २) 'तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयते' इत्यस्य शक्तितः सिद्धस्योद्देश्यत्वं साध्यस्य च विधेयत्वम्, अतो यच्छब्दसमानविषयेणेदमा निर्दिष्टस्योद्देश्यत्वं, न्यक्कारस्य तु प्राथमिकस्यापि सिद्धत्वात् विधेयत्वमिति वस्तुगतिर्विवक्षिता च। तच्चेह विपर्ययेणोक्तम्,

24 'वेदय' इति क्वचित् पाठः।

यथा वा—

अपाङ्गसंसङ्गि तरङ्गितं दृशोर्भ्रुवोररालान्तविलासि वेल्लनम्।
विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे ! समागतः ॥१८८॥
(व्य. वि ?)

अत्र 'योऽसा'विति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्र-प्रतीतिकृत्। तथाहि—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दो-पादानं नापेक्षते। क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥१८९॥
(र. वं. १७।४७)

---

अतएव हि तार्किकाणाम् 'अनित्यः शब्द' (न्या. सू. भा. २।१४) इतिवदप्राप्तकालं निग्रहस्थानमिति गीयते[25]। एवं भुजानां त्रैलोक्यविजयोपजातशौर्याभिमानमयत्व-लक्षणमुच्छूनत्वमनूद्य साम्प्रतिकमकिञ्चित्करत्वं विधेयम्। न तु प्राक्तनमेव तत्[26]। उक्त-वैपरीत्येनायं दोषः समाधीयते। अर्थस्य निरपवादत्वादित्याह शब्दरचनेति।

अपाङ्गं नेत्रान्तः, अरालं वक्रं, वेल्लनमितस्ततो वलनम्। अत्र योऽसाविति—यच्छब्दोऽनुवाद्यार्थवत्यदःशब्दस्तु विधेयार्थतया विवक्षितः। एतच्चानुपपन्नं, यच्छब्दस्यानूद्यत्वे तच्छब्देनैव विधेयार्थेनोपसंहारस्य च न्याय्यत्वात्। 'तथाहि अदःप्रभृतिशब्दैरज्ञायमानोऽर्थः प्रतीयते, ततो यथा 'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इती'त्यादौ (स. क. अ. ४०१ पृ:) तच्छब्दव्य-(118b) पेक्षा, तदुपादानमन्तरेण वाक्यार्थस्याविश्रान्ते-स्तथाऽत्रापि साकाङ्क्षत्वमिति वक्ष्यमाणेन सम्बन्धः। यच्च केवलयोर्यत्तदोर्निराकाङ्क्षत्वं दृश्यते तदपि प्रकृते न सम्भवतीत्याह (व्य. वि. १७३-७४पृ:) तथाहीति। वक्ष्यमाणेन क्रमेणोपपद्यते ह्येतदित्यर्थः। तत्र तच्छब्दस्य केवलस्य निराकाङ्क्षत्वं प्रकरणादिविषयनिष्ठं विधेयाह—प्रक्रान्तेति। एतदेव लक्ष्यसन्दर्शनेन द्रढयति कातर्यमित्यादि। अत्र वर्णनीयोऽतिथिर्नाम

25 'शब्द इत्येव प्राप्तकालं निग्रहे'त्यादि 'क' पुस्तकेऽसङ्गतः पाठः। 'अवयवविपर्यास-वचनमप्राप्तकाल'मिति न्यायसूत्रमत्र परामृष्टम्। अतएवोद्देश्यविधेययोः क्रमव्यत्यासो दोषस्य बीजम्।

26 'न तु प्राक्तनमेत'दिति 'ख' पुस्तके पाठः।

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

(=१३०श्लोः)

उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षिताऽसि ॥१९०॥

( ता. वत्. २.१६ )

यच्छब्दस्तूत्तरवाक्यगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥१९१॥

( रा. च. २।६५ )

---

राजा प्रकान्तस्तच्छब्दविषय इति यच्छब्दोपादानमन्तरेणापि निराकाङ्क्षत्वं, केवलेनैव तच्छब्देन वाक्यार्थप्रतीतिविश्रान्तेः ।

प्रसिद्धार्थविषयो यथा **द्वय**मित्यादि—अत्र **सेति** निराकाङ्क्षं त्रैलोक्यालङ्कारभूता सुधारसनिस्यन्दिनी चराचरस्य जगतो जीवितायमानेत्येवमादिरूपतया प्रसिद्धा । अनुभूतार्थविषया यथा **उत्कम्पिनी**त्यादि—भयेन परिस्खलितमशुकान्तं यस्याः । "इयं हि वासवदत्तादाहाकर्णनप्रथुशोकनिर्भरस्य वत्सराजस्योक्तिः । तदिह सुमेयान्यपदेश्यलोकोत्तरविलासपरिस्पन्ददीर्घत्वायनन्तधर्मान्तराक्रान्तानुभूतलोचनविषयस्तच्छब्दः । न चात्र तच्छब्दस्य प्रकान्तपरामर्शिता सदृशज्ञानचिन्ताऽदिप्रभवसंस्कारोपनतस्मरणविशेषाकारसूचकत्वात्तस्य" ( ध्व. आ. लो ३।४ )। एवं तच्छब्दस्य निराकाङ्क्षत्व-( 1192 )मुदाहृत्य यच्छब्दस्यापि कथयति **यच्छब्दस्त्वि**ति । **पुष्कराणि** पद्मानि । यथाऽत्रैव **साधु चन्द्रमसी**त्यत्र 'मीलितं यदभिरामताऽधिके साधु चन्द्रमसि पुष्करैः कृत'मिति पाठे द्वयोरनुपादानेऽनुवाद्यविधेयार्थतया प्रतीतौ स्फुटमेव निराकाङ्क्षत्वम्[27] यथा

---

27 एवं व्यक्तिविवेककारमनुसृत्याचार्यमम्मटस्य मन्तव्यं सुस्थितम् । अभिनन्दकृते रामचरिते श्लोकोऽयमेव सन्निविष्ट आसीत् प्राक् । पश्चात् काव्यविमर्शकाणां विप्रतिपत्तिमालोक्य 'मङ्क्षु चन्द्रिरभिरामताऽधिके साधु चन्द्रमसी'त्यादि संशोधितं ग्रन्थकृतेत्यधुनोपलभ्यमानग्रन्थमातृकाभ्यो ज्ञायते । तेनात्रोचितदोषस्य समाधानं सुष्ठु साधितम् ।

प्रागुपात्तस्तु यच्छन्दस्तच्छन्दोपादानं विना साकाङ्क्षः। यथा ह्यत्रैव श्लोके आद्यद्वितीयपादयोर्व्यत्यासे। द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम्। अनुपादानेऽपि सामर्थ्याद् क्वचिद्द्वयमपि गम्यते। यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते मम तु[28]कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला
च पृथ्वी ॥१९२॥ (मा. मा १।७)

अत्र च उत्पत्स्यते तं प्रतीति (व्य वि. १६६ पृ)।' एवञ्च तच्छन्दानुपादानेऽत्र साकाङ्क्षत्वं प्रसिद्धम्। न चासाविति तच्छन्दार्थमाह—

---

"यदुवाच न तन्मिथ्या यद्ददौ न जहार तत्" (र व. १७।४२) यथा च "स दुर्मति श्रेयसि यस्य नादर' "स पूज्यकर्मा सुहृदां शृणोति य' इत्यादौ' (व्य वि १६३-६४ पृ:)।

क्वचित् पुनरुपात्तविषयोपकल्पितयोरप्यर्थसामर्थ्यादाक्षेप ये नाम केचिदिति सर्वे। अत्रावधीरणाकारणमनादरातिशयाभिप्रायेण रूढाहङ्कारतया प्रथनम्। न इत्यात्मनो बहुत्वेन निर्देश। अतएवाह—जानन्ति ते किमपीति काक्वा न किमपि जानन्तीत्यर्थ। पश्चात्तु विदग्धचक्रवर्तिन समानधर्माण बुद्धिस्वीकृत्य ममेत्येकवचनेन निर्देशो न विरुध्यते।" यदि वा 'अस्मदो द्वयोश्चे ति (पा २।२।५६) चकारेण 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या'-(१।२।१८) मित्येकस्मिन्निति पदानुकर्षणाद्बहुवचनस्याप्येकवचनार्थतैव। तु शब्दोऽस्य(त्य)र्थे, अव्ययानामनेकार्थत्वात्, इतरथा 'विपुला च पृथ्वी' ति चिन्त्य स्यात्। अत्र साकाङ्क्षत्वमिति (२१९b) योऽसौ सुभग (११८ श्लो) इत्यत्र। "न च प्रकस्यमानानामागतविषयतयोपकल्पितेन तदा यस्मादुद्बोध [29]सम्भवति तदुपादान एव तत्सम्बन्धप्रतीतिदर्शनात। अन्यथा 'यत्कोपाग्नौ शलभता लेभे काम शिवोऽव ता'दित्यत्रापि शिवविषयतयोपकल्पितेन तदा तत्सम्बन्धप्रतीतौ सङ्गतार्थतैव स्यात्। (व्य. वि १६६ पृ) 'ननु नात्र यद केवलस्यैव प्रयोग किन्तु तच्छब्दाभिप्रायोऽद शब्द प्रयुक्त एव—असाविति। ततश्च तदपेक्षया वाक्यार्थविश्रान्तेर्न कश्चिदुक्तदोषावकाश इत्यत

---

28 'उत्पत्स्यतेऽस्ति ममे'ति क्वाचित्क पाठ। अस्ति चेति वाक्यार्थोऽध्याहार्य।

29 'य सम्बुद्धो भवतो'ति 'ख' पुस्तके पाठ। न चाम्बिकाकेसरिविषयतयोप कल्पितेन तदाऽस्येति मुद्रितपुस्तके पाठ। एतच्च 'संरम्भ करिकीटमेघे'त्यादि वक्रोक्तिजीवितपद्यमुपन्यस्य महिमभट्टस्य मन्तव्यम्। मुद्रितपुस्तकपाठस्त्वत्र किञ्चिद्भिन्न।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥१९६॥ (वे. सं १।१२)

इत्यत्र तच्छब्दः।

ननु कथं

कल्याणानां त्वमिह महसामीशिषे त्वं विधत्से[31]
पुण्यां लक्ष्मीमथ मयि दृशं धेहि देव ! प्रसीद।
यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥१९७॥ (मा. मा. १।४)

अत्र हि यद् यदित्युक्ता तन्न इत्युक्तम्। उच्यते। यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं तथाभूतमेव तच्छब्देन परामृश्यते।

---

ऽपि प्रसिद्धार्थपरामर्शक एव यथा यत्तदित्यादि—अत्र यच्छब्दसन्निहितस्तच्छब्दः प्रसिद्धिं परामृशति। तदपीति वाक्यान्तरे प्रयुज्यमानस्तच्छब्दो विधेयः, अतएव तदोर्द्विरुपादानं यदस्तु सकृदिति न सम्बन्धद्वैविध्यानुपपत्तिः। 'एकश्च योऽसा'वित्यत्र (१८८श्लो) तच्छब्दपरामर्शापेक्षा नियतमुज्जृम्भत एवेति स्थितम्। 'यत्तु पदैक्यवाक्यतायामपि[32] तच्छब्दभिन्नार्थत्वगदःप्रभृतीनां तद्भिन्नविभक्तिकानामेव न समानविभक्तिकानाम्[33]। यथा 'स्मृतिभूः स्मृतिभूर्विहितो येनासौ रक्षतात् क्षतायुष्मानि'त्यादौ (व्य. वि. १६८-१७३ द्र:)।

नन्वेवं यत्र तदोर्द्विरुपादानं यदस्तु सकृत्तत्र कथं निराकाङ्क्षत्वमाशङ्क्यते—यथा कल्याणानामित्यादि। कल्याणान्यभिमतानि श्रेयांसि। तेषां महसां मनोगतीनामप्यगम्यानां जगति त्वमेव परमीशिषे प्रभवसि भक्तेभ्यो दातुमित्यर्थत्वात्, सूर्यस्यैव भगवतः सकलजनाभीष्टफलकल्पद्रुमत्वेन प्रसिद्धत्वात्। त्वं सूर्यः पुण्यां मनोज्ञां लक्ष्मीं शोभां

---

31 'त्वमसि महसां भाजनं विश्वमूर्ते' इति प्रायिकः पाठः। एवं द्वितीयचरणे 'धुर्यां लक्ष्मी'मिति पाठः।

32 पदैकदेशवाक्यतायामपीति 'क' पुस्तके पाठः।

33 "अनुक्तत्वेन परामृश्यं प्रयोगो यत्र यत्तदोः। निरन्तरः पुनस्तत्र तयोरुक्तिर्न दुष्यति॥ तयोर्निरन्तरोपात्तेदमेतदद-सु च। तदोस्तेषां च नापेक्षा तेष्वसत्स्विव शाम्यतीति व्यक्तिविवेके संग्रहः। न चेदमादीनां दुष्टतैव तेषामतदर्थत्वात्, तन्निकटे च प्रयुज्यमानानां प्रसिद्धिमात्रपरामर्शकत्वात्। एवं तच्छब्दमाचिन्वेनेदमादीनामिति रुचककृते तद्व्याख्याने निष्कर्षः।

तथा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
माता स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥१९८॥

(उ. रा., ना. द. ६६ पृ. ; द. रू. अ. ३।२९. व्य. वि. २०५-०६ पृ.)

---

विशेषेण धत्से धारयसि मनोज्ञां वा समृद्धिं कुरुषे । अथेति समुच्चये । मयि दृशं धेहि मामवलोकयेत्यर्थः । यद्यत् पापं तत् प्रतिजहि बाधस्व । भद्रं भद्रमित्यपदोपमभीष्टमर्थं वितर देहि । [मङ्गलाय] मङ्गलमाशंसनीयरूपं तस्मै [भूयसे] बहुतराय । अत्र यदादित्वनेन वाङ्मनःकायजं त्रिविधमप्यनेकात्मतामापन्नं सर्वान्तस्वात्मकमनूद्यते, तथाभूतमेव तच्छब्देन परामृश्यत इति निराकाङ्क्षत्वमेव । किमित्यादि—मध्यमा कैकेयी । इयं हि रामभद्र-वनवासप्रस्थापने लक्ष्मणस्य वितर्कोक्तिः । विभक्त्यन्वयविधायिनी विशेषणानां विधेयावगतिः । अतएव चैषां विशेष्ये प्रमाणान्तरसिद्धत्वेनोत्कर्षापकर्षाभिधायिनो शाब्दे गुणभावेऽप्यर्थे प्राधान्यं, विशेष्य(१२।२)णाञ्च शाब्दे प्राधान्येऽप्यार्थे गुणभावोऽनूद्यमानत्वात् । अतो-ऽत्र 'आर्यस्यानुज'-'तातस्य कलत्र'मिति वक्तुं युक्तं यथा 'रामस्य पाणिरसि' (उ. रा. च. २।१०) 'स्कन्दस्य मातुः पयसां रसज्ञः' (र. व. १।३६) इति । 'द्व्यं गत'मित्यादौ 'कपालिन' इत्यत्र सम्बन्धस्य प्राधान्यमिति विधेयार्थतया प्राधान्येन विवक्षितमिति न समासे न्यग्भूतम् । एतच्च पाणिनेराचार्यस्याप्यनुमतं यदयं शूपल्याः कामुक इति कामुकादेराक्रोशादि-प्रतिपत्तये समासे विभक्तेरलुकं शास्ति (पा. ६।३।२१ ; व्य. वि. २०४-०६ पृ.) । एवमिति[34] यथा 'तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि । स्वं च संहितममोघमाशुगं व्याजहार हरसूनुसन्निभ' (र. वं. ११।८३) इति । अत्र 'मोघमाशुग'मिति युक्तः पाठो, न तु कर्मधारये-ऽमोघस्य प्राधान्येन विवक्षितस्य गुणीभावो न्याय्यः (व्य.वि. १६०-६१पृ.) । ननु विशेषणत्व-मवच्छेदकत्वात् गुणभावः, विवक्षितश्च विधेयत्वात्प्राधान्यम् । तत् कथमनयोर्भावाभावयोरिव विरोधादेकत्र समावेश इति, उच्यते । विरोधो हि वस्तुद्वयनिष्ठः शीतोष्णादिवत् । न चेह वस्तुत्वमुभयोः सम्भवति, एकस्यैव वास्तवत्वादपरस्य च वैवक्षिकत्वेन विपर्ययात् । न च

---

34 एवमिति विशेषणविशेष्यताराधितशरीरत्वं समासानां सामान्यलक्षणम्, अन्यथा सामर्थ्यानुपपत्तेरिति व्याचक्षाणः सरस्वतीतीर्थोऽप्यत्र तत्पुरुषाव्ययी-भावादिषु समासान्तरेषूदाहरणानि सङ्कलयति महिमभट्टमनुसृत्य यथाऽत्र श्रीधरः ।

अत्रार्यस्येति तातस्येति च वाच्यं, नत्वनयोः समासे गुणीभावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम्।

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः।
विग्रहक्षपणेनाद्य शेरते ते गतासुराः॥१९९॥

अत्र क्षमाऽऽदिगुणयुक्ताः सुरसमासत इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः।

पदैकदेशे यथासम्भवम्—

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः।
इति यदि शतकृत्वस्तत्त्वमालोचयाम
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा॥२००॥ ( वि च ५८)

अत्र त्वा'दिति। यथा वा—

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः॥२०१॥
( कु स ३।१८)

---

वस्तुवस्तुनोर्विरोध, न च सत्यहस्तिन कल्पनाकेशरिणश्च कश्चिदन्योऽन्यविरोधबोधमनुमन्यते। फ( 121b )लभेदस्तुनयोर्निर्विवाद। एकस्य हि शाब्दिकमात्रविषय पदार्थसम्बन्धमात्रम्, अपरस्य पुन सहृदयैकगोचर सत्कवीनामेव वाक्यार्थातिशय इति—तदेवंविधे विषये समासस्तावदय हेय एव। यत्रापि च कर्तव्यस्तत्रापि यत्र बहुव्रीहे प्रतिपत्ति करोति तत्रैवेति काव्यविदामाम्नायो यथाऽध्यासितश्चासौ तरुश्चेत्यध्यासिततरुरिति। एवं बहुव्रीहिरपि कर्मधारयप्रतीतिकृच्च करणीयो यथा वीरा पुरुषा यस्य स वीरपुरुषः, कलो रवो यस्य स कलरव इत्यादि (का. अ सू वृ ५।१।७)। श्रितेत्यादि—क्षमा क्षान्तिर्भूमिश्च। रक्ताऽनुरक्ता भूर्येषा रक्तस्य शोणितस्य भुव स्थानानीत्यपि रक्तभुव। शिवं कल्याणं शिवा शृगाली च। विग्रहो युद्ध शरीरञ्च। गतमसुखं दु ख येषां, गता असव प्राणा खानीन्द्रियाणि च येषां तेऽपि गतासुखाः। शयन महानिद्राऽपि—इति वाक्यमेतद्विरुद्धमतिकृत्।

अथ पदैकदेशस्य दुष्टत्वं दर्शयति। तत्र श्रुतिकटु यथा अलमित्यादि प्रियायाः सङ्गमेनालमिति सम्बन्ध। अत्र हेतवोऽतिचपलत्वादयः। तद्गच्छेत्यादि। [ अङ्गलब्ध्यै ] अङ्गलाभाय अङ्गस्यासन्नाणे वा। "अपेक्षते प्रत्ययमुत्तमं त्वा"मिति च

अत्र द्वैध इति च श्रुतिकटु ।

यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।

बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥२०२॥

( कु सं १।४ )

अत्र 'मत्ता' शब्दः क्षीवार्थे निहतार्थः । ,

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-

प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।

सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो

भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥२०३॥

अत्र 'दृशा मिति बहुवचनं निरर्थकं, कुरङ्गेक्षणाया एकस्या एवोपादानात् । न च "अलसवलितैः प्रेमार्द्रार्द्रैः —(श्र श ) रित्यादिव्यापारभेदाद्द्वाभ्यं बहुत्वं', व्यापाराणामनुपादानात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते । 'कुरुते' इत्यात्मनेपदमप्यनर्थकं प्रधानक्रियाफलस्य कर्तृसम्बन्धे कर्त्रभिप्रायक्रिया फलस्याभावात् ।

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः

शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।

---

पाठान्तरम् । यश्चेत्यादि—मण्डनानामिति कर्मणि षष्ठी । (1228) अकाल सन्ध्यामिवेति कल्पितोपमा । अत्र मत्तेत्येकदेशस्य मद्योपयोग क्षीबात्मक प्रसिद्धोऽर्थ । आदावित्यादि—अनैकस्या नायिकाया दृशोर्द्वित्वमुपपन्नं न तु बहुत्वम् । न चात्र भावक्रिबन्तो दृक्शब्दो येन व्यापारे वर्तते, व्यापाराणाच बहुत्वाद्बहुवचनमिति शक्यते वक्तु, तत्राञ्जनपुञ्जलेपादीनामसम्भवात् । कुरुते इति यत्र च प्रधानक्रियाफलभाग् कर्ता भवति तत्र स्वरितादिसूत्रेणात्मनेपदम् (पा ३।७ ) । न चात्र तथा—अतो वृत्तमात्रपूरणार्थ-त्वादिदमनर्थकम् । न चैव ( एव ) व्याकरणलक्षणहीनत्वात पददोषोऽयं न पुन पदैकदेशदोष इति केचित् । तत्तु न सम्यक् [ दृशा ] दृक्सम्बन्ध—(सम्बन्धि ) पानकर्म कृतिफलेन विजयेन कर्तुरभिसम्बन्धे 'कुरुत' इति प्रयोगस्य साधुत्वात्, किन्त्वस्या दशायां तन विवक्षितमित्याह क्रियाफलस्याभावादविवक्षणादित्यर्थ । 'एवमाचार्यपादा'इत्यादि-न्यायेन दृशामिति बहुवचनमपि साधु सम्भवति । तथाच 'स्तनादीनां द्वित्वविशिष्टा जाति प्रायेणे'ति (का. अ सू वृ ५।१।१७) प्रयोगदृष्ट वामनः कृतवान् । चापेत्यादि—

अस्यैवैतत् किमु कृतवता रेणुकाकण्ठबाधां
यद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥२०५॥
( बा. रा. २।३७ )

अत्र 'विजेय' इति कृत्यप्रत्ययः क्त-प्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥२०६॥

अत्र 'पेलव' शब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति
कस्यचिदेव पुंसः ॥२०७॥

अत्र 'पूय'शब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग ! तादृशः ।
कथमद्य स तद्वदीक्षतां तदभिप्रेतपदं समागतः ॥२०८॥

अत्र 'प्रेत'शब्दः ।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥२०९॥

अत्र किं पूर्वं साधुरुत साधुषु चरतीति सन्देहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥२१०॥

अत्र 'वचः' शब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं पूर्वपदमेव,

---

परशुरामं प्रति रावणस्येयमुक्तिः । **हन्तकारो** भोजनकालबलिः । अत्र **विजेय** इत्यनेन योग्यतामात्रेण जयनीयता प्रतिपाद्यते न तु विजितत्वम् । **अतीत्यादि**— **पेलव** ( 122b ) शब्दस्य मधुरपर्यायस्यैकदेशो व्रीडादायी । अतिपेशलमिति पाठे निर्दोषतैव । **य इत्यादि**—गङ्गाप्रमुखास्तीर्थास्तेषां **सार्थ** इति । **कीलनं** गाढसम्बद्धता निश्चलतेति यावत् । **जनिरुत्पत्तिः** । **पूयते** पवित्रीभवति । **अभिप्रेतैकदेशः** प्रेतशब्दः । **कस्मिन्नित्यादि**—**साधुचर** इति 'भूतपूर्वे चरड्' इति ( पा. ५।३।५३ ) चरट्-प्रत्यये साधुषु चरतीति 'चरेष्ट' इति (पा. ३।२।१६) ट प्रत्यये च । पदस्वरूपन्तु(न्त्व)निश्चितमेवेति तत्प्रतीको-

यावदुत्तरपदमपि पर्यायपरिवर्तनं न सहते। जलध्यादावुत्तरपदमेव। वड़वा- ऽनलादौ पूर्वपदम्। यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाप्यन्यै- रलङ्कारकारैर्विभागेन दर्शिता इति[35] भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः।

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥५३॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम्।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥५४॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा।

रसानुगुणत्वं वर्णानां वक्ष्यते। तद्विपरीतत्वं प्रतिकूलत्वम्।

यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥२११॥

---

ऽप्र्र राशयकृत्। **यावदुत्तरपदमपी**ति न हि गी शरादय शस्ता। **जलध्यादा**विति यथा वारिधिपयोधिप्रभृतीनि न तु जलधरवारिधरादीनि। **वडवाऽनलादा**विति वडवा- ऽग्निप्रभृतीनि न तु अश्वानलादीनि प्रयोक्तव्यानि। **अप्रयुक्तादयो** निहतार्थनिरर्थका- वाचकप्रभृतयः।

इदानीमसाधारणान् वाक्यदोषान्विभजते **प्रतिकूले**त्यादि। **वाक्यमेव** न तु पदानीत्यर्थः। **तथे**ति पूर्ववद्दुष्टमित्यर्थः। मृदुमध्यकठोराख्यास्त्रिधा वर्णजातयः। तत्र यं य रस प्रति यादृशी वर्णजातिरुचिता सा तत्र तत्रोपादेया तद्विपरीता तु हेया। तत्र परुषाश्रया वृत्तिः शृङ्गारस्य माधुर्याश्रयस्य विरोधिनीति।

तत्र टवर्गादिभूयस्त्वं प्रतिकूलं[36] यथा **अकुण्ठे**त्यादि—कामिनो दूतीं प्रति वचन- मिद(१२३२)मिति। **कलकण्ठी**ति दूतीसम्बोधनम्। एवं करुणादेऽप्येवंविधाना वर्णाना

---

35 सम्प्रदायानुसारिणो हि निबन्धकारा भवन्ति। अन्यैरिति विभागेनोदाहरण- प्रदर्शिनो रुद्रटस्य कण्ठतस्त्वैतेषा निर्देष्टु राजेन्द्रस्य भोजस्य परामर्शः।

36 एवं "शषौ सरेफसंयोगौ चकारश्चापि भूयसा। विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः॥" इति ध्वन्यालोके माधुर्यपरिपन्थिनामुद्देशः 'शृङ्गार एव मधुरः

रौद्रे—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥२१२॥

( वे. सं. ३।३३ )

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्।

यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाऽऽविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२१३॥

( म. वी. च. २।३३ )

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।

उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्।

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥२१४॥

सन्धेर्वैरूप्यं विश्लेषेऽश्लीलत्वं कष्टत्वं च। आद्यं यथा—

---

प्रातिकूल्यमुन्नेयम्। रौद्रादौ विकटवर्णत्वं दीर्घसमासत्वञ्चानुगुणमिति तद्विपरीतस्य प्रातिकूल्यं यथा **देश** इत्यादि। **तथाविधः परिभव** इत्यनेनैव पर्याप्ते **केशग्रह** इत्यपुष्टार्थताऽतिक्रोधावेशात् समाधेया। **रामेण** भार्गवेण। यथानुगुण्यं दर्शयति **प्रागित्यादि—निशुम्भो** नमनं **विधा** विधानम्। **येनेति** परशुना। अप्राप्तनिशुम्भश्च तत् शाम्भव धनुश्चेति समासः। **द्वैधाविधाऽऽविर्भवदिति** द्वैधीविधानेन व्यक्तीभवत्। **उपहत इति**—तथा चोक्तम् ( व. जी. १।४७ ) अत्रालुप्तैर्विसर्गान्तैः पदैः प्रोतैः परस्परम्।

---

परः प्रह्लादनो रसः' इति शृङ्गारमाधुर्ययोः सहावस्थायित्वे तस्त्वं प्रमाणञ्च। शृङ्गारस्य व्यञ्जकतामितानां संग्रहे काव्यप्रकाशे, 'मूर्ध्नि वर्गान्तगाः स्पर्शाः' 'अट-वर्गे'त्यादि निर्देशश्च।

राजन् ! विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि

रसातलेऽन्तः ।

धीदोर्बले अतितते उचितार्थवृत्ती आतन्वती विजयसम्पदमेत्य भातः ॥२१५॥

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।

निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥२१६॥

अत्र संहितां न करोमीति स्वेच्छया सकृदपि दोषः । प्रगृह्यादिहेतुकत्वेन त्वसकृत् ।

वेगादुड्डीय गगने चरण्डामरचेष्टितः ।

अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥२१७॥

अत्र सन्धावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।

नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥२१८॥

( ध्व. का. अ. २।१० इः )

हतं लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्तगुरुभावान्तलघु, रसाननुगुणं च वृत्तं यत्र । क्रमेणोदाहरणम्—

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा

मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।

---

ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते ॥ इति । तत उदित इत्यादि—यद्यपि मुक्ता रत्नमेव भवति तथापि मणिपदं प्रकर्षद्योतनार्थम् । संहितामिति 'नित्यं संहितैकपदवत्[37] पादेष्वर्धान्तवर्ज'मिति काव्यसमयः (.का. अ. सू. वृ. ५।१।२ ) । सन्धौ दुड्डी-रण्डा-चिड्डु-स्मरणात् काश्मीरादिदेशप्रसिद्धाश्लीलार्थत्वम् ( ५मः उः वृः ) । उर्वी गुर्वी तरुणामाली तर्वाली । मरोरन्ते मर्वन्ते । नात्रर्जु ऋजु नात्र गन्तुं न युज्यत इत्यत्रवत्वे सति हतवृत्तत्वं स्फुटमेव, श्रव्यतामात्रमूलत्वाच्छन्दसः यथा अमृतमित्यादि हरिणीवृत्तपादे प्रथमं षष्ठे ततश्चतुर्थेऽथ सप्तमे यतिः कर्तव्येति छन्दः-(123b) शास्त्रम् । तदिह चतुर्थ-

---

37 सन्धिरत्र पदयोर्मिथः संश्लेषणं न केवलं व्याकरणसम्मता संहितैव । अत्र 'दुड्डी' 'चिड्डु' इति च काश्मीरादिभाषाऽपेक्षया 'रण्डे'ति संस्कृतापेक्षयाऽप्यश्लीलत्वमिति श्रीविद्याचक्रवर्ती ।

सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्ञनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥२१९॥
(का. अ. सू. वृ. ३।२।१०)

अत्र 'यदिहान्यत् स्वादु स्या'दित्यश्रव्यम् ।[38]

यथा वा—

जं परिहरिउं तीरइ मणअ पि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो ॥२२०॥
(वि. बा. ली.)

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥२२१॥

अत्र 'हारिमुदितसौरभे'ति पाठो युक्तः ।

यथा वा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थला-
द्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥२२२॥

---

पादे षष्ठे स्थानेऽन्यदिति प्रातिपदिकभागभेदे[39] स्वरसन्धिकृतेऽपि यदिहान्यत् स्वादित्यस्याश्रवत्वमिति च दुष्टत्वम्, एवं मात्रावृत्तेऽपि । जं इत्यादि—यत् परिहर्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन । एष केवलं[40] यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥ तीर्यते शक्यते । कामोऽत्र वर्ण्यमानः । अत्रान्त्यगुरुः सकारो द्वितीयगण आदिगुरुश्च भकारस्तृतीयगणः पूर्वार्धे न्यस्तौ वैरस्यमावहतः । विकसितेत्यादि—दोधूननेनोभयगुणेन किसलयस्य चामरेण रूपणं लोहितत्वात्, गुञ्जिताः शब्दं कारिताः । पुष्पिताग्रानामेदं छन्दः । यद्यपि पादान्तलघुरपि गुरुरिति शिष्टं तथाऽप्यत्र विश्रान्त्यभावादयमप्राप्तगुरुताभावोऽन्त-

---

38. वामनमते पद्यमिदं माधुर्याख्यार्थगुणस्य निदर्शनम् । 'रसवदमृत'मिति तन्मत आद्यचरणे पाठः ।

39 यतिभङ्गो नामधातुभागभेदे भवेदिति ख्यविकल्पलतादावुदाहरणमवलोकनीयम् ।

40 अह णवरं इति प्रायिकः पाठः । अथ केवलमिति तदनुयायिनी छाया स्यात् ।

अत्र 'अस्त्राणि वस्त्राण्यपी'ति पाठे लघुरपि गुरुत्वं भजते।

हा नृप हा बुध हा कविबन्धो वीरसहस्रसमाश्रय देव।

मुग्ध विदग्ध सभान्तररत्न क्वासि गतः क वयं च तवैते ॥२२३॥

हास्यरसव्यञ्जकमेतद् वृत्तम्।

न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां

वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।

विराटस्यावासे स्थितमनुचितारम्भनिभृतं

गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥२२४॥ (वे. सं. १।११)

अत्रास्माभिरिति, खिन्न इत्यस्मात् पूर्वमित्थमिति च।

अधिकपदं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः।

अविरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२२४॥

अत्र 'आकृति'शब्दः। यथा वा—

इदमनुचितमक्रमश्च पुंसां यदिह जरत्स्वपि मान्मथो विकारः।

यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥२२५॥

(शृ. शं.)

अत्र कृतमिति कृतं प्रत्युत क्रमभङ्गमावहति। तथाच 'यदपि च न कुरङ्ग-लोचनाना'मिति पाठे निराकाङ्क्षैव प्रतीतिः।

---

लघुरिति हृस्वत्वम्। अन्या इत्यादि शार्दूलविक्रीडितं छन्दः। वस्त्राण्यपीति पाठे तुल्यशब्दोच्चारणविलम्बेन गुरूच्चारणकालक्रमा पूर्यत इति लघोरपि गुरुकार्यकारित्वम्। हा नृपेत्यादि—अत्र करुणरसस्य वाक्यार्थीभूतस्य हास्यरसानुगुणत्वेन दोधकवृत्तमननुगुणं तयोरत्यन्तविरोधात्[41]। अस्माभिरिति उषितं स्थितमिति च क्रियाद्वयस्य कर्तृपदं न्यूनम्। एवं चतुर्थपाद इत्थमिति च। स्फटिकेत्यादि [समन्वितोक्तियुक्तिः]सम्यगन्वययुक्तोक्तियुक्तिः प्रतिमल्लानामस्तमय एव उदयो यस्य। आक्रियतेऽनयेत्याकृतिः संस्थान-विशेषः कश्चिद्विवक्षितः। कृत-(124a) मित्यादि—अत्र पूर्वार्धप्रक्रान्तस्य वाक्यार्थस्य

---

41 करुणे पुष्पिताग्राऽऽदीनां शृङ्गारे पृथ्वीप्रभृतीनां वीरे शार्दूलविक्रीडितादीनां हास्ये च दोधकादीनामानुगुण्यमिति महवः।

कथितपदं यथा—

> अधिकरतलतल्पं कल्पितस्वापलीला-
> परिमलननिमीलत्पाण्डिमा गण्डपाली ।
> सुतनु ! कथय कस्य व्यञ्जयत्यञ्जसैव
> स्मरनरपतिलीलायौवराज्याभिषेकम् ॥२२६। (व. जी. ११।०६)

अत्र लीलेति ।

पतत्प्रकर्षं यथा—

> कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् शूकरः
> कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
> के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
> सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥२२७॥

समाप्तपुनरात्तं यथा—

> क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
> झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
> तन्व्याः कञ्चुलिकाऽपसारणभुजाक्षेपः स्खलत्कङ्कणः
> क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥२२८॥

द्वितीयार्धगतैकवाचकशेषं प्रथमार्धं यथा—

> मसृणचरणपातं गम्यतां भूः सदर्भा
> विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।

---

कृतमिति कृतं भग्नं भजते । अधिकरतलतल्पमित्यादि—करतलशय्यायामित्यर्थः । परिमलनं पीडनम् । कथितपदेन वाक्येन कवेरशक्तिरव्युत्पत्तिश्च प्रकाश्येते । एतच्च यद्यपि सामान्येनोक्तं तथापि 'इवा'दि पदानि वर्जयित्वेत्यवगन्तव्यम्—अतएव 'नैकं पदं द्विः प्रयोज्यं प्रायेणे'ति ( का. अ. सू. वृ. ५।१।१ ) काव्यसमये प्रायोग्रहणं वामनेन कृतम् । कः कः इत्यादि—घुरी वाद्यभाण्डविशेषः । तदुक्तम्[42]—पतत्प्रकर्षं तद्वाक्यं यत्पादादुत्तरोत्तरम् । पूर्वानुसारतः कोऽपि निकर्षो यत्र जायत इति । तृप्तस्याहारवत् समाप्तपुनरात्तस्य निराकाङ्क्षत्वं दुष्टत्वम् । क्रेङ्कार इत्यादि—सुरतक्रीडैव

---

42 अत्र पूर्वापरवाक्ययोरसंलग्नत्वात् स्वल्पो ग्रन्थपातः शङ्कनीयः । पुनरुभयोरपि मातृकालिप्योरेषं पाठः ।

तदिति जनकपुत्री लोचनैरश्रुपूर्णैः

पथि पथिकवधूभिर्वीक्षिता शिक्षिता च । २२९॥ (वा. रा. ६।३६)

अभवन्मत इष्टो योगः सम्बन्धो यत्र तद् यथा—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-

र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः।

येषां हुङ्कृतय कृतामरपतिक्षोभाः क्षपाचारिणां

किं तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥२३०॥

अत्र 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' ( पू. मी. ३।१।११ ) इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परसमन्वये यैरित्यत्र विशेष्यस्याप्रतीतिरिति। 'क्षपाचारिभि'रिति पाठे युज्यते समन्वयः।

यथा वा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः

कलानां सीमानं परमिह युवामेव भजथः।

अपि द्वन्द्वं दिष्ट्या तदिह सुभगे! संवदति वा-

मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ॥२३१॥

( मा. मा. १; का. श्र. सू. वृ. ३।२।१२ )

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति। 'चेत् स्यादि'ति युक्तः पाठः।[43]

---

पिकाङ्कनेति रूपकम्। एवमुत्तरत्रापि फेङ्कारो भनुःस्थानेऽनुकरणत्वेन। मसृणेत्यादि—सिचयं वस्त्रम्। अत्र तदिति पदं प्रथमार्धे एक(व) समवशिष्टं द्वितीयार्धे निबद्धं 'नार्धे किञ्चित्समाप्तं वाक्य'मिति ( का. श्र. सू. वृ. ५।१।६ ) वामनेनोक्तम्।

अभवन् असम्भवन्। येषामित्यादि यथ "विहितं त्वत्प्रवादोचितमकीर्तिकरमित्यर्थः। यच्छब्दनिर्देश्या अर्था विशेषणीभूता विशेष्याकाङ्क्षिणः। ततो येषा येषामेवमेव धर्मं वैरिदं कृतमित्यन्वयो यैरिति विशेष्याकाङ्क्षायामपि न तत्प्रतीतिः स्यात्। त्वमित्यादि—अपिः (124b) सम्भावनायाम्। दिष्ट्याऽऽनन्देन। द्वन्द्वं वां युवयोः संवदति। शेषं फलभूतं मिथोऽनुरागोचितं यत्तदा स्यात्तदानीमेवंविध-

43 तथात्वे द्वयमेव मम सिद्धं स्यादिति भावः। चेच्छब्दस्य यदि-शब्दार्थत्वादिति व्यक्तिविवेकव्याख्याने रुय्यक।

यथा वा—

> सङ्ग्रामाङ्गनसङ्गतेन भवता चापे समारोपिते
> देवाकर्णय येन येन सहसा यद्यत् समासादितम्।
> कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
> तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥२३२॥
>
> (स क श्रा ७० पृ)

अत्राकर्णनक्रियायाः कर्मत्वे 'कोदण्ड शरानि'त्यादि, वाक्यार्थस्य कर्मत्वे 'कोदण्डाः शरा इत्यादि प्राप्तम्। न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादिप्रश्न।

---

लोकोत्तरसमानसुन्दरविदग्धचक्रवर्तिनिर्माणनैपुण विधे सफलीभवतीति विवक्षितम्, तथा तु न कृतमित्याह—अत्र यदित्यत्र तदिति तदानीमित्यत्र यदेत्यादिपाठान्तरे तत् सिध्यति। सङ्ग्रामेत्यादि—अत्र येन येनेत्यादे कोदण्डादिना सह सामानाधिकरण्यमनुपपन्न तद्धि वाच्यवाचकभावेन वा स्याद्विशेष्यविशेषणभावेन वा। द्वयमप्यत्र नास्ति, न हि येन कोदण्डेन यत् शरा तेन शरैरिति विशेषणविशेष्यभावो घटते। अथ येन येनेत्यादि समासादनकर्तुं 'समासादितस्य च पदार्थस्य सामान्येन कथनात्तद्विशेषजिज्ञासाया कोदण्डेन शरा इत्याद्युत्तरमित्युच्यते, तदपि नास्ति, विशेषजिज्ञासास्थापकस्य प्रश्नस्याभावात्। अतो येन येनेति कोदण्डादिव्यतिरिक्त कर्ता प्रतीयते। तथाचाभीष्टसम्बन्धो न स्यात्, समासादितविशेषत्वेन तु कथ्यमाना कोदण्डादय इति, तेषा कर्तृत्वानुपपत्तेराकर्णनक्रियायां पदार्थस्य कर्मत्वे तेभ्यो द्वितीयाश्रुतिः स्यात्। वाक्यार्थस्य तु कर्मत्वे समासादिता कोदण्डादय इत्युत्तरवाक्यादस्मात् केन केन किं कि समा (125a)सादितमिति प्रश्न उन्नीयत इत्युत्तरालङ्कारस्यायं विषय इति केचिदाहु[44]। एतन्मते स्वनौचित्य चिन्त्यम्।

---

44 एते के इति न निर्धीयन्ते। पुना रुद्रटमतानुसारिण स्युरिति सम्भाव्यते। पूर्वस्य पूर्वस्योत्तरोत्तरगुणावहत्वे, मालादीपक इत्यलङ्कारसर्वस्वराम्मतो दीपकाद्व्यतिरिक्तोऽलङ्कार। सरस्वतीकण्ठाभरणे चैवम्। मम्मटग्रन्थे दीपकप्रसङ्ग एवायमुद्धृत। अतोऽस्तोद्दिष्टात् दोषवत्त्वादलङ्कारावहता स्याद्वता न वेति विचिकित्सा। दशमोल्लासपठिते श्लोकेऽस्मिन् द्वितीयचरणे 'सप्राप्ते परिपन्थियोधनिवहे साम्मुख्य माश्रादित मिति काचित्क पाठ। तेनानौचित्यानवसर स्यात्। तथाप्येतादृशस्थले वैरस्यस्य दोषबीजस्याङ्गनावदनेन्दुबिम्बगतस्येव कलङ्कलेशस्य

यथा वा—

'चापाचार्यस्त्रिपुरविजयी' इत्यादि (२०५ श्लो.)। अत्र भार्गवस्य निन्दायां तात्पर्यम्। 'कृतवते'ति परशौ सा प्रतीयते। 'कृतवत' इति पाठे मतयोगो भवति। यथा वा—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः॥२३३॥

( वे. सं १।२५ )

अत्र 'अध्वर' शब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते। तथा—

'जङ्घाकाण्डोरुनाल' इत्यादि ( १५३ श्लो )।

अत्र दण्डपादगता निजतनुः प्रतीयते, भवानीसम्बन्धिनी तु विवक्षिता।

अनभिहितवाच्यमवश्यवक्तव्यमनुक्तं यत्र। यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैर्मम हृतस्य
तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेयमाहात्म्यसारसमुदायमयः
पदार्थः॥२३४॥ ( म. वी. च. २।३६ )

---

चत्वार इत्यादि—कौरव्या इति कुर्वादिभ्यो ण्यः ( पा. ४।१।१७२ ) इति ण्यप्रत्यये 'तद्राजस्य बहुषु तेनैवास्त्रियां'मिति ( २।४।६२ ) लुकोऽप्रसक्तेः। कौरव्या इति व्युत्पाद्यते। राजन्यो राजसमूहः। अत्र संग्रामोऽध्वर इत्यसमासेन निर्देशः कर्तुमर्हति। अनभिहितवाच्यमिति—वाच्यशब्दो नार्थपरः, तथा सति वाक्यस्यैवासम्भवात्। तेन वाच्यमित्यत्र 'अ-चयतो यत्' ( पा. ३।१।९७ ) इत्याह—अवश्यवक्तव्यमिति। अप्राकृतस्येत्यादि—

---

स्यादिशा गिरलङ्कारपरंपराभिरभिभूयमानत्वाद् वाक्यभेदाच्च नात्यन्तोपलब्धिः।
भोजेन स्वयं विस्तरास्तगुणनिदर्शनस्थैनोदाहृतः।

अत्र ।पहृतोऽस्मी'त्यपहृतत्वस्य विधिर्वाच्यः, तथापीत्यस्य द्वितीयवाक्य-गतत्वेनैवोपपत्तेः । यथा वा—

एषोऽहमद्रितनयामुखपद्मजन्मा प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप्य[45] लक्ष्मीफलामसुरराजसुतां विधाय ॥२३५॥ ( ऊ ह. )

अत्र मनोरथानामपि दूरवर्तीत्यपरार्थो वाच्यः।

यथा च—

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि ! दासजनं यतः ॥२३६॥ ( वि उ. ४।५५ )

अत्र ।पराधस्य लवमपी ति वाच्यम्।

अस्थानस्थपदं यथा—

प्रियेण सग्रथ्य विपक्षसन्निधौ निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥२२७॥ ( कि श्र ८।३७ )

अत्र काचिन्न विजहा विति वाच्यम्। यथा वा—

लग्नं केलिकचग्रहश्लथजटाऽऽलम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्दरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥२३८॥

---

अतापहरणस्य विधेयत्वमवश्यवक्तव्यम्। 'तत्र हेतु'—तथापीत्यस्येत्यादि। **एषोऽहमि**त्यादि—इय हि **उपाहरणे** स्वप्नदशायामेव कारितविप्रलम्भणस्य हरदृष्टिदाहानन्तर पार्वतीवदनाम्बुरुहप्रमादसमासादितवपुषोऽनङ्गस्योक्ति । **अनिरुद्धः** प्रद्युम्नसुत । असुर-राजस्य बाणस्य सुतोषा । नञ्‌ा हि पूर्वपदेनोत्तरपदेन वा सम्बन्ध । प्रकृते तु नञोऽस्थानेऽस्थानस्थपदता वाक्यस्य । **लग्न** इत्यादि—शितिकन्दरेन्दुशकलस्य **मुद्राङ्क** इति बोद्धव्यम्। अत्र कपोलस्थलं लग्नमिति सम्बन्धनीयम्। आच्छुरितार्धचन्द्रकादयो रूपतो नखविलेखनप्रकारा अष्टौ। ( वात्स्या का० सू० साम्प्र ४।४ ) अग्राम्यता शिष्टजनावर्जनरूपा । परिहासो **नर्म**। ( 125b ) तच्च शुद्धहास्येन श्रृङ्गारहास्येन

---

45 'अभिरूप्ये'ति 'अनुरूपे'ति वा वैकल्पिकः पाठः ।

अत्र 'नखलक्ष्मे'त्यतः पूर्वं 'कुटिलाताम्रे'ति वाच्यम्।

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति[46] क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥२३९॥

( वसुकल्पस्य ; स. क. आ. )

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः।

सङ्कीर्णं यत्र वाक्यान्तरपदानि वाक्यान्तरेऽनुप्रविशन्ति। यथा—

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम्।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥२४०॥ (रु. का. अ. ६।४२)

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि। इमं कण्ठे गृहाण। मनसस्तमोरूपं कोपं मुञ्च। एकवाच्यतायां तु क्लिष्टमिति भेदः।

---

भयहास्येन वा रचितं त्रिविधं, शृङ्गारवदपि स्वानुरागनिवेदनसम्भोगेच्छाप्रकाशनसापराधप्रियप्रतिभेदनैस्त्रिविधमेव। सभयनर्मापि शुद्धरसान्तराङ्गभावाद्द्विविधम्। एवं षड्विधस्याप्यस्य प्रत्येकं वाग्वेशचेष्टाव्यतिकरैरष्टादशविधत्वं मुनिना सप्रपञ्चमुक्तम्[47]। इह तु ग्रन्थविस्तरभयान्नोक्तमिति तत एवावगन्तव्यम्। व्रीडया लज्जयेति। अद्यापीत्यादि क्रुद्धस्योक्तौ समासप्रायमोजो युक्तम्, कवेस्त्वसमासा वैदर्भी। किमित्यादि—विपरीत विवृतमेव। प्रागुक्तक्लिष्टदोषाद्भेदं दर्शयति एकवाक्यतायान्त्विति। अत्र च त्रीणि वाक्यानि। पूर्वं वाक्यान्तरपदानामर्थप्रवेशो निरूपितम्। गर्भितन्तु स्वतन्त्रवाक्यानु-

---

46 झगितीति प्रायशो गृहीतः पाठः।

47 नर्मस्मितमोक्षयेति श्रीधरपरिगृहीतः पाठः। नर्मस्मितहीतयेति पाठान्तरम्। टीकाकृत्प्रदर्शितं नर्महास्यस्याष्टादशविधप्रकरणं नाट्यशास्त्रे नोपलभ्यते। षष्ठाध्याये हास्यरसालोचने स्मितादिषड्विधहास्यस्यैव विवरणं दृश्यते। यदि तावत् भरतसम्प्रदायमतग्रन्थेषु समुद्देशलक्षणादिभरतादिविस्तारकृता ग्रन्था मतस्यैवंविधस्य समर्थकाः स्युरिति सम्भाव्यते। वस्तुतस्तु दशरूपक एवैतत् (२।४८-५०) प्रपञ्चितमुपलभ्यते।

गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा—

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।

वदामि भवतस्तत्त्वं न विधेया कदाचन ॥२४१॥

अत्र तृतीयपादो वाक्यान्तरमध्येऽनुप्रविष्टः । यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे

मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।

तत्सक्तोऽयं न किञ्चित् गणयति विदितं तेऽस्तु तेनास्मि दत्ता

भृत्येभ्यः श्रीनियोगात् गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥२४२॥

अत्र विदितं तेऽस्त्वित्येतत् कृतं, मत्युक्त, लक्ष्मीस्ततोऽपसरतीति विरुद्ध-मतिकृत् ।

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।

स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

(ङ० का०ऋ० ११२५)

इति प्रसिद्धिमतिक्रान्तं यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-

प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।

---

प्रवेशे । अतएव गर्भजातीयानुप्रवेशाद् गर्भितोक्तिः । परापकारेति—तृतीयपादो 'वदामि भवतस्तत्त्व'मिति । लग्नमित्यादि—रागः शत्रुशोणितजनितं लौहित्यमनुरागश्च । असियष्टचेति रूपक चिन्त्यम् । मातङ्गाः करिणश्चाण्डालाश्च । परः शत्रुरन्यश्च । त्रिश वर्णनीयस्तुत्यर्थमिदं प्रयुक्तं निन्दार्था पर्यवस्यति । तथाह्यम्बुधेः स्वपितुः कथयितु प्रहितेति व्यवस्थापितेऽपि—यत् पुनर्न किञ्चिद्गणयति विदितं तेऽस्त्विति निन्दार्थमुपात्तं तेन (१२६१) स्वामिनो दुश्चरित सर्वथा गोप्यमन्यया सात्येकरणद्वारा प्रकाशयता नोतमित्यर्थं वर्णनीयो राजा सर्वथा त्याज्य इति पुनःप्रधानादिसङ्गानिरामाज्ञानमात्र मव मदीयं साध्यं न पुनरधिकं गणयति किञ्चिदिति । श्रीस्ततोऽपसरतीति प्रतीयते । एतत्पार्थदोषे पुनरुदाहरिष्यते । [महाप्रलयेत्यादि] सुभटानां रणे शब्दिते सिंहनाद इति प्रसिद्धम् । प्रतिरुतानुकारीत्यपि दुष्टम्, रुतस्य पक्षिजातिध्वनित्वात् ।

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः

कुतोऽद्य समरोदधेरयमभूतपूर्वोदयः[48] ॥२४३॥ (वे. सं. ३।४)

अत्र हि रवो मण्डूकादिषु प्रसिद्धः, न तूक्तविशेषणे सिंहनादे।

भग्नः प्रक्रमः प्रस्तावो यत्र। यथा—

नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशाऽपि याता।

कुलाङ्गनानां हि दशाऽनुरूपं नातः परं भद्रतरं समस्ति ॥२४४॥

अत्र 'गते'ति प्रक्रान्ते 'याते'ति प्रकृतेः। 'गता निशाऽपी'ति युक्तम्। ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' (का॰अ॰सू॰ ५।१।१) इत्यन्यत्र, कथितपदं दुष्टमितीहैव चोक्तेः कथमेकस्य पदस्य द्विः प्रयोगः। उच्यते। उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो

---

अथ भग्नप्रक्रमं कथयति। तथा चोक्तम्—"प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ। ह्लादः स्फुरन्ननास्वादाद्यत्र म्लानत्वमश्नुते। दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः॥ इति। अयञ्च प्रकृत्यादीनामभिमतानामानन्त्यादनन्तप्रकारः सम्भवति। तत्र दिङ्मात्रमुदाहरति **नाथ** इत्यादि। **समस्ति** सम्भवति। 'गता निशाऽपी'ति तु पाठे सति नास्त्ययं दोष इति। [**द्विः प्रयोग** इति] एतच्च कथितपदनिबन्धनं दुष्टत्वमायातम्।

---

48 'पूर्वैः पुरः' इति पाठान्तरम्।

49 टीकाकृतामशेतरेण च 'तथा चोक्त'मिति गदाकरसूत्रमारम्भेण,या तत्रैतदीयमवोद्धारादिह किंचित् सम्भाव्यते वक्तुम्। प्रक्रमभेदविवरणमलत्यं शब्दतोऽर्थतथापि व्यक्तिविवेकग्रन्थमनुवदति। व्यक्तिविवेके लक्षणप्रसङ्गे एवं पठ्यते 'प्रक्रमभेदोऽपि शब्दानौचित्यमेव। न च यथाप्रक्रान्तैकरसप्रवृत्तायाः प्रतिपत्तिप्रतीतेस्तत्पात इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीति। किञ्च सर्वत्रैव शब्दार्थव्यवहारे लौकिकक्रमोऽनुसर्तव्यः। लोकस्य मा भूद्रसास्वादप्रतीतेः परिम्लानतेति यथाप्रक्रममेवैनमाद्रियते नान्यथेति प्रतिपत्प्रतीतिस्तु रसाश्रितेति लक्षणात्। एतच्च टीकाकृतव्याख्यानादपि ज्ञायते। अयञ्च प्रकृत्यादीनामभिमतानामित्यादिः श्रीधरग्रन्थ, एतदनन्तरीयव्यक्तिविवेकग्रन्थस्यानुवादो। व्यक्तिविवेकग्रन्थे प्रकृतालोचनानिस्तार संगृहश्लोकाः प्रायशः सर्वत्रैवोपलभ्यन्ते। परन्तु प्रक्रमभेदप्रकरणे ते मुद्रितपुस्तके न दृश्यन्ते। किमेतादृशोऽत्र

अत्र वचनस्य। 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका' इति 'कम्पमाना' इत्यत्र 'कम्पमापु'रिति च पठनीयम्।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥२५१॥

(अभि शा. २।६)

अत्र कारकस्य। 'विस्रब्धा रचयन्तु सूकरवरा' इत्यदुष्टम्।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसङ्ग्रहणाय च ॥२५२॥

(म. वी. च २।३०)

अत्र क्रमस्य। 'पादोपसङ्ग्रहणाये'ति पूर्वं वाच्यम्। एवमन्यत्राप्यनुसर्तव्यम्।

अविद्यमान क्रमो यत्र। यथा— द्वयं गतं सम्प्रति शोचनीयताम्' इत्यादौ (१३४ श्लोः)। तत्र 'त्वं' शब्दानन्तरं चकारो युक्तः। यथा वा—

---

कम्पमाना इति तिङन्तस्य। गाहन्तामित्यादि—कारकस्येति अभिहिता-(127a) नभिहितत्वेन विभक्तिभेदात्। एवं कर्मणोऽपि। अकलितेत्यादि—पादोपसंग्रहणं नमस्काराय पादस्पर्शः। अत्र प्रथमं मुनेस्तपोनिधितोपवर्णिता पश्चात्तु रोषालुतेति[53], तदनुसारेण कर्तव्यता नोक्ता। एवमिति—कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम्। किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ (कु. स. ४।७) इत्यादौ।

एवं भग्नक्रममुदाहृत्याक्रममाह—अविद्यमान इति। द्वयमिति—पुरैक एवासीच्छोच्यः,

---

53 'रोषान्वितते'ति 'क' पुस्तके पाठः।

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ ! दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।
आर्येयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२५३॥

अत्र 'इत्थं प्रोच्येवे'ति न्याय्यम् । तथा 'लग्नं रागावृताङ्ग्ये'त्यादौ ( २४२ श्लोः ) 'इति श्रीनियोगा'दिति वाच्यम् ।

अमतः प्रकृतिविरुद्धः परोऽर्थो यत्र । यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥२५४]

( र. व. ११।२० )

इति । अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

अर्थदोषानाह—

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥५५॥
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥५६॥
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥५७॥

---

अधुना तु द्वयम् । यथा वेति । शक्तिरित्यादि—**निस्त्रिंशः** खड्गो निष्कृपश्च । **दोषाकरश्चन्द्रो** दोषाणामाकरश्च । **महाकुट्टिनी**[54] नितान्तमर्दनी शम्भली च । **सर्वगा** असती च । **वृद्धा** जरती च । [अमत इति]—अत्र प्रस्तुतविरोधिनो रसस्य व्यञ्जकोऽन्योऽर्थः स्यात्तदनिष्पन्नार्थं वाक्यं यथा रामेति । **राममन्मथशरेण ताडिता** राक्षसी सुगन्धरुधिरचन्दनोक्षिता यमालयं जगामेति बीभत्सरसः प्रकृतः । तद्विरुद्धस्तु रमयतीति रामो यः कामशरस्तेन हृदि ताडिताऽभिसारिका सुगन्धिकुसुमचन्दनोक्षिता रात्रिसञ्चरणशीला प्राणेश्वरस्य दयितस्य गृहं जगामेति शृङ्गारव्यञ्जकोऽर्थः । ताडकापक्षे **रुधिरचन्दनेति**

---

54 कुट्टयति च्छिनत्तीति कृत्वा कुट्टनी छेदिका मर्दनीति यावत् । श्लेषमहिम्ना रूढेर्योगापहारित्वेऽस्य नायं विषय इति मन्तव्यम् ।

दुष्ट इति सम्बध्यते। क्रमेणोदाहरणम्—

अतिवितितगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥२५५॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा।

सदा मध्ये यासामियममृतनिःस्यन्दसरसं,
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्।
प्रसादं ता एता घनपरिचयाः कैन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥२५६॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती[55] चमत्कारं वहति ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः।

जगति जयिनस्ते ते भावा नवेन्दुकलाऽऽदयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोकनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥२५७॥ (मा. मा. १।३६)

इति। अत्रेन्दुकलाऽऽदयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम्।

---

रूपकं चिन्त्यम्। दुष्ट इति—दुष्टमिति पूर्वोक्तलिङ्गविपर्यासात्। सम्बन्धमहं यदनुपादानात् प्रकृते (127b) काऽपि न हानिरपुष्टो यथा अतीत्यादि 'अतिवितितगगनसरणि'—'मरुदुल्लासितसौरभ'पदोपात्ता अर्थचया नान्वितविरोधिनः, न चाऽविनाभावादिकं किञ्चिदेतत्प्रतीतिनिमित्तमस्ति—तस्मात् पृथग्भूत एवायं[56] दोष इति। कथं

---

55 एतद्विशेषणविशिष्टाया रचनाया वक्रोक्तिजीवितग्रन्थे लक्षणादि (वृहत्सङ्केतकृत सोमेश्वरोऽत्र तथैव निर्दिशति)। उदाहरणमेतत्तत्राधुनाऽदृष्टमपि तन्मूलकमेव स्यात्।

56 प्रकृत एवायमिति 'क' पुस्तके पाठः।

'कृतमनुमत'मित्यादि ( ३६ श्लोः )। अत्र 'अर्जुनार्जुने'ति 'भवद्भि'रिति चोक्तं 'सभीमकिरीटिना'मिति किरीटिपदार्थः पुनरुक्तः। यथा वा—

अस्त्रज्वालाऽवलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥२५८॥

( वे॰ सं॰ ३।७ )

अत्र चतुर्थपादवाक्यार्थः।

भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव !।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम्॥२५९॥

अत्र मातङ्गस्य प्राङ्निर्देशो न्याय्यः।

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते।
तदयि साम्प्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम्॥२६०॥

पदोऽविदग्धः।

---

कथमपि क्लेशतो यत्र प्रतीतिरुपजायते स कष्टोऽर्थो यथा सदेत्यादि। संक्षेपार्थं कथयता ग्रन्थकृतैव कष्टता व्याख्याता। उत्कर्षो वाऽपकर्षो वा प्राग् यस्यैव निगद्यते। तस्यैवान्यस्तदर्थश्चेद्व्याहतोऽर्थस्तदा भवेत्॥ यथा जगतीत्यादि—समस्त एकः स एवेति सम्बन्धः। तेन मम न तथा मनो मदयन्ति स्म यथा नवेन्दुकलाऽऽदीना स्वमानसमुरागा सद्भावेऽपि समस्तवैलक्षण्येन कोऽपि मालतीलक्षणालम्बनविभावस्योत्कर्षो विवक्षितस्तत्र मालत्यां चन्द्रिकात्वकल्पनेन निकर्षो निरूपितो व्याहतत्वम्। पदसमूहाधरः अस्यार्थो भूतस्यशोद्धृताः (?)। कृतमित्यादि 'अरे रे अर्जुन अर्जुन सात्यकेन युक्तमीदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपः परिभवो भवद्भिरीक्षितु'-(वे. सं. ३)मित्युद्देशकोपत्वात् 'किरीटि'पदार्थस्य पौनरुक्त्यं समाधीयेतेति मत्वोदाहरणान्तरमाह यथा वेति। प्रागवाच्य उच्यते पश्चात् १श्राद्धाच्यो-(१२४३)ऽथवाऽमतः। कविना शक्तिवैकल्यात्सोऽर्थस्तु दुष्क्रमं विदुः॥ यथा भूपालरत्नेत्यादि—निर्दैन्यः कार्पण्यशून्यः। मातङ्गं मे विश्राणय प्रयच्छ। अथ तत्र किञ्चिद्दुर्मुक्यमस्ति चेत्तदा तुरङ्गमिति वक्तुं युक्तम्।

स ग्राम्यस्तु रिरंसाऽऽदिः पामरैर्यत्र कथ्यते। वैदग्ध्यवक्रिमलयं हित्वैवं वनिताऽऽदिषु॥ यथा स्वपितीत्यादि। स्वपिमीति रिरंसोक्तिः। सम्प्रयोगे हि रतं रह:शयनं मोहनमिति पर्यायाः।

'मात्सर्यमुत्सार्य'त्यादि (१२१श्लो:)। अत्र प्रकरणाद्यभावे सन्देहः। शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्-
विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते॥२६१॥

(वे. सं. ३।१६)

अत्र शस्त्रमोचने हेतुर्नोपात्तः।

इदं ते केनोक्तं कथय कमलातङ्कवदने!
यदेतस्मिन् हेम्न कटकमिति धत्से खलु धियम्।
इदं तद्दुःसाध्याक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम्॥२६२॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम्। यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः!
सरणिमपरो मार्गस्तावद् भवद्भिरवेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः॥२६३॥

---

कूर्परमलङ्करणम्। **अविदग्धो** ग्राम्यः। **मात्सर्य**त्यादि—अत्र किं शान्तो वक्तेति शृङ्गारीति [वा] साधकबाधकप्रमाणाभावात् सन्दिग्धत्वम्। निर्हेतुर्यथा **गृहीत**मित्यादि—अश्वत्थामवाक्यमिदम्। **यतः स्वस्ति भवत** इत्यत्र यत इति तत इत्यर्थे।[57] प्रसिद्धिविरुद्धो यथा **इदं त** इत्यादि। कामस्य कुसुमशरत्वादिकं प्रसिद्धं न तु चक्रधरत्वम्। कविसम्प्रदायविरुद्धो यथा **उपे**त्यादि। **उदञ्चन्नवाङ्कुरकञ्चुके**न सर्वाङ्गव्यापिता बोधयति। इयं ह्यशोकविकाशदर्शनादाहितमूर्छेन गृहमागच्छता पान्थेन कथं कथमपि जीवितं लब्धमिति दृष्टि(दृष्ट)व्यतिकरस्य कस्यचित् पान्थस्येतरपथिकनिवारणायोक्तिः। अत्र **चरणनलिने**ति रूपके नलिनरूपावस्थोदितश्चरणोऽप्रधानीभूतः प्रतीयत इति समय-

---

57 एवमपि न दोषनिर्मुक्तिः। यदाह चण्डीदासः 'यत इति तत इत्यर्थे इति व्याख्यानमसान्तुष्टिकमेव। तस्मात्तत इति पाठे दोषद्वयं निरवकाशमेवे'ति।

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धः।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः॥२६४॥

अत्रामूर्ताऽपि कीर्तिर्ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥२६५॥

ग्रहोपरागं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम्।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना॥२६६॥

एतदर्थशास्त्रेण।

विधाय दूरे केयूरमनङ्गाङ्गनमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम्॥२६७॥

अत्र केयूरपदे नखक्षतं न विहितम्। एतत् कामशास्त्रेण।

---

विरुद्धः, लोकप्रसिद्धे-(128b)स्तु कविप्रसिद्धिर्गरीयसीति। **सुसितेति**—पञ्चभेदादभिसारिका द्विधा शुक्लाभिसारिका कृष्णाभिसारिका च। तत्र 'वेलासदृशवेशा चे'ति (ह. का. अ. १२।४३ द्रः) वचनाज्ज्योत्स्नाऽभिसारिका शुक्लवस्त्राभरणा प्रयोक्तव्येत्याहुः। अमूर्तायाः कीर्तेः शुभ्रत्व, तदपि च चन्द्रिकावत् प्रकाशकमिति। सदेत्यादि—**ग्रहोपरागो** ग्रहणं रात्रिस्नाननिमित्तोपलक्षणम्। **धर्मशास्त्रेणेति**[58] ग्रहार्थे तृतीया। अनन्येति—सन्धिविग्रहयानासनद्वैधाश्रयाः षड्गुणास्तेषां भावः **षाड्गुण्यम्**। एतदनुसरणञ्च कामन्दकाद्यर्थशास्त्रे महाबलस्यैव राज्ञः प्रतिपादितमिति बाहुबलमात्रानुसरणं तद्विरुद्धम्। **विधायेत्यादि—केयूरपदं** केयूरस्थानं प्रकोष्ठः। तत्र नखक्षतमाला कामशास्त्रविरुद्धा। कक्षे वक्षः स्तनौ गलः पृष्ठं जघनमूरू चेति (का. सू. ४।५)

---

58 रात्रिस्नाननिषेधकेषु वचनेषु रात्रिशब्दो मध्ययामद्वयपर इति सम्प्रदायविद.। अतएवोदाहृतपद्ये धर्मशास्त्रविरोधः।

अष्टाङ्गयोगपरिशीलनकीलनेन दुःसाधसिद्धिसविधं विदधद्विदूरे।
आसादयन्नभिमतामधुना विवेकख्यातिं समाधिधनमौलिमणिर्विमुक्तः॥२६८॥

अत्र विवेकख्यातिः सम्प्रज्ञाते। पश्चादसम्प्रज्ञातः। ततो मुक्तिः। न तु विवेकख्यातौ। एतद्योगशास्त्रेण। एवं विद्यान्तरविरुद्धमुदाहार्यम्।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम्।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्॥२६९॥

अत्र 'ततः किमिति' न नवीकृतम्। तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता॥ ७०॥

---

नक्षत्रतस्थानानीति वात्स्यायनादौ, परिगणनात्। अष्टाङ्गेत्यादि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ योगाङ्गानि (यो सू २।२६)। **परिशीलनं** समन्ततोऽभ्यास। **कीलनं** तत्रैव स्थैर्यम्। सिद्धे **सविधं** निकटमणिमादिसिद्धी (द स पू ४६) दूरीकुर्वन्। सत्त्वपुरुषान्यताप्रत्ययो **विवेकख्यातिरिति** (यो सू ३।४६)। अभ्यासवैराग्याभ्यां चित्तवृत्तिनिरोध (यो. सू. १।१२)। अयञ्च सम्प्रज्ञातो (1297)ऽसम्प्रज्ञातश्च। तत्र वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञात (यो सू १।१७)। वितर्क चित्तस्यालम्बने स्थूल आभोग, सूक्ष्मो विचार। आनन्दो ह्लाद। दृक्शक्ति पुरुष। दर्शनशक्तिर्बुद्धि। अनयोरेकस्वरूपात्मिका सविदस्मिता। तत्राद्यचतुष्टयानुगत समाधि सवितर्क। द्वितीयो वितर्कविकल सविचार। तृतीयो विचारविकल आनन्द। चतुर्थस्तु विकारोऽस्मितामात्र इत्येते सालम्बना समाधय (व्या भा १।४८)। विवेकख्यातेः सबीज समाधि (यो. सू. १।४६)। न तत्र किंचित् सम्प्रज्ञायत इत्यसम्प्रज्ञात। तदवस्थे चेतसि स्वविषयाभावाद्बुद्धिबोधात्मा पुरुष स्वरूपेणावतिष्ठत इति योगशास्त्रक्रम (यो सू ४।३४, ४०)। एतद्विरुद्धं लिखेत्याह—**नत्विति**। नवीकृतेनार्थेन कवेः शक्तिव्युत्पत्ती प्रतीयेते। अतस्तद्विपर्ययो दोषो यथोदाहृते। अथ दोषदार्ढ्यार्थं नवीकृतत्वं **दर्शयति तत्त्विति**। नवीकृत यथा **यदि दहतीत्यादि**—अनलानलादीनां दाहकत्वादि स्वाभाविकमिति नानाभङ्गिभिरभिहितं नवायते, तत्र एवंविधया भङ्ग्या स्वार्थस्य चमत्कारास्पदत्वादुपादेयत्वम्।

यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७१॥

( वं. जी. ११२६ ; पृ० १८ )

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिते'ति सनियमार्थत्वं वाच्यम् ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ॥२७२॥

अत्र 'शोण एवे'ति नियमो न वाच्यः ।

'श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्' ।

---

अथ सनियमे तद्वर्जितो वा वक्तव्ये तद्विपर्ययेण यत्रोच्यते तौ द्वौ । तथा विशेषे वाच्ये सामान्यमस्मिन् वाच्ये विशेष इति द्वौ । तदित्थं चत्वारोऽर्थ-(129b) दोषा यथाक्रममुदाह्रियन्ते । यत्रेत्यादि—अनुल्लिखिताख्य-[59]मनभिव्यक्ताकारम् । आभासो मिथ्याज्ञानम् । अश्मसु मध्य इति बोद्धव्यम् । अत्र सनियमार्थं पाठान्तरमाह छायामात्रेति—मात्रग्रहणेनो पाध्यन्तरनिरासः । ननु सनियमे वाच्ये तथा नोक्तमिति वाच्यावचनात् कथमस्य पृथग्भावः ? सत्यमेतत् । यत्र प्रधानभूतस्यार्थस्यानभिधाने दोषबीजं स वाच्यावचनस्य विषयः, यत्र तु वाच्यमभिहितं तदंशभूतास्तु नियमादयो नाभिधीयन्ते सोऽस्य विषयः । अन्यथा हि वाच्यावचनवाच्यवचनाभ्यामाघ्रातत्वादन्येषामपि दोषाणां पृथग्भावो दुरुपपादः स्यादिति भावः । वक्त्राम्भोजमित्यादि—'सरस्वती नदीविशेषश्च । शोणो नदविशेषः । मुद्रा पालिका तत्सहितोऽपि समुद्रः ( तत्सहितः समुद्रोऽपि ) । वाहिन्यः सेनाश्च । मानसं सरोविशेषोऽपि' (ह.सं.पृ. ४६) । सदैव शोण इति योजनायामस्थानस्थपदत्वं द्रष्टव्यम् । श्यामामित्यादि—तन्त्रमोषधादिकम् (…मौषध्यादिकम्). हरत स्फोटयत, श्वेतोत्पलानां

---

59 अयमेव कामितक पाठः । अनुल्लिखितार्थमेवेति पाठान्तरम् 'क' पुस्तके ।

चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥२७३॥

( वि. शा. भ ३।१ )

अत्र ज्योत्स्नीमिति श्यामाविशेषो वाच्यः ।

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय ! माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकरः
पुरुषोत्तमोऽपि ॥२७४॥ ( भ. श ६२ ; व. जी. १६ ष्ट )

अत्र एकेन कि न विहितो भवता स नामे'ति सामान्यं वाच्यम् ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देव कथं मृष्यते ॥२७५॥

( म वी च. २।६ )

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न हि 'परस्ये'त्यनेन सम्बन्धो योग्य. ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।

---

कुमुदानाम् । अत्र श्यामलिमत्वप्रापणा ज्योतिष्मत्या एव रात्रेः समुचित न तु रात्रिमात्रस्य । श्यामापदेन तु सामान्येनोपात्त प्रत्युत श्यामधर्मत्वं स्पृशति । कल्लोलेति—वेल्लित इतस्ततः प्रेरित । तत्र कौस्तुभाख्यरत्नविशेषोल्लेखेनान्येषा र-(१३०१)नानामनादरो न कर्तव्य इति मर्यादितं भवति । साकाङ्क्षो यथा—अर्थित्व इत्यादि—प्रत्युत विपरीतम् । द्रुह्यन् द्रोह कुर्वाणो विरुद्धचरितः परमेश्वरधनुर्भङ्गादिव्यापारात् । विस्रंसनं भ्रंश । अत्र स्त्रीरत्नमिति साकाङ्क्षमभिधानापर्यवसानात् । 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यता'-मित्यत्र सम्बन्धनिराकाङ्क्षेण राज्ञा यथा पुरुषो नान्वीयते यथा च 'गिरिर्देवदत्तो शुक्ल महिमा'नित्यादौ विजातीयव्यवधानादनन्वयस्तथाऽत्राकाङ्क्षाया सन्निधेश्चाभावादन्वयो न युज्यत इत्याद न हीति । अपदयुक्तो यथा आज्ञेत्यादि—सर्वाण्येव शास्त्राणि नवं चक्षुर्यस्य, नहि जगमायभक्तेरसाध्यं नाम किंचिदिति । पदं स्थानम् । लङ्केति दृगाता राजधानी ।

उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥२७६॥
( बा. रा. ११३६ )

अत्र 'स्याच्चेदेष न रावण' इत्येतावत्येव समाप्यम् ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥२७७॥

अत्र श्रुतिबुद्ध्यादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् । 'लग्नं रागावृताङ्ग्ये'त्यत्र ( २४२ श्लोः ) 'विदितं तेऽस्त्वि'त्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।

---

**द्रुहिणो** ब्रह्मा । **वरोऽत्र** जामाता । **स्याच्चेदेष न रावण** इत्यत्र लोकोत्तरसाहसैकरसिकत्वाद्यर्थान्तरसंक्रमितवाच्यं **रावणपदम्** । तथाऽत्रापि जगदाक्रन्दकारित्वाद्यर्थान्तरसंक्रमितवाच्यमित्येतावतैव समाप्य यत् **क्व नु पुनः सर्वत्र सर्वे गुणा** इत्यधिकं कृतं तेनायमर्थः स्थाने न न्यस्त इत्यपदयुक्तः[60] । तथाचोक्तम्—युक्ताधिक्ये विसर्गः स्यादाधिक्यार्थो न भासते । अर्थः प्रकल्पते यत्र सोऽस्थानपद उज्झितः ॥ इति । सहचरभिन्नो यथा **श्रुतेनेत्यादि**—अत्र (130b) श्रुतादिभिर्यथाक्रमं बुद्ध्यादयोऽलंक्रियन्त इति श्रुतिबुद्ध्यादयः कर्तृकर्मभावेन ये निबद्धास्ते सह चरन्तीति सहचरास्तेभ्यश्च **व्यसनेन मूर्खतेति** यदुपनिबद्धं तदपकृष्टत्वाद्भिन्नमिति प्रस्तुतेतरस्य क्षेपे सहचरभिन्नो नामार्थदोषः । कश्चिदर्थः प्रकाशितः सन् विरुद्धां धियं जनयतीति प्रकाशितविरुद्धो यथा **लग्नमित्यादि** । तच्च प्रागेव व्याख्यातम् ।

विध्यनुवादभावाभावत्रिधा[61] क्वचिद्द्वयोर्विपर्ययः, क्वचिद्विधेः, क्वचिदनुवादस्येति । **प्रयत्नेत्यादि—शेषे** स्वपिषि । **निशामित्यत्यन्तसंयोगे द्वितीया** । सोमकाः पाण्डवपक्ष-

---

60 अत्र 'अहह आश्चर्यमेवोऽपि गरीयान् दोष' इत्यादि चूर्णिकगद्यकृतयाऽवरतरणिकयैव रावणोपेक्षा सूचिता । तस्याश्च 'स्याच्चेदेष न रावण' इत्यनेन पिष्टपेषणमित्यपि केषाञ्चिमते दूषकतावीजम् । क्व नु पुनः···सर्वत्रेति पौनरुक्त्यमप्यवद्यम् ।

61 अयञ्च मीमांसकनयगम्भातो दोषविवेको मूलकृतो मीमांसामतं प्रत्यादरातिशयं सूचयति । यथा धर्मशास्त्रादिविचारे तथा काव्यविचारेऽप्यस्य प्रभुत्वमव्याहत-

इयं परिसमाप्यते रणकथाऽद्य दोःशालिना
मपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥२७८॥ ( वे. सं. ३।३४ )

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम्। यथा वा—

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२७९॥

( भ. श. ८१ )

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम्।

---

पातिनः क्षत्रियाः। अत्र पूर्वदिनपर्यन्तं चिन्तावशादलब्धनिद्रस्त्वं स्वयमेव जागरितोऽसि, अद्य तु मया त्वदीयसकलरिपुवलक्षये कृते सुखसुप्त- स्तुतिपरम्पराभिः प्रयत्नेन प्रतिबोध्यो-ऽसीति *शयनस्यानूद्यत्वे प्रतिबोधनस्य च विधेयत्वे विवक्षिते तद्विपर्ययेणा निर्देशस्तेन* विपरीतोऽर्थः प्रतीयत इति तद्विपर्ययात्मा दोषः। **वाताहारै**रित्यादि—**जाल्मो** मूर्खः। शाठ्येन धर्माचरणं **दम्भस्तस्य स्फुरितं** चेष्टितं व्रतमहत्त्वम्। तत्र मृगचर्मवसनत्वं, ततोऽपि मेघतोयकणिकामात्राहारत्वं, ततो वायुभक्षणमिति यथाक्रमं व्रतानां तीव्रतरत्वम्। एतच्च **व्युत्क्रमेणोक्त**मिति वाच्यस्य विधेयस्य व्युत्क्रमाद्विध्ययुक्तता।

---

मिति 'काव्यज्ञशिक्षयाऽभ्यास' इति तृतीयकारिकाया वृत्तौ 'काव्यं कर्तुं विचारयितुं ये जानन्ती'त्यादिना ग्रन्थेन सूचितम्। अयुक्तस्य विधित्वमनुवादस्यायुक्तत्वं क्वचिदेतदुभयसंस्पर्श इति त्रिधा भेदव्यवस्था। औचित्यभङ्गविचारे तु 'प्रयत्ने'त्यादौ शाब्दमनौचित्यम्, 'वाताहारतये'त्यादावार्थम्, 'श्वः रामे'त्यादावेतदुभयाधीनमिति केऽपि निदर्शनदर्शनमार्गेण विभागसमर्थनं कुर्वन्ति। परं *परिगणितसहृत्यासहृत्यत्र्वाध्ये सर्वत्रैवार्थोऽयं दोष इति ग्रन्थकृता तथैव परि-*गणना। अविमृष्टविधेयांशत्वे शाब्दविमर्शस्यैव दोषबीजतेति ततोऽयं भिन्न एव। यन्मते वाक्यता काव्यस्यात्मेत्युक्तं यथा रसादिध्वनिमत्ता तन्मतेऽप्यापि नित्यदोषता स्वीकार्या। प्राचीनानां वामनरुद्रटादीनां ग्रन्थेष्वस्य दोषस्यानुपलम्भो नवीनानां व्यक्तिविवेककृत्प्रामेतदसंस्पर्शेन नाप्रत्याशित इति तत्सङ्गति-मत्त्वैव प्रतिपादितमित्यलमनुत्थापितोत्थापनेन।

अरे रामाहस्ताभरण ! भसलश्रेणिशरण !
स्मरक्रीडाव्रीडाशमन ! विरहिप्राणदमन !
सरोहंसोत्तंस ! प्रचलदलनीलोत्पलसखे !
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥२८०॥

अत्र 'विरहिप्राणदमने'ति नानुवाद्यम् ।

लग्नं रागावृताङ्ग्ये'त्यादि ( २४२ श्लो )। अत्र 'विदितं तेऽस्त्वि'त्युपसंहृतोऽपि 'तेने'त्यादिना पुनरुपात्तः ।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः ॥२८१॥
( भा. का. अ. ११५१ )

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति । तथाऽपि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम् ।

---

(१३१a) अरे रामेति—भसला भ्रमरा । रामाहस्ताभरणेत्यादिकमामन्त्रणं प्रार्थनीयवाङ्कारायानुवदितुमर्हत्येव । विरहिप्राणदमनेति तद्विशेषणमनूद्यमानं विपरीतफलकमित्यनुवादानौचित्यम् । श्लोकेऽपि लग्न पुनःस्वीकृतो गर्हित एवेति । हन्तुमिति—अर्थात् परम् । स्तब्धस्य स्वोत्कर्षाभिधानेन परावधारणा( धीरणा )दप्रणतस्य विवरैषिण परप्रमादान्वेषणशीलस्य यथा शीघ्रं पतनं न तथा पुनरुद्गम इति विवक्षितोऽर्थः । अत्रैव हन्तुमेव प्रवृत्तस्य स्तब्धस्येति रतारम्भविषया, विवरं स्त्रीवराङ्गं तदन्वेषिण इति वराङ्गविषया, यथाऽऽशु जायते पात इति रेतोनिसर्गविषया, न तथा पुनरुन्नतिरिति नष्टरागप्रत्ययविषया प्रतीतिरश्लीला भवतीत्यश्लीलार्थता[62] । यत्रैक इति—एतच्च 'लग्नं रागावृताङ्ग्ये'त्यादौ दोषत्रयं प्रकाशयता ग्रन्थकृतैव स्पष्टीकृतम् । अलङ्कारे दोषास्तु ये पृथगन्यैर्लक्षितास्तेषामेष्वेवान्तर्भाव इत्यग्रे वक्ष्यते[63] ।

---

62 एतच्च ध्वन्यालोकलोचने श्रुतिदुष्टादय इति मूलप्रतीकोपरि 'छिद्रान्वेषी महानि'-त्याद्युदाहरणप्रदर्शनेन सूचितम् । भामहालङ्कारे उत्तरार्धस्त्वित्थं पठ्यते 'पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नति'रिति ।

63 अन्यैरिति मेधाविभामहदण्डिवामनरुद्रटप्रमुखैः प्राचीनैः । अग्रे—दशमोल्लासस्यान्त्यांशे ।

इयं परिसमाप्यते रणकथाऽद्य दोःशालिना
मपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥२७८॥ ( वे सं. ३।३४ )

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम्। यथा वा—

वाताहारतया जगद्विषधरैराखाद्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२७९॥
(भ श. ८२)

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम्।

---

पातिन क्षत्रिया। अत्र पूर्वदिनपर्यन्तं चिन्तावशादलब्धनिद्रस्त्वं स्वयमेव जागरितोऽसि, अद्य तु मया त्वदीयसकलरिपुबलक्षये कृते सुखसुप्त स्तुतिपरम्पराभि प्रयत्नेन प्रतिबोध्यो-ऽसीति शयनस्यानूद्यत्वे प्रतिबोधनस्य च विधेयत्वे विवक्षिते यद्विपर्ययेण निर्देशस्तेन विपरीतोऽर्थं प्रतीयत इति तद्विपर्ययात्मा दोष। **वाताहारे**त्यादि—**जाल्मो** मूर्ख। शाठ्येन धर्माचरणं **दम्भ**स्तस्य **स्फुरितं** चेष्टित व्रतग्रहणम्। तत्र मृगचर्मवसनत्वं ततोऽपि मेघतोयकणिकामात्राहारत्वं, ततो वायुभक्षणमिति यथाक्रम व्रतानां तीव्रतरत्वम्। एतच्च **व्युत्क्रमेणोक्त**मिति वाच्यस्य विधेयस्य व्युत्क्रमाद्विध्ययुक्तता।

---

मिति 'काव्यज्ञशिक्षयाऽभ्यास' इति तृतीयकारिकाया वृत्तौ 'काव्य कर्तुं विचारयितुं ये जानन्ती'त्यादिना ग्रन्थेन सूचितम्। अयुक्तस्य विधित्वमनुवादस्यायुक्तत्वं क्वचिदेतदुभयसंस्पर्श इति त्रिधा भेदव्यवस्था। औचित्यभङ्गविचारे तु 'प्रयत्ने'त्यादौ शाब्दमनौचित्यम्, 'वाताहारतये'त्यादावार्थम्, 'अरे रामे'त्यादा-वेतदुभयाधीनमिति केऽपि निदर्शनदर्शनमार्गेण विभागसमर्थन कुर्वन्ति। परं *परिवृत्तिसहत्वासहत्वरूपाभेदे सर्वत्रैवार्थोऽयं दोष इति ग्रन्थकृता तथैव परि-*गणना। अविमृष्टविधेयांशत्वे शाब्दविमर्शस्यैव दोषबीजतेति अतोऽयं भिन्न एव। यन्मते वाक्यता काव्यस्यागौणमङ्ग यथा रसादिध्वनिमत्ता तन्मतेऽस्यापि नित्यदोषता स्वीकार्या। प्राचीनाना वामनरुद्रटादीनां ग्रन्थेष्वस्य दोषस्यानुपलम्भो नवीनानां व्यक्तिविवेककृतामेतदमर्शौध नाप्रत्याशित इति तत्तद्गति-मत्रैव प्रतिपादितमित्यलमनुत्थापितोत्थापनेन।

अरे रामाहस्ताभरण ! भसलश्रेणिशरण !
स्मरक्रीडाव्रीडाशमन ! विरहिप्राणदमन !
सरोहंसोत्तंस ! प्रचलदलनीलोत्पलसखे !
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥२८०॥

अत्र 'विरहिप्राणदमने'ति नानुवाद्यम् ।

'लग्नं रागावृताङ्ग्ये'त्यादि ( २४२ श्लो: )। अत्र 'विदितं तेऽस्त्वि'त्युपसंहृतोऽपि 'तेने'त्यादिना पुनरुपात्तः ।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः ॥२८१॥
( भा. का. अ. १।४१ )

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति । तथाऽपि तेषां तत्रासंकृतत्वात् प्रकाशनं न कृतम् ।

---

(131a) अरे रामेति—भसला भ्रमराः । रामाहस्ताभरणेत्यादिकमामन्त्रणं प्रार्थनीयत्वाद्वकारायानुवदितुमर्हत्येव । विरहिप्राणदमनेति तादृशोपणमनूद्यमानं विपरीतफलकमित्यनुवादानौचित्यम् । लोकेऽपि त्यक्तः पुनःस्वीकृतो गर्हित एवेति । हन्तुमिति—अर्थात् परम् । स्तब्धस्य सोत्कर्षाभिधानेन परावधारणा( धीरणा )दप्रणतस्य विवरैषिणः परप्रमादान्वेषणशीलस्य यथा शीघ्रं पतनं न तथा पुनरुद्गम इति विवक्षितोऽर्थः । अत्रैव हन्तुमेव प्रवृत्तस्य स्तब्धस्येति रतारम्भविषया, विवरं छोवराङ्गं तदन्वेषिण इति यराङ्गविषया, यथाऽऽशु जायते पात इति रेतोविसर्गविषया, न तथा पुनरुन्नतिरिति नष्टरागप्रत्ययविषया प्रतीतिरश्लीला भवतीत्यश्लीलार्थता[62] । यत्रैक इति—एतच्च 'लग्नं रागावृताङ्ग्ये'त्यादौ दोषत्रयं प्रकाशयता ग्रन्थकृतैव स्पष्टीकृतम् । अलङ्कारे दोषास्तु ये पृथगन्यैर्लक्षितास्तेषामेष्वेवान्तर्भाव इत्यग्रे वक्ष्यते[63] ।

---

62 एतच्च ध्वन्यालोकलोचने श्रुतिदुष्टादय इति मूलग्रन्थोपरि 'छिद्रान्वेषी पतति'-त्याद्युदाहरणप्रदर्शनेन सूचितम् । भामहालङ्कारे उत्तरार्धमित्थं पठ्यते 'पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नति'रिति ।

63 अन्यैरिति मेधाविभामहदण्डिवामनरुद्रटप्रमुखैः प्राचीनैः । अग्रे—दशमोल्लासान्त्येऽर्थे ।

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।

सन्निधानादिबोधार्थम्—

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते । तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये । यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥२८२॥
अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥२८३॥

( का. अ. सू. वृ. २।२।१४ )

अत्र कर्णश्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थम् ।

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥२८४।

( का. अ. सू. वृ. २।२।१३ )

अत्र धनुःशब्द आरूढत्वावगतये। अन्यत्र तु 'ज्याबन्धनिष्पन्दभुजेन यस्य' ( र. वं. ६।४० ) त्यादौ (२८५) केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥२८६॥

( का. अ. सू. वृ. २।२।१५ )

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

---

एवं दोषान्निर्णीय तेषामेव क्वचिद्विशेषाददुष्टत्वं दर्शयन् पुनरुक्तस्य तावददुष्टतां दर्शयति कर्णावतंसेत्यादि । अवतंसः कर्णालङ्कार एव तथापि कर्णादिश्रुतिमन्तरेण तत्सन्निहितानामवतंसादीनामशक्या प्रतिपत्तिः, अतो न पौनरुक्त्यं यथा अस्या इत्यादि । अत्रावतं(13 b)सादयः स्वभावमात्रेण नैवंप्रभावाः[64] किन्त्वेतत्कर्णसम्बद्धा एवेति वर्णनीयप्रकर्षः प्रतीयते । एवं ज्या धनुष एव भवतीति गम्यार्थत्वेऽपि धनुःशब्दस्य प्रयोग आरूढताप्रतिपादनायेति न दुष्टः । यत्र त्वेतन्न विवक्षितं तत्र 'ज्या'पदस्य केवलस्यैव प्रयोगो यथा ज्याबन्धेति । यस्येति सहस्रार्जुनस्य । कारा गुप्तिका । हारः सामान्येन

---

64 स्वभावमात्रेणैवंप्रभावा इति 'क' पुस्तके पाठः ।

सौन्दर्यसम्पत्तारुण्यं यस्यास्ते ते च विभ्रमाः।
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ! ॥२८७॥

अत्रोत्कृष्टपुष्पविषये 'पुष्प'शब्दः। निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते।

स्थितेष्वेतत्समर्थनम् ॥५८॥
न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।

---

मुक्ताहार एवेति मुक्ताशब्दो हारशब्देनैव गतार्थः प्रयुज्यते शुद्धप्रतिपत्त्यर्थं, शुद्धानामन्यरत्नामिश्रितानां मुक्तानां हारो मुक्ताहार इति। [ **हसतीति-** ] हासो हि कविसम्प्रदाये शुद्धशुभ्रः प्रसिद्धः। तथा **पुष्पमालाशब्दः**। यद्यपि मालाशब्देनैव पुष्पमालाऽभिधीयते तथापि पुष्पशब्दस्योपादानमुत्कर्षप्रतिपत्त्यर्थं, तेनोत्कृष्टपुष्पाणां माला पुष्पमालेति प्रतीयते। ननु वनमाला शब्दमालेत्यादौ मालाशब्दः प्रयुज्यत इति तन्निवृत्त्यर्थं पुष्पशब्दो विशेषणं भविष्यति ? तत् कुतोऽस्य विशिष्टार्थसम्पर्कत्वमित्यत आह **निरुपपदो हीति—** मालाशब्दः केवलं पुष्परचनाविशेषमभिधत्ते, अतोऽन्ताभिधाया व्यवस्थापनादन्यत्रोपचार इति। एवं करिकलभशब्दः। कलभेनैव गतार्थः करिशब्दस्तद्रूपताऽऽप्तये प्रयोक्तव्यः। करी हि प्रौढः कुञ्जरस्तद्रूपकलभः करिकलभो यथा 'त्यज करिक(1320)लभ त्वं प्रेमबन्धं करिण्या' ( का. अ. सू. वृ. २।२।१७ ) इति। अत्राप्यतिप्रसक्तं निवारयन्नाह **स्थितेष्विति—स्थितेषु** महाकविपरम्पराव्यवस्थितेषु। नहि रसनाऽऽदीनां सन्निधानादिप्रतिपत्तये जघनादिपदैः सह समासः क्वचिदिष्यते। तेन जघनरसनानितम्बकाञ्चुयष्टूकरभादयः सन्निधिप्रौढत्वादिप्रतिपत्तये न परिकल्प्य जल्पनीयाः। अतएवाह **समर्थनमिति**[65] न

---

65 एतस्यामग्रिमायां च कारिकायामधिकारसूत्रागकक्षायां केषाञ्चिदपि प्राङ्निर्दिष्टानां दोषाणामतथात्वं स्थाप्यते। क्वचित् कविसमयः कुत्रचिदालङ्कारिकसम्प्रदायसिद्धान्तः क्वचिदलौकिकत्वानुसन्धानं क्वचिद्वक्तॄणां स्वरूपतश्चित्तचापल्यशैलीप्रभृतिवैशिष्ट्यविन्यासकृतत्वाद्युक्ततापोषतात्पर्यमत्र विनिगमकं यथोदाहरणमालातो व्यपदिश्यते। दोषाणाञ्च केषाञ्चिददोषत्वमगुणत्वं वा कुत्रचिदेषां गुणत्वमपि व्यवस्थाप्यते मयुक्तिकम्। एषामन्तिमकक्षाऽन्तर्भूतानां वैशेषिकत्वसंज्ञा भोजादिकृतमन्येषु। 'न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्कृति'रित्यादि प्रामाणिकाचार्यदण्डिवचनमेतेषां काव्यशोभाकरत्वमनुमोदयति। अतएव न भवति दुष्टमित्यादि निषेधमुखस्वीकारमपोह्य 'गुणत्वापत्तये नित्य'

जगाद मधुरां वाच विशदाक्षरशालिनीम् ॥२८८॥

( का अ सू वृ ५।२।१८ )

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ 'गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं प्रयोग कार्यं (का अ सू वृ २।२।१८ ) इति न युक्तमुक्तम्। युक्तत्वे वा

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम।
पादाभ्यां दूरमध्वान व्रजन्नेष न खिद्यते ॥२८९॥

इत्युदाहार्यम् ।

---

तु सर्वत्र निबद्धत्वमित्यर्थं । जगादेत्यनेन गतार्थस्य वाक्शब्दस्य प्रयोगो विशेषणदानार्थं कार्यमिति यत् वामनादिभिरुक्तम् ( का स सू वृ २।२।१६ ) तत् प्रत्युक्तम्।[66] मधुरादि पदानां जगादेति क्रियाविशेषणत्वे कर्मत्वेन नपुसकलिङ्गता च, मधुर विशदाक्षर निजगादेत्यनेनैव प्रतीतत्वात्। वस्तुतस्तु रचनेय सान्निध्यकरणादौ[67] (?) लाघवादिहेतोरनु-( रुप ) योगिनी न त्वन्यत्र। अतएव न युक्तमुक्तमिति विरोध दर्शयति। अथ यत्र क्रियाविशेषणत्व न सम्भवति तत्र कथ विशेषावगतिरित्याह युक्तत्वे वेति—अत्र व्रजन्नेष न खिद्यत इत्यनेनैव पादाभ्यामित्यस्य गतार्थस्य प्रयोगश्चरणत्रपरित्राणरहिताभ्याम-पीति विशेषप्रतिपत्त्यर्थं कार्य एव। द्रुतमिति च क्रियाविशेषणमिति।

---

तेऽत्र दोषगुणा स्मृता' इत्यादि वचन लीलाचुम्बन क्रीडासरो हेमाङ्गदादिषु चौदार्यगुणाविष्कारस्तेषा मते सम्भवति।

66 अत्र वामनादिभिरिति श्रीधरोक्तावादिपदेन दोषोल्लासे मम्मटभट्टानामादर्शस्थानीयस्य महिमभट्टस्यापि ग्रहणम्। स खलु 'अव्यभिचारिण कारकस्याविशेषण-प्रयोग पुनरुक्त' इत्यनुशास्ति सविशेषणस्यापि दोषनिर्मुक्तत्वमुदाहरणप्रयोगे समर्थयते च। एवमपि रुचको व्यक्तिविवेकव्याख्याने। मम्मटमते क्रिया-विशेषणत्व एवैवविधा प्रयोगा समर्थनीया न तु विशेषणसामान्ये। दर्पण कृदादयो मम्मटमत 'केचित्त्वाहु'रित्यसान्तुष्टिकत्वेन निर्दिशन्ति। मम्मटमते चरणत्रेत्यादिपद्य उभयत्रापि न दोषसम्भावना— आद्ये चरणत्रेत्यादौ न गतार्थता द्वितोये द्रुतमिति क्रियाविशेषणता। गोविन्दठक्कुरस्तु 'न युक्तमुदाहृत'मिति सिद्धान्तविप्लवकारि मन्तव्य करोति।

67 रचनेयं सा चेति 'ख' पुस्तके, वचनेन भातिव्याकरणादौ इति 'क' पुस्तकेऽस्पष्ट पाठ।

ख्यातेऽर्थे निर्हेतोरदुष्टता—

यथा

चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥२९०॥

( कु. स. १।४३ )

अत्र रात्रौ पद्मस्य संकोचो दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते।

अनुकरणे तु सर्वेषाम्।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्। यथा—

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥२९१॥

वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः,

[68]ख्यातेऽर्थे इति—लोकप्रसिद्ध इत्यर्थः, यथा चन्द्रं गता पद्मगुणान्न भुङ्क्ते इति। अत्र पद्मगुणानां चान्द्रमस्या अभिख्यायाश्च ( 132b ) युगपदनुपयोगे लक्ष्मया यत् कारणद्वयं रात्रिसंकोचदिवाऽनुदयलक्षणं तल्लोकप्रसिद्धमेवेति हेतुना विनाऽपि निराकाङ्क्षत्वप्रतीतेर्न निर्हेतुतानिबन्धनं दुष्टत्वम्। एवं यत्र विशेषणमात्रप्रयोगेणैव विशेष्यस्य च प्रतिपत्तिः ( का. सू. वृ. ५।१।१० ) तत्रापि विशेषणमात्रस्यैव प्रयोगः कार्यो यथा निधानगर्भामिव सागराम्बराम् ( र. वं. ३।९ )। अत्र विशेषणमात्रेण पृथिव्याः प्रतीतिरिति निराकाङ्क्षतैव।

अनुकरणे त्विति यथा मृगेत्यादि—अत्र श्रुतिकटुच्युतसंस्कृतप्रयुक्तानामदुष्टत्वेऽपि सम्बन्धकृतं यदसाधुशब्दरूपं ये चापभ्रंशा ये चानर्थका वर्णा यथाव्यक्तवर्णपदवाक्ययोस्तत्तदनुकरणानां साधुत्वाभ्युपगमात्। सुत्रामशब्दः कविभिरिन्द्रपर्यायतया प्रयुज्यते। क्वचिद्वक्तृप्रतिपाद्यौचित्यादुपाधेर्दोषा अपि गुणत्वमाश्रयन्ते। यथोच्यते ( स. कं. धा. २।३६७ ) सामण्णसुन्दरीणं विब्भममावहइ अविणओ ज्जेव्व। धूमच्चिअ पज्जलिआण बहुमओ सुरहि-

68 कारिकेयमार्यया निबद्धा। ख्यातेऽर्थे इत्यादिः कश्चिन्नामाविचिन्त्या विरञ्चिच्छो-भयार्थपर्यायम्।

क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये वा रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः।

क्रमेणोदाहरणम्—

दीधीवेवीङ्समः कश्चिद् गुणवृद्धयोरभाजनम्।
क्विडित्प्रत्ययनिभः [70]कश्चिद्यत्र सन्निहिते न ते ॥२९२॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम्।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम् ॥२९३॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥२९४॥

( म. वी. च. १।३५ )

वाच्यवशात्—

मातङ्गाः! किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः!
सारङ्गा महिषा मदं व्रजथ किं शून्ये च शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥२९५॥

---

दारुण ॥ तदेतदाह[69] चक्र्यादीति। दीधीत्यादि पाणिनिव्याकरणे हि वृद्धिरादैच् (१।१।१) अदेङ्गुणः (१।१।२) इति कृतगुणवृद्धिसंज्ञकानां क्ङिति च (१।१।५) दीधीवेवीटाम् (१।१।६) इत्येताभ्यां प्रतिषेधोऽनुशिष्टः। प्रतिपाद्यौचित्यं यथा यदा त्वामित्यादि—अद्राक्ष-मिति दृशेर्लुङि उत्तमपुरुषैकवचनेऽमि कृते वृद्धिशासनात् ( पा. ६।१।५८ )। (130a) एवमस्मार्षमिति। समस्प्राक्षञ्च सम्पदमिति हर्षं स्पृष्टवानस्मि[71]। रौद्रादाविति वीरे बीभत्से च। यथा अन्त्रप्रोतेत्यादि। नलकं मूर्धोऽस्थि। आघोषयन्ती राक्षसी प्राग्भारः सेक.। अत्र क्षोभणो बीभत्सरसः। वाच्यवशाद्यथा मातङ्गा इत्यादि। शून्ये के च न शूराः [ अपि तु सर्वेऽपि ]। सिंहहुंकृते सति यद्गर्जितं...। जम्बुकानां सिंहप्रति-

---

69 क्वचिदित्यादिस्तदेतदाहेत्यन्त सन्दर्भः 'ख' पुस्तके नास्ति।

70 क्विप्-प्रत्ययनिभ इति पाठान्तरम्।

71 एषां चष्टत्वन्तु श्रुतिकष्टस्त्वधाक्षीदर्थात्सीत्तृणेढीत्यादि लोचने (२।१२) सूचितम्।

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

प्रकरणवशाद् यथा—

रक्ताशोक ! कृशोदरी क नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वाताबधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥२९६॥

( वि. उ.[72] ४ ? )

अत्र शिरोधूननेन कुपितस्य वचसि ।

क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥२९७॥

( सू. श. ६ )

अप्रयुक्तनिहतार्थौ श्लेषादौ न दुष्टौ । यथा—

---

योगिताऽत्र दुष्टा । अत्र कोपाटोपेत्यादयः परुषाः शब्दाः । रक्ताशोकेत्यादि—अत्र पुष्पोद्गमानुमितमपि तदीयज्ञानं शिरःकम्पनयेन निषेधेन मिथ्यैवायं गोपयतीति समुद्भिन्नरोषावेशादनुगुणम् । क्वचिन्नीरस इति यथा शीर्णेत्यादि—अपघनैरङ्गैर्व्रणिभिः घर्घराव्यक्तघोषानघौघैः पापसमूहैः दीर्घाघ्रातानतिशयं कवलितानुल्लाघयन् गदमुक्तान् कुर्वन् स्वास्थ्यं नयन्नित्यर्थः । य एकः पुनरपि पूर्ववद् घटयति । अन्तरन्तरे द्विगुणत्वेन घना निबिडा या घृणा दया तन्निघ्नास्तत्परतन्त्रा निर्विघ्ना विनयन्त्य वृत्तयो व्यापारा यस्य तस्य घर्मांशोः सूर्यस्य घृणयो रश्मयः सिद्धसङ्घैर्दत्तार्घा वो युष्माकमघानां (?) पापानां विघातं शीघ्रं विदधतु । अत्र परुषाक्षराणां न गुणत्वं न वा दुष्टत्वं, रसं प्रत्येव वर्णानामौचित्यानौचित्यस्य वक्ष्यमाणत्वात् ।

अथ च्युतसंस्कृतसमर्थानुचितार्थान् दोषान् परिहृत्याप्रयुक्तनिहतार्थौ [illegible]

---

72 विरहिणः पुरूरवसः क्लिष्टयुक्तिरिति वदन्त्यन्ये । [illegible] श्लोको न लभ्यते ।

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥२९८॥

( ध्व. आ. २।२१ )

अत्र माधवपक्षे शशिमदन्धकक्षयकरशब्दावप्रयुक्तनिहतार्थौ।

अश्लीलं क्वचिद्गुणः। यथा सुरतारम्भगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वि'ति कामशास्त्रस्थितौ—

---

श्लेषादाविति[73]—आदिग्रहणेन (133b) यमकादयः। येनेत्यादि— अत्र स त्वां पायात् सर्वदा सर्वकालमुमाधवः पार्वतीप्रियः सर्वेप्सितप्रदो हरिश्च। तत्र परमेश्वरपक्षे येन दग्धमन्मथेन बलिजितः केशवस्य कायो देहः पुरा पूर्वं त्रिपुरविजयेऽस्त्रीकृतः शरतां नीतः, यश्चोद्वृत्तसर्पहारकङ्कणो यश्च गङ्गामधारयत् यस्य चन्द्रवदुत्तमाङ्गं हरश्चेति नाम स्तुतिविषयं प्राहुः, यश्चान्धकाख्यदैत्यनिधनकरश्च। माधवपक्षे तु अनः शकटं बालक्रीडाया येन ध्वस्तम्, अभवेन असंसारेण। बलिं जितवान् यः कायः स पूर्वममृताहरणे स्त्रीत्वं नीतः, उद्धृतभुजङ्गं कालियाख्यं यो हतवान् यश्च रवे शब्दब्रह्मणि लीनः, अगं गोवर्धनगिरिं गां भूमिं च यो धारयामास, यस्य शशिनं मथ्नाति यो राहुस्तस्य शिरोहर इति नाम स्तुत्यं मुनय आहुः। अन्धकानां वृष्णीनां जनपदभेदानां क्षयं निवासं द्वारकाख्यं करोति य इति शशिमच्छिरःशब्दो राहावप्रयुक्तोऽपरस्तु प्रयुक्त एवेति। एवमन्धको दैत्ये क्षयो विनाशे च प्रसिद्धः। स चात्राप्रसिद्धे प्रयुक्त इति निहतार्थः। अनयोः श्लेषानुकूल्याद्गुणत्वम्। असुचितार्थं नित्यं निरर्थकस्य तु पादपूरणमात्रार्थमिति मात्रग्रहणेन यमकाद्यलङ्कारनिर्वाहकतया(134a) गुणत्वं सूचितमेवेति। अश्लीलस्य गुणत्वं प्रतिपादयति द्व्यर्थैः पदैरिति। सुरतारम्भगोष्ठ्यामित्यनेनौचित्यं

---

73 इयमेवालङ्कारमहिमहृतचित्तानां केषामपि कवीनां विदग्धवचनभङ्गियैया-ऽसुकराणामप्यलङ्कारभेदानां विनिबन्धने दार्ढ्यमनुशीलितमनुशिष्य। परन्तूत्तम-काव्यकल्पेनैतेषां पृथग्यत्ननिर्वर्त्यानामुपादानमित्यालङ्कारिकरारण्यवस्थापका-नामानन्दवर्धनाचार्याणां साकूतं घोषणम्। श्लोकस्यास्य व्याख्यानभेदा आकर-तोऽवगन्तव्याः। सङ्कलितकोपकाव्येष्वस्य बहुलमुपलम्भः क्वचिच्चास्य भारवि-कृतत्वनिर्देशश्चैनस्य विदग्धगोष्ठीषु गौरवातिशयं सूचयति।

कारिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥२९९॥

ग्रामकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥३००॥

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः
सभृत्याः ॥३०१॥ ( वे. सं. १।७ )

अत्र भाव्यमङ्गलसूचनम् ।

सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतिपत्तिं कृत्वैव[7] व्याजस्तुति-

---

दर्शयति, **पिशुनयेत्** सूचयेत प्रकटीकुर्यादित्यर्थः । **करिहस्तेनेत्या**दि "अत्र करिहस्तः स्थूलहस्तः 'तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः । करिहस्तस्तु विज्ञेय' इति च पुरुषध्वज-प्रतिनिधिः स्त्रीणां द्रावणार्थं गजकर इति कामशास्त्रप्रसिद्धश्च । **सम्बाधः** संघाटो, वराङ्गश्च । ध्वजः पताकाचिह्नं पुंव्यञ्जनश्च । **साधनं** सैन्यं स्त्रीव्यञ्जनश्च" (ह. स. ४६पृ:) । तदिदं न दुष्टं प्रत्युत कामकलाऽभिज्ञतया तथाभूतगोष्ठ्या गुणतामारोहति । एवं लक्षित-संवीतादीनामश्लीलानामदुष्टत्वं द्रष्टव्यम् । तदुक्तं 'न गुप्तलक्षितसंवीतानी'ति ( का. अ. सू. वृ. २।१।१६ ) । तत्राप्रसिद्धासभ्यं गुप्तं यथा संबाध इति ( का. अ. सू. वृ. २।१।१७ ) । 'लाक्षणिकासभ्यान्वितं लक्षितं यथा जन्मभूरिति । एतद्धिलक्षणया गुह्यार्थं न तु स्वशक्त्ये'ति ( का. अ. सू. वृ. २।१।१८ ) । 'लोकसंवीतं संवृतं यथा सुभगा भगिनी कुमारी दोहद इति । संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम् । शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावने'ति ( का. अ. सू. वृ. २।१।१९ ) । **उत्तानेत्या**दि—**अत्रोत्तानोच्छून**[त्वं] द्विधाकृतमण्डूकोदरतुल्यत्वं, **क्लेदित्वं व्रणत्वञ्च** स्त्रीवराङ्गस्य प्रतिपाद्यमानं तदासक्तानां कृमित्वं व्यवस्थाप्यमानं सर्वं घृणाक-( 134b )-रमपि विरक्तकथायामनुगुणमिति गुणः । अथामङ्गलनिबन्धनस्याश्लीलस्य गुणत्वं यथा **निर्वाणेत्या**दि—**रक्ता** सानुरागा **प्रसाधिताऽ**र्जिता भूर्यैः रक्तेन मण्डिता भुवश्च यैः । **विग्रहो** वैरं शरीरञ्च । **स्वस्थाः** कुशलिनः स्वर्गस्थाश्चेति सूत्रधारेण भाविनोऽमङ्गलस्य

---

7† केषाञ्चित् प्राचीनानामयमसंलग्नप्रायः पाठः । कृत्वैव न कदाचिदृत्त्वेति विवरणं साहित्यचूडामणौ । नियतार्थप्रतीतिकृत्त्वेनेति प्रायशो गृहीतः सुसंहितः पाठश्च ।

पर्यवसायित्वे गुणः। यथा—

> पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !।
> विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥३०२॥
>
> ( सु. र. को. १६४४ )

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः। यथा—

> आत्मारामा विहितरतयो निर्विकल्पे समाधौ
> ज्ञानोत्कर्षाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
> यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
> तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥३०२॥ ( ने. सं. ११२३ )

---

सूचनं क्रियमाणं विवक्षितमेवेति[75]। पृथुकेत्यादि[76] पृथुकानां बालानां च आर्ताः स्वरास्तेषां पात्रं, पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि च यत्र। भुवि उषितो भूषितोऽलङ्कृतश्च। विलसत्कैः गर्तसम्बन्धिभी रेणुभिः पांशुभिर्गहनं विलसन्तीभिः करेणुभिर्व्याप्तञ्च। आत्मेत्यादि—"देहे(देह)बुद्धिप्रमाण( प्राण )शून्यरूपमितप्रमातृता(निमज्जनेनापरिमितबोधरूप आत्मनि ये रमन्ते। भेदसंसर्गाभ्यां ज्ञानविकल्पस्तस्मान्निष्क्रान्तो 'योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुने'त्युपपादितदिशा ध्येयेन सह समापत्तिः समाधिस्तस्य तत्राद्वैते विहितरतय इत्यर्थः। ज्ञानं प्रकाशात्मकं तदुद्रेकाद्विघटितास्तमोग्रन्थयो येषां, तम इत्युपलक्षणं रजोग्रन्थयोऽपि येषामत एव सत्त्वनिष्ठा एवम्भूता य वीक्षन्ते कमपीत्यनिर्वचनीयस्वरूपम्, वेदेनापि नेति नेत्या(१३५a)दिना पारिशेष्येण प्रतिपादनात्। अशुद्धोऽध्वा तमः, शुद्धोऽध्वा ज्योतिः, पुराणो घटादिसिद्धेः पूर्वसिद्ध आनन्दरूपतया प्रकाशमानश्च" ( रु. सं. ४७ पृः )। तं पुरुषमयं मोहान्धो मिथ्याज्ञानान्धः सुयोधनः कथं जानातीति। अत्र भीमसेनस्तद्वेत्ता"

---

75 अत्र क्वचित् क्वचिदुदाहरणसमर्थकवृत्तेष्टीकोभयोरेवादर्शलिप्योर्न लभ्यते। परमेतत्र श्रीधरानुसृतशैल्यनुयायीति ग्रन्थपातः सम्भाव्यते।

76 इयश्चान्या विदग्धभव्यसरणिर्व्याजस्तुतिगुम्फिता यस्याश्च चमत्कारमूलया गमनिकयाऽर्थिभी राजप्रशस्तिः क्रियते स्म। एवंविधानामलङ्कारमहिम्नैव स्वीकारो न ध्वनिमूलत्वेनेति निर्णीतोऽभिनवगुप्तपादैर्ध्वन्यालोकलोचने 'किं वृत्तान्तैः परगृहगतै'रित्यादिलक्ष्योद्दङ्कनेन।

भीमसेनस्त्वद्वैताप्रतिपाद्य इत्यस्फुटः पाठः 'क' पुस्तके।

स्वयं वा परामर्शे । यथा—

> षडधिकदशनाडीचक्रमध्यस्थितात्मा
> हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
> अविचलितमनोभिः साधकैर्दृश्यमानः[78]
> स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥३-३॥ (मा. मा. ५।१)

प्रतिपाद्यस्तथाभूत एव सहृदेवः प्रतिपादकः । **षडधिकेति**—शक्तीनामिच्छाज्ञानक्रियाणां ब्राह्मीमाहेश्वरीवैष्णवीप्रभृतीनां वामादीनां भूचर्यादीनां करणेश्वरीणामकारादिरूपामृता-दीनामेवं विधानामन्यासामपि फलभेदादारोपितभेदपदार्थवपुषा **नाथः** न्यग्भावबोद्भावनात् **प्रभुर्जयति** । आक्षिप्तनमस्कारो जयत्यर्थः । "देहादिमितप्रमातृतानिमज्जनात्मबोधप्रमातृ-भावोन्मज्जनेन समाधिविषय इत्यर्थः । न च शक्तयः परस्परपरिहृतवपुषोऽपि त्वेकैकस्याः शक्तेः सर्वशक्त्यात्मतेत्याह **शक्तिभिः** । **परिणद्ध** इति परितः समन्ताद्बद्धः तेनेशिवादि-दशायामपि ज्ञातादिवपुः । न चासौ दूरे भवतीत्याह **षडधिकेति**—षड्भिरधिका दश षोडश या नाड्यस्तासां यच्चक्रं हृत्स्थाने [चक्रवज्ञाख्यादिरूपेण स्वरूपम्][79] **तन्मध्ये स्थितः** स्थितिमान् विश्रान्त आत्मा अविकलं शिवात्मस्वरूपं यस्य । उक्तं हि **श्रीनन्दिशिखायां** 'हृद्योगं देवि वक्ष्यामि विस्तरेण शृणुष्व तत् । बिन्दुर्नादः शिवश्चैव स्वयं तत्रैव सन्ति चे'त्यादि । अथवा 'हृदये यत्तत्पैचक्र'(135b)·राजानमेकं तत्र षोडशारक'मित्यादि । इडा च पिङ्गला चैव सुषुम्ना च परा स्मृता । गान्धारी हरिजिह्वा च पूषा चैव यशा तथा । अलम्बुषा कुहुश्चैव शङ्खिनी दशमी स्मृता । तालजिह्वेभजिह्वा च विजया कामदाऽपरा । अमृता चार्जुना नाम एता वायुसमाश्रिताः ॥ इत्यादि । प्रभुश्चरति चैतासां शतान्यर्धचतुर्दश । इत्यादि । नाडीचक्रमिदं श्रेष्ठं षोडशारन्तु जाज्वलम् । द्वासप्ततिसहस्राणि नाडीनां नाभिसंस्थिता । तासां मध्ये प्रभाऽनन्तेत्यादि । द्वे द्वे नाड्यौ च दशगे पूर्वादीनां दिशां यतः (क्रमात्) इत्यादि च" (क. सं. ४७-४८ पृः)। [80]दशानां स्कन्धनाभिहृत्कण्ठतालुभ्रू-

---

78 'दृश्यमाणः' इति पाठान्तरम् ।

79 बन्धनीगर्भस्थितं वचनं 'ख' पुस्तके नास्ति ।

80 एवमेव काश्मीरीयशैवतन्त्रप्रणाल्या व्याख्या । पञ्चरात्रमते प्राचीनाहिर्बुध्न्य-संहितायां (३२।१३-२०) चतुर्दशैव मुख्या नाड्यः । तासां नामाभिधानानीतो भिन्नानि । वैकल्पिकी तु प्राच्यादिदेशप्रचलिततन्त्रमतेन विन्यासेह सुधियां

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः। यथा—

> फुल्लुक्करं कलमकूरणिहं वहन्ति जे सिन्धुवारविडवा मह वल्लहा दे।
> जे गालिदस्स महिसीदहिणो सरिच्छा दे किं च मुद्धविअइल्ल-
> पसूणपुञ्जा ॥३०५॥ (क. म. १।१६)

अत्र कलमकूरमहिषीदधिशब्दा ग्राम्या अपि विदूषकोक्तौ।

---

मध्यवर्तिना नाडीचक्राणां मध्येऽधिकं प्रधानं यद्दशनाडीचक्रं मुख्यं हृदयं यत्र ता इडापिङ्गला-प्रभृतयो दश नाड्यो हृद्गता एकोत्तरशतसंख्यास्तिर्यगूर्ध्वाधोगतनाडीषु प्रधानतमास्तस्मिन् स्तनान्तरमध्यवर्तिनि **स्थित आत्मा** शुद्धकूटस्थनिरावरणचिद्रूपं यस्य स तथेति। न केवलमित्थं नाडीचक्रपरामर्शनेन यावज्ज्योतिर्मात्रध्यानेनापि गम्यत इत्यत आह **हृदीति**— हृदि हृच्चक्रे[**विनिहितं**] विशिष्टं निहितं स्वातन्त्र्येणोल्लसितं रूपं ज्योतिरादिरूपमाकारो यस्य एवंस्वरूपोऽसाविति। एतत्प्रतिपादनञ्च न विफलमित्याह **सिद्धिद** इति—परस्पर-भुक्तिमुक्तिरूपाः सिद्धीर्ददातीति यः। तत् किं सर्वेषा, नेत्याह **तद्विदामिति**। तं विदन्ति यथावज्जानते तथाभूतप्रकाशात्मना प्रकाशन्ते ये तेषाम्। न (136a) चासावागमोपपत्ति-भ्यामेव सिद्धो यावत् स्वप्रकाशः प्रत्यभिज्ञातोऽपीत्याह—**अविचलितेति**। 'संप्राप्तो घटमानश्च सिद्धः सिद्धतमस्तथे'ति चत्वारो योगिनः। तत्र प्राप्तोपदेशस्तु पारम्पर्यक्रमेण यः। प्राप्तयोग. स विज्ञेयस्त्रिविधोऽपि मनीषिभिः॥ चेतसो घटमानत्वं चालितस्य पुनः पुनः। यः करोति तमिच्छन्ति घटमानं मनीषिणः॥ तदेव चेतसा नान्यद्द्वितीयमवलम्बते। सिद्ध-योगः स विज्ञेयो योगी योगफलार्थिभिः॥ यः पुनर्यत्र तत्रैव संस्थितोऽपि यथा तथा। भुञ्जानस्तत्फलं तेन हीयते न कथञ्चन॥ सुसिद्धः स तु विज्ञेयः सदा शिवसमः प्रिये।' इति प्रतिपादिताः (रु. मं. ५०)। तदिह साधकपदेन सिद्धो विवक्षित', **अविचलितेति** विशेषणोपादानसामर्थ्यात्। तेन सिद्धः सिद्धतमपदं साधयितुमुद्यतः। **दृश्यमानः** साक्षात्क्रियमाण.। यद्यपि प्रमात्रेकवपुषः स्वप्रकाशस्यास्य दर्शनक्रियाकर्मभावो न सम्भवति तथापि दृश्यमानघटादिपदार्थवदपरोक्षताप्रतिपादनार्थमेवोपचारेणोक्तम्। तदेवं परतत्त्व-वाधनावासितानां मानससमुल्लसितपरावरविभागाना भगवत्प्रणतिं विधाय 'तत्त्वमस्य'-

---

विनोदाय। एषां पारिभाषिकपदानां विवरणं तान्त्रिकनिबन्धग्रन्थेषु प्रपञ्च-सारादिषु लभ्यते। अग्रे श्रीधरकृतोद्धारे रुचकव्याख्याने योगिनां यच्चतुर्विधत्व-प्रदर्शनं न तत् पातञ्जलादिसम्प्रदायमतसंवादि।

न्यूनपदं क्वचिद्गुणः। यथा—

> गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
> सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
> मा मा मानद! माऽति मामलमिति क्षामाक्षरोल्लापिनी
> सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्॥३०६॥
>
> (अ. श.)

क्वचिन्न गुणो न दोषः। यथा—

> तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
> स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।

स्याद्युद्देशदर्शितपरजीवाभेदा समाधिप्रभावमात्मनि चिन्तुरिव (136b) कपालकुण्डला स्वयमेव परामृष्टवतीति न प्रतीतिविलम्बः, प्रकृतानुगुणत्वाच्च गुण इति। फुल्लुकुरमित्यादि-पुष्पोत्करं कलमकूरसमं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते। ये गालितस्य महिषो-दध्नः सदृक्षास्ते किंच मुग्धविचकिलप्रसूनपुञ्जाः॥ कूरं भक्तं, गालितस्य निस्तोयीकृतस्य, विचकिलप्रसूनानि सटनेवालीति प्रसिद्धानि पुष्पाणि। विकृताकृतिवाग्वेषादिभिर्हास्यकारी विदूषकः प्रसिद्ध इति कलमादयो ग्राम्या अपि विदूषकोक्तौ गुणा इति शेषः। तस्मिन् वक्तरि ग्राम्योक्तिरेव व्यञ्जिका[८१]। नेयार्थस्तु यदा कुतश्चित् पदशक्तिविशेषादर्थप्रतीतिं शीघ्रमेव करोति तदा न स्याद्दुष्टत्वमित्याशक्य इति यत्तदोक्तं तेनैव (का. अ. सू. वृ. २।१।१३) प्रतिपादितं[८२] यथा 'कार्शीगुणख्यानमनिन्दितायाः' (कु. स. १।३७) इत्यादि।

अथ वाक्यमात्राश्रितेषु दोषेषु पूर्ववत् प्रतिकूलवर्णादीनामदुष्टत्वं न सम्भवतीति न्यूनाधिक-कथितपदानां गुणत्वं स्थापयति गाढेत्यादि। प्रगल्भा चेयं नायिका, यदाहुः—यौवनान्धा स्मरोन्मत्ता प्रगल्भा दयिताङ्कके। विलीयमानेवानन्दाद्रतारम्भेऽप्यचेतना॥ (द. रू. २।१८) इति। तदिह रतोपक्रम एव चैतन्यापगमात् कथं कथमपि कामस्मेरतया उत्तर-मात्रमपि निर्यद् इति मा मा अति पीड्येत्यादियोग्यक्रियापदस्यानिष्पत्तिर्न वाक्यदोषः, प्रत्युत दुर्वारत्वं व्यभिचारिभावमतितरां पुष्णातीति (137a) गुणः। क्वचिन्न्यूनपदस्यौ-दास्यं यथा तिष्ठेदित्यादि-। इयं हि पुरूरवसो वितर्कोक्तिः। विप्रलम्भशृङ्गारेऽपि तत्प्रयुक्त

८१ 'ग्राम्योक्तिरेव रञ्जिके'ति 'क' पुस्तके पाठः। स्वस्मिन् च पदन्नेवालीति पाठान्तरम्।
८२ नेयार्थस्त्वित्यादिः प्रतिपादितं यथेत्यन्तः सन्दर्भः 'ख' पुस्तके नास्ति। तेन वामनेनेति यावत्।

तां हर्तुं विबुधद्विपोऽपि न च मे शक्ताः पुरोवर्तिनी
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥३०७॥

( वि. उ. ४।६ )

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यत' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणाद्गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

अधिकपदं क्वचिद् गुणः । यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत् साधवो न न विदन्ति विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न
पारयन्ति ॥३०८॥ ( भ. श्रा. ३११६ ह )

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा—

यद् यद् जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥३०९॥

( रु का. अ. ६।३० )

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं गुणो लाटानुप्रासेऽर्थान्तरसंक्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणम्—

सितकरकररुचिरविभा विभाकराकार ! धरणिधर ! कीर्तिः ।
पौरुषकमला कमला सैव तवैवास्ति नान्यस्य ।३१०॥

---

एवास्वादातिशय इति वितर्कोऽत्र व्यभिचारिस्थितिरत्र प्रधानम् । उत्तरा प्रतिपत्तिरिति—दीर्घं न सा कुप्यतीत्यनेन सा प्रतिपत्तिः । तां हर्तुमित्यादि सक्रोधं, सा चात्यन्तमित्यादि सशोकम् । यद्वञ्चनेत्यादि—अत्र न न विदन्तीत्यनेनायोगव्यवच्छेदः । वामनोऽप्याह ( का. अ. सू. ५।१।१६ वृ ) सम्भाव्यस्य निषेधस्य निवर्तने द्वौ प्रतिषेधौ प्रयोक्तव्याविति । तदिह द्वितीयेन विदन्तीत्यनेनाभिप्रायेण साधव एव ह्येतत् सुतरां विदन्तीत्यन्ययोगव्यवच्छेदो यथा पार्थ एव धनुर्धर इति । अधिकपदस्य गुणत्वे दृष्टान्तमाह यथा वेति । यद् यदेति वीप्सया हर्षो गम्यते, तव तवास्मीति भयं, चित्रं चित्रमिति विस्मयः, हा हेति दुःखम् । तदुक्तम्—विस्मये च विषादे च कोपे दैन्येऽवधारणे । प्रसादने च हर्षे च वाक्यमेकं द्विरुच्यते ॥ इति । सितेत्यादि—

ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥२११॥
( वि. बा. लो. ; ध्व. आ. ६२ पृः )

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥२१२॥

एतत्प्रकर्षमपि क्वचिद्गुणः । यथोदाहृते 'प्रागप्राप्ते'त्यादौ (२१३ श्लोः) । समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः । यत्र न विशेषणमात्रप्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते यथा 'प्रागप्राप्ते'त्यादौ ।

अपदस्थसमासं क्वचिद्गुणः । यथोदाहृते 'रक्ताशोके'त्यादौ (२१६ श्लोः) । गर्भितं तथैव । यथा—

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुमम्मि पुणो पत्तिहि तत्ति ण पंमुसिमि ॥२१३॥
( वि. बा. लो. ; ध्व. आ. लो. १५२ पृः )

---

पीडपमेव कमलं यस्याः सा । अत्र कर-विभा-कमलपदानां कथितानामपि लाटानुप्राससाधकत्वाद्गुणत्वम्[83] । अर्थान्तरसंक्रमितवाच्ये ध्वनौ यथा ताला जाअंतीति—ताला तदा । जाला यदा । तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते । अर्थान्तरन्यासमाह—रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ 'अत्र द्वितीयकमलशब्दो लक्ष्मी-( 137b )पात्रत्वादि[84]धर्मान्तरशतचित्रतापरिणतं संज्ञिविशेषञ्च प्रत्याययतीति गुणः' ( ध्व. आ. लो. २११ पृः ) । विहितस्यानुवाद्यत्वे यथा जितेन्द्रियत्वमित्यादौ विनयादिपदानां विहितानां पुनरनुवाद इति । 'प्रागप्राप्ते'त्यादौ विकटवर्णत्वदीर्घसमासौचित्ये तथा कृते । चतुर्थे पादे तु क्रोधो न विवक्षित इत्यत्र बन्धशैथिल्यं गुण एव । अत्रैव 'भवत्वशिथिलस्तत्कण्ठपीठातिथि'रित्येतावतैव, वाक्यस्य समाप्तत्वात् । यद्यपि येनानेनेत्यादि पुनरुपात्तं तथाप्यस्य न समाप्तपुनरात्तत्वनिबन्धनं दुष्टत्वम् । न ह्यस्य पूर्वोक्तार्थविशेषणमात्रफलता, न वाऽनेन कश्चिद्विशेष आधीयते—अतो न दोषो न वा गुणः । अस्थानस्थसमासो

---

83 अत्र पीडपमेव कमलं यस्या इति कमलाविशेषणत्वं वदन् सान्धिविग्रहिको भिन्नार्थतया लाटानुप्रासभङ्गप्रसङ्गेन भावणीय इति चण्डीदासः सोत्प्रासमाह । तच्च युक्तियुक्तमेव । वस्तुतस्तु पीडपकमलापदं पीडपलक्ष्मीः पुष्पाकारसम्पदिति व्याख्येयम् ।

84 'पितृत्वादी'ति 'क' पुस्तके पाठः ।

अत्र 'प्रतीहि' इति मध्ये दृढप्रत्ययोत्पादनाय। एवमन्यदपि लक्ष्यात् प्रेक्ष्यम्।

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥६०॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥६१॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः।
अनङ्गस्याभिधानं च रसदोषाः स्युरीदृशाः ॥६२॥

---

यथा छुमीत्यादि—भवाम्यपहस्तितरेख निरङ्कुशमथ विनेकरहितमपि। स्वप्नेऽपि त्वयि पुनः प्रतीहि तत्पद[85] (?) न प्रस्मरामि॥ कामदेवस्य सहचरसमागमे निजस्वभावाभिव्यञ्जिका यौवनस्थेयमुक्तिर्निश्चयगर्भतया प्रकृतरसप्रकर्षपर्यवसायिनीति गुणत्वम्। कामदेवस्य मधुयौवन-मलयानिलादिभि सहचरे सह समागमे न त्यजामीति प्रीतिः पर्यवसिता।

अथ साक्षादसभङ्गहेतून् दोषान् दर्शयति व्यभिचारीति[86]। यथाक्रममुदाहरति

---

85 एव श्रीधरकृता छाया यस्या मूलं न सुकरस्थापनम्। चण्डीदासादयोऽत्र 'तन्ति मिति पठित्वा तान्ति चिन्तामिति विशदयन्ति।

86 प्रबन्धादोनां व्यञ्जकत्वनिबन्धनं यथोचित प्रकाशन ध्वन्यालोके सुष्ठु सविस्तरञ्च विहितमिति तदेवोपजीव्य मूलकारिकायां प्रवर्तनम्। औचित्यविघाते दोष स्यात्। विभावानुभावव्यभिचारिणामयथायथ रसेषु यो विनियोगस्तन्मात्र-लक्षणमेवान्तरङ्गमनौचित्यम्। तस्य एव मुख्यतो दोषतेति प्रागेवादर्शि। दोषाश्च केचिदाहत्यैवास्वादापकर्षका केचिदङ्गापकर्षद्वारेति द्विविधा। तत्राद्या रस-सन्निकृष्टा रसदोषा इत्युच्यन्ते। तेषाञ्च स्वजात्यपेक्षया गाढत्वात्तदानन्तरो पादेयमिति पश्चात्तदुपन्यास इति दीपिकाकृत। यथा पदादिदोषविवेचने वामन रुद्रटकृतव्यवस्थानामागमन्ततो महिमभट्टेनानुमानयुक्त्यादिपरिपोषितानां तथा रसदोषविवेचने रुद्रटानुमतानां केषाञ्चित् सिद्धान्तानामानन्दवर्धनेन सामग्रयत कृतनिर्धारणानामनुसृतिर्मम्मटाचार्येण विहिता। अत्रार्थे उपोद्घाते तथा C चिह्निते परिशिष्टे मन्तव्यमवलोकनीयम्।

स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुताऽवलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥३१४॥

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि। मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे' इत्यादि तु युक्तम्।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम्।
क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥३१५॥

आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिरामरूपाम्।
पश्यैष बाल्यमतिवृत्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥३१६॥

स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रवीराणां परस्परम्।
ठनत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥३१७॥

अत्रोत्साहस्य।

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोऽंशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥३१८॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना।

---

सव्रीडेत्यादि। व्यभिचारिणोऽपि हि स्वैः स्वैरनुभावैः प्रकाश्यमानास्तन्मयीभावयोग्याः, ततश्च रसचर्वणापर्यवसायिनी तच्चर्वणैव नास्तीति रसभङ्गः साक्षादेवाल। एतत् पाठान्तरेण प्रकाशयति व्यानम्रेत्यादि। रसस्य च (*138a*) स्वशब्देन शृङ्गारादिशब्देन वा प्रतीतिर्न भवतीति प्राक् प्रतिपादितमेव (१४१-४२ पृः)। तामित्यादि प्रीतादिवाक्यमिदम्[87]। आलोक्येत्यादि—तरङ्गम् (तरङ्गितं) गविलासगतागतम्। सम्प्रहारः संग्रामः। तस्येति रथप्रविष्टस्य। अत्रोत्साहस्य शब्दवाच्यतेति सम्बन्धः। कर्पूरेत्यादि—अभून्नयनावनौ सा दृष्टि-

87 एवमुभयोरेव पुस्तकयोः पाठः।

परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।
इति वत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥३१९॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

प्रसादे वर्तस्व प्रकटय मुदं सन्त्यज रुषं
प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः ॥३२०॥
(ध्व. आ. लो. १६२ पृ. ; चन्द्रकस्य)

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥३२१॥ (गा. श. (?) वे १८७)

---

पथमवतीर्णेत्यर्थः । अत्रानुभावस्य कष्टकल्पनायुक्तिर्ग्रन्थकृतैव व्याख्याता । **परिहरती**त्यादि—यथा सापेक्षभावे विप्रलम्भे तथा निरपेक्षभावे करुणेऽप्येतेऽनुभावाः सम्भवन्ति । अत्र प्रकृतरसापेक्षया प्रतिकूलो विरुद्धो यो रसस्तत्सम्बन्धिनां विभावादीनां ग्रहः स्वीकारो रसभङ्गहेतुर्यथा **प्रसाद** इत्यादि । प्रणयकलहकुपितायां प्रियायां प्रसादार्थमनुनयनमुपक्रान्तं, तत्प्रतिकूलो **न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिण** इत्यर्थान्तरन्यासेन निर्वेदप्रकाशकोऽनित्यताप्रकाशनरूपः शान्तरसस्य विभावः प्रकाशित इति प्रकृतरसभङ्गः, मनागपि निर्वेदानुवेधे सति रतेविच्छेदात् । ज्ञातविशेषतत्त्वे[88] हि जीवितसर्वस्वाभिमानं कथं भजते ? नहि ज्ञातशुक्तिको रजते तदुपादेयधियं कुरुते । अतः सङ्गतिमात्रायामेव प्रणयखण्डितायां प्रियायां नायकस्य क्रोधावेशवशस्य रौद्रानुभाववर्णनं विरुद्धं द्रष्टव्यम् । **णिहुअ** इत्यादि—निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये । सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥ वनग(138b)मनेच्छा च प्रत्युत गुणायैव । अयमपरो रसभङ्गहेतुर्यद्दीप्तस्य स्वसामग्रीलब्धपरिपोषस्य रसस्य पौनःपुन्येन प्रकाशनम् (ध्व. आ. लो. ३।१९) । तथा सति रसस्य परिमर्दनोत्था ग्लानिः स्यादेव । कुमारसम्भवे हि कालिदासः परिपोषं गतस्यापि करुणस्य—अथ सा पुनरेव विह्वला वसुधाऽऽलिङ्गनधूसरस्तनी । विललाप विकीर्ण-

---

88 जातिविशेषतत्त्व इति 'ग' पुस्तके पाठः ।

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः[89]।

दीप्तिः पुनः पुनर्यथा कुमारसम्भवे रतिविलापे। अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्। अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराऽधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामी'ति ( म. वी. च २अ ) ॥३२१॥ राघवस्योक्तौ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा हयग्रीववधे हयग्रीवस्य। अङ्गिनोऽननुसन्धानं यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

---

मूर्धजा समदु-खामिव कुर्वती स्थलीम्॥ ( कु. स. ४।१ ) इत्यादिना समारब्धेषु प्रलापेषु पौन पुन्येन प्रकाशमकार्षीत। अथयथापरो रसभङ्गहेतुर्यदकाण्ड एव रसस्य प्रकाशनमकाण्ड एव रसस्य च्छेद इति। यद्यपि 'समीहा रतिभोगार्था विलासः स तु कीर्तित' ( ना. शा. १९।७६ ) इत्येवंलक्षणो विलासः प्रतिमुखसन्धेरङ्गत्वेनोक्तस्तथापि वेणीसंहारे द्वितीयेऽङ्के प्रतिमुखसन्ध्यङ्गस्य भरतमतानुसरणमात्रेच्छया घटनं प्रकृतस्य वीररसस्याननुगुणमित्यनुचितं यतो भीष्मादिषु महाभटेष्वसह्यधनुर्धरेष्वपि नष्टेषु दुर्योधनस्याकस्मादेव भानुमत्या सह ग्राम्यसम्भोगं प्रत्यभिलाषादतीव वीररसविरुद्धता प्रकाश्यते। तत्रापि च सखीषु स्वप्नवर्णनाया नकुलेन मम स्तनपृष्ठे नखक्षतं दत्तमिति भानुमतीवचनाकर्णनात् पाण्डुपुत्रेण नकुलेन सहानुभूतसम्भोगेयमित्यप्यविनयाशङ्कायामतितरामनौचित्यम्। मुनिनाऽपि सन्ध्यङ्गानां ( 139a ) रसाङ्गभूतमितिवृत्तप्रशस्त्योत्पादनमेव प्रयोजनमुक्तं न तु पूर्वरङ्गादिवदङ्गादिसम्पादनम्। यदाह ( ना. शा. १९।५१, ५२, ध्व. आ. लो. ३।१४ पृ )

इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः। रागप्राप्तिः प्रयोगस्य गुह्यानाञ्च निगूहनम्॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्। अङ्गानां षड्विधं ह्येतदुक्तं शास्त्रे प्रयोजनम्॥

इति। **वीरचरित** इति—तत्र राघवभार्गवयोः संग्रामाय परस्परावस्थायम्भो "विसृज्य दक्षता वीर" इति वीररसे प्रकर्षधाराऽधिरूढे सति तदुचितमवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरायाकस्मिकी रामोक्तिः। तदेतदाह **धाराऽधिरूढे वीररस** इति। अत्र खड्गधारामारूढ इति केचिद्व्याचक्षते। अथयथापरो रसभङ्गहेतुः प्रस्तुतरसाङ्गभूतस्य

---

89 अत्र पूर्वार्धे 'मिव' इति भग्नमोनिभङ्गेऽयवचनरोधकस्यासकृत्प्रयोगादनवीकृतता शब्दगता दोष एव।

मुचितं वा तावदेवोपनिबद्धव्यम्। अधिकं तु वध्यमानमसत्यप्रतिभासेन नायकवद्वर्तितव्यं न प्रतिनायकवदित्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु तूभयथाऽपि। ( ध्व. आ. वृ. ३।१०-१४)

एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामन्यथावर्णनं विपर्ययः। 'तत्रभवन्' 'भगवन्नि'त्युत्तमेन नाधमेन मुनिप्रभृतौ न राजादौ. 'भट्टारके'ति 'परमेश्वरे'ति च राजादौ. न मुनिप्रभृतौ. प्रकृतिविपर्ययापत्तेर्वाच्यम्। एवं देशकालवयोजात्यादीनां वेशव्यवहारादिसमुचितमेवोपनिबद्धव्यम् ( रु. का. अ. ६।१८-२० तुः )।

---

विषयोऽप्युत्तमे प्रयोक्तव्य'। क्रोधस्यानुभावशून्यस्य सद्यस्तथाभूतातिदारुणफलदातृत्वम्। स्वर्गपातालगमनसप्तार्णवलङ्घनादिव्यापारा दिव्यमानोचिताः केवलमानुषमात्रक उपनिबध्यमाना वैरस्यमावहन्ति। अवदानं सातिशयं कर्म। यावता विनेयाप्रतीतिखण्डना[92] न जायते तावद्वर्णनीयं न पुनरधिकम्, इतरथा हि केवलमानुषस्य सप्तार्णवलङ्घनमसत्यतया सम्भाव्यमानमनृतमिति हृदये स्फुरदुपदेश्यचतुर्वर्गोपायस्याप्यलीकतां बुद्धौ सन्निवेशयेत्। रामादेस्तु तथाभूतमपि चरितं पूर्वप्रसिद्धिपरम्परोचितसम्प्रत्ययोपारूढं नासत्यतया चकास्ति। अतएव यदा तस्यापि प्रभावान्तरमुपवर्ण्यते तदा तादृशमेव, यदि वा दिव्यादिव्यत्वादेव तदुचितं दिव्यादिव्येषु देवाङ्गेषु मनुष्येषु सातवाहनार्जुनादिषु तेषां नागलोकगमनादिकमुचितमेव। अतएव भरते (ना. शा. १८।१०) 'प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकञ्चैव। राजर्षिवंशचरितं तथैव दिव्याश्रयोपेतम्॥' इति मुनिना प्रख्यात(१४।२)वस्तुविषयत्वं प्रख्यातोदात्तनायकत्वञ्च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम्। उत्पाद्यवस्तुवर्णने हि कवेः प्रमादोऽपि स्यात्।

एवमुक्तस्येति। सर्वत्रौचित्यमेव रसजीवितम्। तत्रामन्त्रयामन्त्रकौचित्येनामन्त्रणमाह **तत्रभवन्नि**त्यादि। वक्ता ह्युत्तममध्यमाधमभेदात्त्रिधा। तत्रोत्तमप्रकृतिरेव **तत्रभवन् भगवन्नि**ति पदमुदाहर्तुमर्हति न त्वधमप्रकृतिः। उत्तमेनाप्येतत् सर्वोपकारकरणादित्तमेऽपि राजादौ न प्रयोक्तव्यं किन्तु मुनिप्रभृतावेव। एवमुत्तमेन **भट्टारके**ति राजादौ **परमेश्वरे**ति मुनिप्रभृतौ सर्वथा न प्रयोक्तव्यौ। तदेतेषां यदि विपर्ययः क्रियते तदा पदमिदमनुचितं भवति। **एवमिति**—तदुक्तम् ( द. रू. अ. २।६२-६६ )—देशभाषाक्रियावेशलक्षणाः स्युः प्रवृत्तयः। पाठ्यन्तु संस्कृतं नृणामनीचानां कृतात्मनाम्॥ लिङ्गिनीना महादेव्या मन्त्रिजावेश्ययोः

---

92 'दो खण्डन' इति व्युत्पत्तिसूचकमन्वर्थं विवरणम्।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च वसन्तस्य वर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम्। 'ईदृशाः' (६२ का.) इति नायिकापादप्रहारादिना नायककोपादिवर्णनम्।

उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥ इति।

(ध्व. आ. वृ. ३।१४; १४५ पृः)

---

क्वचित्॥ अत्र क्वचिदिति देवीप्रभृतीनां सम्बन्धः। स्त्रीणान्तु प्राकृतं प्राहुः शौरसेन्यधमेऽपि च। पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा॥ यद्देश्यं नीचपात्रं स्यात्तद्देश्यं तस्य भाषितम्। कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रम इति। तथा सर्गबन्धादौ प्रबन्धौचित्यान्मध्यमादेरपि संस्कृतमेव पाठ्यम्। खण्डकथापरिकथाऽऽदौ तूत्तमादेरपि प्राकृतमेव, बृहत्कथादौ तु पैशाचमेव, वस्तु(?)न्धादाव(141b)पभ्रंश एवेत्यादि। एवं यस्य देशस्य यादृशो वेशः समाचारादिश्च प्रसिद्धियोग्यस्तादृश एव वर्णनीयविषयतयोपनिबद्धव्यः। विपर्यये त्वनौचित्यनिबन्धनं दुष्टत्वम्। तत्र देशवेशाचारानौचित्यं यथाऽऽदित्यप्रभृतीनां स्वादित्यादिगयेन परिग्रहः,[93] स्त्रीभोचादीनां लज्जाऽऽतङ्कादित्यागादिति। कालानौचित्यं यथा वसन्तोत्सवे मेघाद्युद्दीपनविभाववर्णनम्, आलम्बनविभावस्य तद्विरुद्धवेशादिश्च। वयोऽनौचित्यं यथा वार्धक्ये शृङ्गाराभिलापः। जात्यनौचित्यं यथा नायकं प्रति नायिकायाः समुद्दिष्टां भङ्गीमन्तरेण स्वयं सम्भोगाभिलापकीर्तनमित्यादि। अयमपरो रसभङ्गहेतुर्यत् प्रकृतरसापेक्षयाऽन्यस्य तदनङ्गभूतस्य वर्णनम्। न ह्यनुन्मत्तः प्रकृतं परित्यज्यान्यद्वर्णयति। कर्पूरमञ्जर्यां (१यव.) 'राजा। देवि दक्खिणाहिवणरिन्दणंदिणि वड्ढाविज्जसि वसंतारम्भेण' इत्यादिना वसन्तवर्णनं स्वयमारब्धमनादृत्य बन्दिगिरादृतस्य वसन्तवर्णनस्य 'देवि एक्को अहं वड्ढाविओ तुज्झ, एक्का तुमं वि वड्ढाविआ मज्झ। किं उण दुवे वि अम्हे वड्ढाविदा' इत्यादिनाऽभिधानेन प्रशंसनम्। **नायिकेति**—ईर्ष्यारोषादिना खण्डितया क्रियमाणश्चरणप्रहारो रतेः प्रतिकूलतया प्रतिपादितः। तत्रेर्ष्याऽऽदिनिमित्तभूते कोपवर्णने अतितरामनौचित्यम्।

---

93 तत्रेत्यादि कालानौचित्यमित्यन्तं 'क' पुस्तके नास्ति। देशवेशाचारानौचित्यं यथा दिव्यप्रकृतीनां मां स्वादित्याविमचेपादिपरिग्रह इत्यस्फुटः पाठः 'ख' पुस्तके।

इदानीं क्वचिद्दोषा एत इत्युच्यन्ते—

न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्।

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥३२४॥ (रत्ना १।२)

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत्। अतएव 'दूरादुत्सुक'मित्यादौ (२६ श्लोः) व्रीडाऽद्यनुभावानां वलितत्वादीनामेवौत्सुक्यानुभावस्य सहसा प्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावा'दुत्सुक'मिति कृतम्।

सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥६३॥

बाध्यत्वेनोक्तिः न परमदोषः, यावत् प्रकृतरसपरिपोषकृत्।

यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादौ (५३ श्लो)।

---

तदित्थमन्यत्राप्यनौचित्यमुत्प्रेक्ष्य दुष्टत्वात् प्रयत्नतो रसध्वनि कविना परिहर्तव्यमिति तात्पर्यार्थः। अत्रैवान्वयव्यतिरेकाभ्यां प्रा(१4२०)माणिकसम्मतिं दर्शयति उक्तं हीति। प्रसिद्धौचित्येति प्रसिद्धप्रकृत्याद्यौचित्यबन्धे। उपनिषद्रहस्यं प्रकृष्टमिति।

एवं रसभङ्गकारणमुक्त्वाऽधुना तदपवादमाह न दोष इति। यथौत्सुक्येनेत्यादि। सहभुवा सहजया। [अनुभावः] क्रिया न तथा प्रतीतिकृद् यथा स्वशब्देनोपात्त इत्यर्थः। अतएवेति—यत- क्वचिद्विषये विभावानुभावाभिव्यङ्ग्यस्य व्यभिचारिणो न तथा झटित्यभिमतार्थप्रतिपत्तिस्ततस्तथाविधे विषये स्वशब्दोपादानमप्याद्रियन्ते महाकवयो यथा 'दूरादुत्सुक'मित्यादौ। अत्र यथा विवलनादिभिरनुभावैर्झटिति प्रेमादिप्रतिपत्तिस्तथा यद्यौत्सुक्याद्यनुभावैः सहसाप्रसरणादिभिरनुभावकैः (रनुरागकैः) न निबध्यते तदा तादृशी प्रतिपत्तिर्न स्यादिति स्वशब्देनौत्सुक्यमुपात्तम्।

सञ्चार्यादेरिति—विरुद्धस्य प्रकृतरसापेक्षया विरुद्धरसाङ्गस्य बाध्यत्वेन बाध्यत्वाभिप्रायेणोक्तिर्गुणावहेति। बाध्यत्वं हि न यथाकथञ्चित् कल्पनामात्रेण किन्तु शङ्कयाऽभिभवे सति। तथाच सति तस्योक्तिर्न केवलं निर्दोषतां भजते यावत् प्रकृतरसपरिपोषाय जायते यथा क्वाकार्यमित्यादि। अत्र पौरव-

अत्र वितर्कादिपूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥३२५॥ ( ध्व. आ. १६६पृः )

इत्यादौ साधारणत्वं पाण्डुत्वादीनामिति न विरुद्धत्वम्।

सत्यं मनोरमा रामा सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनाऽपाङ्गभङ्गलोलं हि जीवितम् ॥३२६॥
( म. भा. ?; ध्व. आ. पृ. ३।३० ).

अत्राद्यमर्धं वाध्यत्वेनैवोक्तम्। जीविताद्प्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति। न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गाप्रतीतेः। न च विनेयोन्मुखीकरणमत्र परिहारः, शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात्। नापि काव्यशोभाकरणं रसान्तरादनुप्रासमात्राच्च[94] तथाभावात्।

---

लक्षणालम्बनविभावबलाल्लब्धप्रतिष्ठे शृङ्गारे मूलभूतेऽभिलाषे स एव काकार्यमित्यादिना निष्कृष्टसंसारपरम्परामूलभूतोऽकार्यभयरूपतत्त्व-( 142b ) ज्ञानलक्षणः शान्तविभावत्वाक्रमः स्पृष्टो **भूयो**ऽपीत्यादिना प्राप्त्युपायानुसन्धानलक्षणचिन्तनाख्यकामावस्थाप्रकटनाद्बाधितः। एवं **दोषाणा**मित्यादिना सर्वशास्त्रार्थज्ञानपरिणामलक्षणशान्तविभावप्रकाशनमलन्ताभिलापप्रकर्षादन्यकार्यप्रद्वेषलक्षणानुस्मृतिसंज्ञतृतीयकामावस्थां संस्पृश्य **अहो कोपेऽपी**त्यादिना गुणसंकीर्तनाभिधचतुर्थकामावस्थाप्रकटनाद्बाधितम्। **किं वक्ष्यन्ती**त्यादिना तपस्विसहवासलक्षणशान्तविभावनिरूपणं **स्वप्नेऽपी**त्यादिना शङ्कालक्षणपञ्चमकामावस्थाकीर्तनेन बाधितम्। **चेत** इत्यादिना शान्तव्यभिचारिधृतिपरिग्रहः **कः खल्वि**त्यादिनौत्सुक्यातिशयद्योतना**चिन्तायामेवे**ति तु काव्यस्थादुद्वेगस्थानमाश्रित इत्युद्वेगाख्यपञ्चमकामावस्थाकथनेन बाधित इति वितर्कादयो दोषत्वेनानौचित्यावलम्बिनः, प्रत्युत सुतरां रसपरिपोषकाः। अत्र विरुद्धरसाङ्गानामुक्तेरविरुद्धपरतोक्तं प्रकारान्तरमङ्गीकुर्वाणः स्वसिद्धं दर्शयति **पाण्डु क्षाम**मित्यादाविति। **क्षेत्रियः** परत्रैव चिकित्स्ये देहान्तरे चिकित्स्य इत्यर्थः। अत्र करुणरसोचितस्य व्याधेः शृङ्गाराङ्गत्वेन समारोप इत्यारोपबलादङ्गभावप्राप्तेरस्याविरुद्धत्वमिति ध्वनिकारः। अतएवाह ( ध्व. आ. ३।२० )—*विवक्षितरसे लब्ध(143a) प्रतिष्ठे तु विरोधिनाम्। बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥* अङ्गभावप्राप्तिश्चैषां स्वाभाविकी मताऽऽरोपकृता चेति। एतच्च वाच्यमित्याह **साधारणत्व**मिति करुण इव शृङ्गार-

---

94 'मात्राद्वे'ति प्रायिकः पाठः।

प्रकर्षे पाण्डुत्वादीनामप्यनुभावानां सम्भवात्। तथाच 'व्याध्युन्मादापस्मारजाड्यमरणादिभिर्विप्रलम्भोऽभिनेतव्य' इति साक्षान्मुनिना (ना. शा. ६; ३०६ पृः) व्याध्यादय एतदङ्गत्वेनोक्ताः। अत्र मरणस्यैवोक्तस्यैवोपन्यासो न न्याय्यः। तथा च रत्याश्रययोः स्त्रीपुरुषयोर्विच्छेदेन रत्यात्यन्तविच्छेदप्राप्तिरिति व्यभिचारिप्रस्तावे निर्णीतमेव (८६ पृः)। एवं 'कोपात् कोमले'त्यादौ 'बद्ध्वाऽन्यत' इति रौद्रानुभावयोर्बन्धनताडनयोरीर्ष्याविप्रलम्भे कविकौशलात् समारोप इति यदुक्तं तदपि न वाच्यं तत्रापि साधारण्यात्, येषान्तु 'व्याध्युन्मादापस्मारजाड्यमरणादिभिर्विप्रलम्भोऽभिनेतव्य' (ना.शा. ७अ) इति मुनिना साक्षादङ्गत्वेनोक्तानां स्वाभाविक एवाङ्गभावो यथा 'भ्रमिमरति'मित्यादौ विप्रलम्भे भ्रमिप्रभृतीनां तेषां निवेशनादविरोधः स्फुट एवेति ध्वनिकृतैवोक्तम् (ध्व.आ. ३।२० वृ)। अथ सत्यं **मनोरमा रामा** इत्यादावपि स्वमतेन विरोधं [95]परिहरति। **अत्रायमर्थ**मिति—इयं हि विरागिणः कस्यचिदुक्तिः। तत्र सर्वे एवामी कामादिविभूतयश्च जीवितमात्रोपयोगिन्यस्ततो यस्य कृते सर्वमेतदभ्यर्थ्यते (143b) तदेव चेच्चलं तत्राप्युपमानतयोपकान्तत्वादुपमेयाधिक्यगुणेन मत्ताङ्गनाऽपाङ्गेन सुतरां प्रकर्षारोहस्तदा किमेभिर्वराकैः कामादिभिर्विषयैरिति संसारानित्यताऽनिशयस्फुरत्वे ज्ञातलक्षणविभावर्णनात् प्रकाशितः शान्तरसः परां परिपोषपदवीमासादयतीत्याह **जीवितादपीति। न पुनरिति।** अत्र हेतुः, **तदङ्गेति**—तस्य शृङ्गारस्याङ्गानि विभावानुभावादयस्तेषामप्रतिपत्तेः, बाध्यत्वेनौपम्येन चोपात्तत्वात्। यत्तु ध्वनिकृताऽत्र मत्ताऽङ्गनाऽपाङ्गलक्षणस्य शृङ्गारानुभावस्य स्पर्शोन्मुखीकृताः सन्तो भोगिनो विनेयाः सदाऽभ्यस्तमत्ताङ्गनाऽपाङ्गाः सुगृहीतोपदेशास्तत्कालमेव जातवैराग्या भवन्ति तथा शृङ्गारस्य सकलजनमनोऽभिरामत्वात्तदङ्गसमावेशेन काव्यशोभाऽतिशयश्च सम्पद्यत इति

---

95 अत्र स्वमतेनेत्यन्वर्थं विशेषणम्। ध्वन्यालोककृतां मतमाक्षिप्यैतन्मतं स्थाप्यते। लोचनकृतामिङ्गितमनुसृत्य एवमभाणीति निपुणमाकलनीयम्। तथाच लोचने मत्ताङ्गनेति—अत्र हि शान्तविभावे सर्वस्यानित्यत्वे वक्ष्यमाणे न कस्यचिद्विभावस्य शृङ्गारभङ्गया निबन्धः कृतः किन्तु सत्यमिति परहृदयानुप्रवेशेनोक्तम्। न खल्वस्लोकवैराग्यकौतुके रुचिं प्रकटयामः, अपि तु यस्य कृते सर्वमभ्यर्थ्यते 'तदेवेदं चल'मित्यादि (ध्व. आ. लो. १२८ पृः, १२० पृ द्र.)। 'मा भूत विभूतिषु निःसारासु रागिणो गुणेषु वा प्रतिनिविष्टधियः। तथा चाग्रे पश्यत निःसारतां संसारस्ये'त्यादि ध्वन्यालोकग्रन्थचतुर्थोद्द्योतस्थः ग्रामदैरालोकनीयः। मम्मटमतं क्षेमेन्द्रमन्तव्यमनुवदतीवेति (औ. वि. च. १८ का. वृ.) च ध्येयम्।

निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्। यथा नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतम् अहो वादितम्' ।३२७। इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारोपनिबन्धः ( ना. आ. १।६ ग. )।

---

रा विभिन्नाश्रयः कार्यः। तस्य वीरस्याश्रयः कथानायकस्तद्विपक्षविषये हि निवेशितस्य विरोधिनो भयानकस्य परिपोषो गुणावह एव। विपक्षगतेन भयातिशयवर्णनेन वर्णनीय-गताभयपरिक्रमादिसम्पत् सुतरामुद्द्योतते यतः, एवं नायकस्य प्रभावातिशयवर्णने तद्-प्रतिपक्षाणां च करुणो रसः स सामाजिकानां तावन्न वैक्लव्यमादधाति, तत्राविश्रान्तेः। किन्तु वीरस्य योऽसौ क्रोधो व्यभिचारिता प्रतिपद्यते तत्फलरूपोऽसौ करुणरसः स्वकारणाभि-व्यञ्जकद्वारेण वीररसास्वादातिशय एव पर्यवस्यति। यथोक्तं मुनिना—'वीरस्यैव च यत् कर्म स ज्ञेयः करुणो रसः' ( ना. शा. ६।२४ )। यथा—कुरङ्गक कुचाघात-क्रीडासुखेन वियुज्यसे बकुलविटपिन् स्मर्तव्यं ते मुखासवसेचनम्। चरणघटनाशून्यो यास्यस्यशोक सशोकतामिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥' (का.मी. ७३पृ.; ध्व. आ. लो. ३।२० ) इति। ( 145a ) यः पुराऽऽश्रयैक्येन निमित्तेन निर्विरोधो नैरन्तर्येण तु निमित्तेन विरोधी स रसान्तरव्यवधानेन निवेशयितव्यः। **यथा नागानन्दे**—अत्र शान्तेऽङ्गिनि निर्वाहे कविना प्रथमेऽङ्के शान्त्यैकनिवासभूतस्य राज्यं विहाय वनं प्रस्थितस्य नायकस्य विभवप्रकर्षेऽपि झटिति शृङ्गारप्रशसनं विरुद्धमिति प्राकृतजनानिवारणार्थ-मगाधारसौन्दर्याश्रितापूर्वगीतवाद्यश्रवणविभावसन्नद्धैः '**अहो गीतमहो वादित**'मित्यु-भयरसाविरुद्धोऽद्भुतरसो निबद्धस्तथापि झगित्यभिलापप्रकाशने किंचिद्विरुद्धत्वमाशङ्कमानेन *'व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाऽमुने'त्यादिना (ना. आ. १।१४) नीरसप्रायेणापि* गीतवाद्यप्ररोचना निबद्धा। ततो 'भो वअस्स पेक्ख पेक्ख अच्चरिअं। ण केवलं वीणाए कण्णाणं सुहं उप्पादेदि जाव इमिणा वीणाविण्णाणागुरुवेण रूवेण अच्छीणं वि सुहं उप्पादेदि ज्जेव्व' इति विदूषकावतारितानन्तरं 'वयस्य केयमिति नावगच्छामि। एतत् पुनरहं जानामि—स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुःसहस्रं हरेर्नागी चेन रसातलं शशभृता शून्यं मुखेऽस्याः सति। जातिः सा सकलान्यजातिजयिनी विद्याधरी चेदियं स्यात् सिद्धा-न्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥ ( ना. आ. १।१५ ) इत्यभिलापः प्रकाशितो नायकस्य। पुनस्तत्रैव परां परिपोषधारामधिरूढे शृङ्गारे ( 145b ) तृतीयाङ्के मित्रावसु-प्रवेशेन व्यवधानाय यद्यपि वीररसो निबद्धस्तथापि वीररसस्य मित्रावसुसमाश्रयेणासम्बद्धेन

न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते। यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाऽऽश्लिष्टभुजान्तरालाः ॥३२८॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥३२९॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानान् ललनाऽङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥३३०॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः॥ (ध्व. आ. वृ. ३।२७ वृ.)।

---

कविना चतुर्थेऽङ्के 'उद्दूर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः। उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा प्रायः प्रेङ्खदसंख्यशंखधवला वेलेयमुद्गच्छति ॥ मित्रावसो! पश्य शरत्समयपाण्डुभिः पयोधरपटलैः प्रावृता- प्रालेयाचलशिखरं वहन्त्येते मलयसानवं' इति (ना. आ. ४।३) नायकाश्रयाद्भुतरसव्यवधानेन "कुमार! नैते मलयसानवः। नायकः—किमन्यत्। मित्रावसुः—नागानामस्थिसङ्घाताः खल्वेते। नायकः—कष्टं किंनिमित्तमेते सङ्घातमूलतो जाता" इत्यादिना (ध्व. आ. लो. ३।२६) पुनः प्रकाशितः शान्तो निर्वाहितः।

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥६५॥

यथा—अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ( ११७ श्लो॰ )

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ । अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति ।

दन्तैः क्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलकैर्भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥३३१॥
( स॰ आ॰ पृ॰ ३।४३ )

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य । यथा वाऽपरः शृङ्गारी तदवलोकनात् सस्पृहस्तद्वदेतादृशो मुनय इति साम्यविवक्षा ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।

---

अथ प्रकारान्तरेण विरोधं परिहरति **स्मर्यमाण** इत्यादि । **अयं स** इति रशनां मेखलां सम्भोगावसरे पूर्वं कर्षतीति **रशनोत्कर्षी** । अत्र करुणे वाक्यार्थीभूते प्रागवस्थाऽनुभूताः स्मर्यमाणा विलासाः शोकावेशमधिकतरमुपजनयन्तीति सम्भोगाङ्गानामेषां करुणं प्रत्यनुकूलत्वं परिपोषित्वादित्युक्तमेव ( १३६ पृ॰ )। **दन्तैरि**त्यादि—**मृगराजवधूः** सिंही । **रक्तम**नुरक्तं रुधिरञ्च । तदिह समाधिस्थस्य योगिनः परब्रह्मास्वादसमुद्भूतपुलकोद्गमे शरीरे सिंहीदत्तानि दन्तक्षतादीनि बीभत्सरसव्यञ्जकान्यपि कान्तादत्तदशनादिरूपशृङ्गारानुभवसाम्येनोक्तानि तस्य प्रकर्षातिशयं प्रकाशयन्ति । अतएव कथमेवं भूयास्मेति मुनिभिरवलोकितानीति रागिजनतुल्यता मुनीनामभिधीयमाना शृङ्गाराङ्गरूपस्य बीभत्सस्य पोषिकेति न विरोधः । (146b) **एतादृश इति** एतादृशा मुनय इत्यर्थः । एवं विरोधिनः प्रस्तुते रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गताभावप्राप्तौ सत्यामविरोधं दर्शयति—**क्रामन्त्य** इत्यादि । अत्र दर्भाङ्कुरक्षताङ्गुलिगलद्रक्तत्वं विवाहसमयोचितालक्तकद्वारेणोत्प्रेक्षितम् । विवाहसमये बाष्पाम्बुसम्भवो वधूनां बन्धुजनसमीपतो गमनात्, भर्तृकरावलम्बनं परिजनाभावात्, भयं साहजिकमपि । अत्र वर्णनीयराजगोचरतया वाक्यार्थीभूतस्य रतिरूपप्रेयोऽलङ्कारलक्षणस्य करुणशृङ्गारावङ्गभूतावित्यनयोर्न विरोधः, द्वयोरप्यन्यपरत्वेन

भीता भर्तुः करावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥२३२॥
(ध्व. आ. वृ.१६६ पृः)

अत्र चाटुके राजविषया रतिः प्रतीयते । तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ।

यथा— एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥२३३॥
(ध्व. आ. ३।४४)

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।

---

व्यवस्थानात् । "नन्वन्यपरत्वेऽपि संभावस्तावन्न निवर्तते, अनयोश्च विरोधः स्वाभाविकः, तत् कथमविरोध इति चेत्, न, स्यादेतद् यदि भावानां विरोधाविरोधौ स्वभावमात्रनिबन्धनौ स्याताम् । न चैवं भिन्नदेशीययोः शीतोष्णयोरप्यविरोधात्तथा स्यात् । सामग्रीविशेषपतितत्वेन विरोधाविरोधौ मन्तव्यौ । एवञ्च विधीयमानत्वेन प्राधान्यविवक्षायां विरुद्धसमावेशस्य दुष्टत्वम् । अतएवा'तिरात्रे षोडशिनं गृह्णाती'ति विरुद्धत्वविधिः विकल्पपर्यवसायीति वाक्यविदः" ( ध्व.आ.लो. १६७ पृः ) । यत्र त्वनूद्यमानत्वेनान्याङ्गतया गुणीभावस्तत्राविरोध एव । तत्र दृष्टान्तमाह एहीत्यादि (147a) । "क्रीडाऽङ्गत्वेन ह्यत्र विरुद्धानामर्थानामभिधानमिति राजनिकटस्थित[97]रविजनद्वयन्यायेन विरुद्धानामप्यन्यमुखप्रेक्षितापरतन्त्रीकृतानां श्रीतेन क्रमेण स्वार्थमात्रेय निश्राम्यताम्, का कथा परस्परदृपचिन्तायां येन विरोधः स्यादि' (ध्व. आ. लो. १६७ पृ.)ति भावः । 'एवञ्चाभिनेयार्थे काव्ये यदीदृशं वाक्यं भवेत्तदा यदि समस्ताभिनयः क्रियते तदा विरुद्धार्थविषयः कथं युगपदभिनयः कर्तुं शक्य इत्याशङ्काऽपि निरवकाशा 'एहि गच्छे'त्यादिन्यायेन तत्राप्यविरोधात्' ( ध्व. आ. लो. १६८ पृ. ) ।

---

97 स्थिताततायिद्वयन्यायेन ... ... स्वात्मपरामर्शेऽप्यविश्राम्यतामित्यादिर्मुद्रितलोचनग्रन्थपाठः ।

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥३३४॥ (अ.श.)

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं, तस्य तु शृङ्गारः। तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथवा, प्राग्यथा कामुक आचरति स्म तथाऽद्य शराग्निरिति शृङ्गारपरिपोषितेन करुणेन मुख्य एवार्थ उपोद्वल्यते। उक्तं हि

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥

( ध्व. आ. लो. १७१ पृ: ) इति।

प्राक्प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधो नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र स्थायिभाव उपलक्ष्यते।

इति काव्यप्रकाशे दोषप्रदर्शनो नाम सप्तम उल्लासः।

---

अत्रोदाहरणान्तरमाह क्षिप्त इत्यादि।· "क्षिप्तः कामिपक्षेऽनादृत इतरत्र धृतः। अवधूत इति न प्रतीच्छित. ( प्रतीप्सितः ) प्रत्यालिङ्गनेन, इतरत्र सर्वावधूननेन विशरारूकृतः। शाम्भुत्वमेकत्रेर्ष्ययाऽन्यत्र निष्प्रत्याशया ( ध्व. आ. लो. ७३ पृ. )। अत्रेर्ष्याविप्रलम्भयोर्न विधीयमानत्वं, वाक्यार्थीभूतत्रिपुररिपुप्रभावाङ्गत्वेनानूद्यमानत्वात्। तत्रापीर्ष्याविप्रलम्भापेक्षया करुणस्य तावन्निकटं प्राकरणिकत्वं परमेश्वरप्रभावं प्रति सोपयोगत्वात्। विप्रलम्भस्य तु कामीवेत्युत्प्रेक्षोपमाबलेनायातस्यैतरत्वादित्याह" अत्रेत्यादि। अत्रैव 'अयं स रशनोत्कर्षी'ति न्यायेनापि ( 147b ) न विरोध इत्याह अथवेति। तासां त्रिपुरयुवतीनां प्रणयरोषनिराकरणार्थं चाटुकारप्रवणः कामी हस्तग्रहणादिकं कृत्वाऽनाशाद्यमेव(?) मे निःशरणानां शाम्भवशराग्निस्तथा विलसासेति शाम्भववह्निचेष्टितावलोकनेन स्मर्यमाणप्राक्तनावस्थं तदीर्ष्याविप्रलम्भस्य करुणेऽङ्गभावः। ततस्तत्परिपुष्टेन करुणेन मुख्यो

---

98 अर्जुनवर्मकृतरसिकसञ्जीवन्यां "नूनमनयोः श्लोकयोः ( ज्याकृष्टिबद्धेति काव्यसूचनायां श्लोकेऽत्र च ) सङ्कीर्णरसोपनिबन्धोऽनेन ( कविना ) दर्शितः। अग्रे सर्वत्र शृङ्गाररसस्यैवोपनिबन्धनीयत्वात्। सङ्कीर्णरसोपनिबन्धस्तु निकषः कवीनां"-मित्यस्यैव मन्तव्यस्य प्रकारान्तरेण श्लाघनम्।

99 ···यातस्य गुणत्वादिति 'ख' पुस्तके पाठः।

वाक्यार्थीभूतो भगवत्प्रभावरूप उपोद्बलयते अवष्टभ्यते परां प्रकर्षपदवीं नीयत इत्यर्थः । अत्रैव प्रामाणिकसम्मतिं दर्शयति उक्तं हीति गुण इति गौण इत्यर्थः । अत्र 'साधुमेवोत्पल भि'रित्यन्तेन यः करुणस्य प्राधान्यादभिनयः कृतस्तथापि तत्र प्रतीयमानोऽप्यसौ विप्रलम्भः समनन्तराभिनीयमाने 'स ददतु दुरितं'मित्यादौ यः साटोपाभिनयसमर्थितो भगवत्प्रभावस्तदङ्गतायां पर्यवस्यतीत्यभिनयविषयोऽपि न कश्चिद्विरोध इति । अथ यत्र रसश्चमत्कारगोचरतां प्रतिपद्यमानस्तावत्येव न विश्राम्यति किन्तु चमत्कारान्तरमनुधावति तत्र रसस्याङ्गता । एवं विरोधो हि प्रकर्षापकर्षनिबन्धन इति केषाञ्चिन्मतम् । तन्नाह प्रागिति— चतुर्थोल्लासे सुसिद्धेन (७० पृ) प्रतिपादितस्य रसस्यैवेति विरोधादि-(१४८२)मत्त्वे सति रसत्वस्यैव व्याघातादिति भावः । यत्र रसो विरोधितामाभजमानो दृश्यते तत्र रसशब्देनोपचारात् स्थायिभाव उच्यत इति मन्तव्यम्[100] ।

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके सप्तम उल्लासः ।

---

100 "स्थायिभाव इति स्थायिनः सकाशादुद्भवतीति स्थायिभावः स्वतन्त्रविश्रामरहितः । पूर्वरसाद्भावमालाभ्य विलक्षणतया सहृदयहृदयसंवेद्यस्वरूपः कश्चित् सञ्चारिनाम्नाऽस्माभिः खण्डरसनाम्ना व्यवहार्यः कश्चन विशेषः" इति विशदीकरणं चण्डीदासकृतदीपिकायाम् । अस्य च सप्रश्रमनुद्धारस्तदनुजीविना दर्पणकृता स्वग्रन्थे 'यदाहु —अङ्गं बाध्योऽथ संसर्गात् यद्यङ्गी स्याद्रसान्तरे । नास्वाद्यते समग्रं यत् तत् खण्डरस इष्यते ॥' सन्दर्भोऽयं चण्डीदासकृतात् ध्वनिसिद्धान्तसङ्ग्रहाख्यप्रकरणादुद्धृत । प्रकरणञ्च तच्छ्रीवत्सलाञ्छनभट्टाचार्यादिभिः स्वग्रन्थेषु काव्यपरीक्षाप्रभृतिषु बहुमानितमास्ते । सञ्चारिरसा इत्थं मुनिनैव निर्दिष्टा । 'बहूनां समवेतानां रूपं यस्य भवेद्बहु । स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥' रसानां स्थायिसञ्चारिभेदचर्चा स्पष्टाऽभिनवगुप्तपादैर्लोचने तृतीयोद्द्योतटीकायाम् ।

## अथाष्टम उल्लासः

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह—

> ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
> उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥६६॥

आत्मन एव हि शौर्यादयो नाकारस्य यथा, तथा रसस्यैव माधुर्यादयो न वर्णानाम्। कचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनाद् 'आकार एवास्य शूरः' इत्यादेर्व्यवहारात्, अन्यत्राशूरेऽपि विततात्कृतित्वमात्रेण शूर इति, कापि शूरेऽपि मूर्तिलाघवमात्रेणाशूर इति, इत्यविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वन्मधुरादिरसव्यञ्जकसुकुमारादिवर्णानां माधुर्यादिव्यवहार-प्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादि-

---

वृत्तिकार उल्लासं सङ्गमयति एवमिति 'पूर्वोक्तप्रकारपरामर्शः। अधुना निर्दोषस्य काव्यशरीरस्य कमनीयकोपपत्तौ गुणोपादानमलङ्कारयोगश्चोपादेय इति क्रमप्राप्ता गुणालङ्काराः। तेषाञ्चाभेदमेव केचिन्मन्यन्ते भेदश्चान्ये च मन्यन्त इति तन्निराकुर्वाणो [1]वक्ष्यमाणक्रमेण गुणालङ्कारयोर्गुणोपादानं शरीय इति प्रथमं गुणानां स्वरूपमाह ये रसस्येति। अङ्गी काव्यस्यात्मा रसः, तस्योत्कर्षहेतवः सहोत्पत्तेर्यावदाश्रयमवस्थायिनो धर्मा गुणा इति। अत्र दृष्टान्तमाह शौर्यादय इवेति। यस्तु वर्णेष्वपि सुकुमारताऽऽदि-निबन्धनो माधुर्यादिव्यवहारः स भ्रममूल इति दृष्टान्तदार्ष्टान्तिकयोस्तद्वीजं दर्शयति कचित्त्वित्यादि—अविश्रान्तप्रतीतयोऽनिश्चितधियः। तेन मधुररसस्याभिव्यक्तिसमर्थता

---

[1] गुणानां प्राप्तावसरतया प्रथमोल्लारो भोजवाग्भटजयदेवादीनां निबन्धेष्विव तद्दोषाविति ग्रन्थाभिधेयसूचनपरेण क्रमेण गुणविवेचनमागतम्। तत्र च तल्लक्षणमादावेव विवेच्यं कथं तर्हि मूले वृत्तौ गुणालङ्कारयोर्भेदनिर्णयेऽयमाटोप इति चोद्यम्। तत्र प्राचीनैर्भामहदण्डिप्रभृतिभिर्गुणालङ्कारयोरभेदपक्ष एव स्वीकृतः। ततोऽर्वाचीनैर्वामनीयैस्तथा नवीनमतप्रतिष्ठापयितृभिरानन्दवर्धनादिगिरुभयोः स्वरूपगतवैलक्षण्यं यथास्वमतमाविष्कृतम्। गुणानां स्वरूपज्ञानेऽलङ्कारतस्तेषां व्यावृत्तिबोधः सुतरामेव जागर्ति, ततश्च भेदनिराकरणमाद्यं विधेयमिति भावः।

रसोपकरणानां तेषामसौकुमार्यादि च रसपर्यन्तविश्रान्तप्रतीतिबन्धना व्यवहरन्ति। अतएव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं तथोदाहरिष्यते।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातु चित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥६७॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिताः। क्वचित्तु सन्तमपि नोपकुर्वन्ति।

---

वर्णानां सौकुमार्यादिनिबन्धनं न तु वर्णधर्मा माधुर्यादय इति। अतएव शब्दधर्मैरनुप्रासादिभिः सह गुणानां साम्यं नास्तीति (148b) भामहोद्भटादयः[2]। अथालङ्कारस्वरूपमाह **उपकुर्वन्तीति**। **तमिति** रसविवक्षाशून्यस्यापि काव्याभासस्योपलम्भात्। **अङ्गद्वारेण** करचरणादिस्थानीयशब्दार्थद्वारेण। [ **जातुचित्** ] कदाचिदिति न तु गुणवत् साक्षान्नित्यं वेत्यर्थः। अत्र दृष्टान्तमाह **हारादिवदिति**। तथाचोक्तं [3]**भट्टतौतेन**—शौर्यौदार्यादिवत् पुंसां न हि हाराङ्गदादयः। अन्तरङ्गतरीभावं गन्तुं जातुचिदीशते ॥ तथा—समवेता गुणाश्चित्ते शरीरे लक्षणानि च। इच्छायत्ताः पृथक्सिद्धेरलङ्काराः शरीरगाः ॥ तेऽलङ्काराश्च

---

2 यदत्र टीकाकृता शब्दधर्मतया स्वीकृतानामनुप्रासादीनां गुणतो भेदस्वीकारपक्ष आपाततो भामहोद्भटादिसिद्धान्तत्वेनोपन्यस्तः, न तत् सम्यक् पूर्वापरस्वोक्तिभिः पराहतत्वा। काव्यालङ्कारे भामहेन शब्दाभिधेयालङ्कारेति षष्ठोल्लासोद्धृतात्तस्य वचनात्र कोऽपि शब्दालङ्काराणां स्वरूपगतभेदोऽर्थालङ्कारतोऽङ्गीकृतः। उद्भटेन काव्यालङ्कारसारसंग्रहे चैष पक्षः कुत्रापि नोक्तः। तत्कृतभामहविवरणेऽधुना दुष्प्रापे नास्य सिद्धान्तस्य प्रोत्साहनमिति सम्प्रदायप्रसिद्धिरेनानुमापयति। अभिधानाभिधेयव्यापारे वैदग्धी खल्वलङ्काराणां जीवातु रसानुगुणरचनारूपः सन्दर्भधर्मस्तु गुणस्यैतरव्यावर्तको धर्म इति विवेकः।

3 नव्यालङ्कारसरणिनिर्देशकस्याभिनवगुप्तोपाध्यायस्यैतदतिगदार्थं वचनं वामनीयमततो नव्यमतस्य वैलक्षण्यं प्रकटयदपि मतद्वयसमाधानकल्पे सेतुरचनं संविधत्ते। वामनमते गुणा नित्याः परं बहिरङ्गगता मार्गधर्माश्च। नवीनमते गुणा नित्या

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥३३५॥
(कु. म. १०२)

इत्यादौ वाचकमुखेन,

मनोरोगस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव महीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥३३६॥
(मा. मा. २११)

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

---

शब्दार्थमयाङ्गैकृत'श्रियः । गुणैर्जिता रसोज्जोविकाव्यस्योत्कर्षशंसिभिः (का. यौ.) ॥ इति ।
अपसारयेत्यादि—घनसारः कर्पूरः । मनोरोग[5] इत्यादि—अविरतं प्रमाथी क्षोभकारी मनोरोगो विसर्पति तीव्रं विषमिव यथा तीव्रं विषं त्वगादिधातुष्वलक्ष्यक्रमं विसर्पति तेनाकारेणाङ्गेषु विसर्पति तेन झटिति सर्वान्यत्रान्युद्वेगो व्याप्नोतीत्युक्तम् । ततः स एवोद्वेगः सन्तापरूपतामापाद्य विधुतः मन्धुक्षितोऽग्निरिव निर्धूमं ज्वलति ततः सन्ताप इतस्ततः प्रत्यङ्गं हिनस्ति पीडयति, ज्वर इव महीयान् तत इयती भूमिमारूढोऽयमाधिरशक्यसमाधानो भवद्भिस्त प्राणैभरमपहारयेत्यर्थः । अलङ्कारौ रसमुपकुरुत इति इत्यर्थं इति यथाक्रममनुप्रासोपमारूपौ । रसं विप्रलम्भम् ।

---

अन्तरङ्गधर्मोऽश्च । 'शरीरं शब्दार्थौ ध्वनिरमव आत्मा किल रस' इति कस्यापि नवीनतरालङ्कारिकवर्यस्य मन्तव्यमेतत् स्फुटयति । मूलग्रन्थे वामनपक्षाक्षेप एव तात्पर्यं, न तु तत्स्वीकृतगुणालङ्कारभेदसिद्धान्त इत्यवसेयम् । एतच्चाग्रे वृत्तौ स्फुटीभविष्यति । नाट्यशास्त्रे षोडशाध्याये येषां लक्षणानामुद्देशोऽभिनवभारत्यां, यदुपरि महानर्थपूर्णः सन्दर्भश्चन्द्रालोके च जयदेवनिबन्धे 'निर्दोषा लक्षणवती' त्यादिलक्षणे यश्च गुणालङ्कारव्यतिरिक्तः सूचितो लक्षितश्च तस्य विवेचनमन्यत्रास्माभिः प्रबन्धविशेषे कृतमिति जिज्ञासुभिस्तत्रैव द्रष्टव्यम् । (*The Doctrine Lakṣaṇa* in the *Poona Orientalist* vol xvi, 1948).

4 कृताश्रया इति 'ख' पुस्तके पाठः ।

5 मनोराग इति साम्प्रदायिकः पाठः ।

चित्ते ण चुट्टदि ण खुट्टदि सा गुणेसु सेज्जाइ लुट्टदि विट्टदि दिम्मुहेसु।
वोलम्मि वट्टदि पवट्टदि कव्वबन्धे फाणेण तुट्टदि चिरं तरुणी तरट्टी ॥३३७॥

इत्यादौ वाचकमेव,

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
मन्दत्सु भ्रमरेषु वीक्ष्य दयिताऽऽसन्नं पुरः सारसम्।
चक्राह्वेण वियोगिनां बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥३३८॥ (प्रवरसेनस्य ?)

इत्यादौ वाच्यमेव, न तु रसम्। अत्र च बिसलता जीवं रोद्धुं न क्षमेति प्रकृतानगुणोपमा।

एष एव च गुणालङ्कारप्रविभागः। एवञ्च-'समवायवृत्त्या शौर्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः। ओजःप्रभृतीनामनु-

---

रसविवक्षाशून्य वक्रवैचित्र्यमात्रशरणोऽलङ्कारो यथा **चित्त** इत्यादि—**चित्ते ण चुट्टति** निखाता भवति। **ण खुट्टति सा गुणेसु** न न्यूना भवति। (149a) **सेज्जाइ लुट्टति** शय्यायां विपरिवर्तते। **विट्टदि** विसर्पति विकशति दिङ्मुखेषु। **वोलम्मि वट्टदि** वचने वर्तते। **पवट्टदि** प्रवर्तते काव्यबन्धे ध्यानेन **तुट्टदि तरुणी तरट्टी** प्रगल्भा। अत्रानुप्रासेन वाचकमात्रमलङ्क्रियते न तु रसः, तस्याविवक्षितत्वात्।

क्वचित्तु सन्तमपि रसं नोपकुर्वन्ति **मित्रे क्वापीत्यादौ**[6]। **मित्रशब्दः** सूर्ये सुहृदि च। अत्रोपमया वाच्यमात्रमलङ्क्रियते, रसस्तु विप्रलम्भलक्षणः सम्भवन्नपि न प्रकृष्यते, तदननुगुणत्वात्। **एष एवेति**[7]—लौकिकगुणालङ्कारविभागन्यायेनास्मद्व्यवस्थापितरूप एवेति। तथा च ध्वनिकारः (ध्व. आ. २।७) "तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः। अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥" इति। **एवञ्चेति**—अस्मदुक्तगुणालङ्कारविभागव्यवस्थितौ सत्याम्। अपृथक्सिद्धानामाधाराधारभूतानामिह यः प्रत्ययहेतुः सम्बन्धः स समवायः, पृथक्सिद्धयोरप्राप्तयोः प्राप्तिरूपः संयुक्तप्रत्ययनिमित्तं संयोग इति सम्बन्ध-

---

6 जीवरोधाय कण्ठे बिसलताऽर्पणमनुचितमित्यतो'ऽनौचित्यादृते नान्यद्रसभङ्गस्य कारण'मिति रसभङ्गापत्तेः। अत्र रसपदेन तदाभासो ग्राह्यः।

7 न तु यथा वामनीयैरोद्भटैर्वा भामहमतानुयायिभिरतत्त्वदर्शिभिः प्रदर्शित इत्येवकारस्य तात्पर्यम्। उभयोरेव पक्षयोर्गुणालङ्कारयोः स्वरूपगतो भेदोऽन्ततोऽङ्गिरसापलब्धिरवपद्यमाच्छादितकल्प इत्यदचेर्बीजम्।

प्रासादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डरिकाप्रवाहेणैषां भेदः (भा. वि.) इत्यभिधानमसत्।

यदप्युक्तं 'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः'

---

भेदाद्गुणालङ्काराणां लौकिकानामेव भेदः, न तु काव्याश्रितानाम्, एषामुभयेषामपि समवायवृत्त्यैकरूपत्वात्। अतोऽत्र भेदाभिधानं गड्डलिकाप्रवाहेणेति यत् केनचिदभेदवादिना (149b) सोपहासमभिहितं तत्तावन्न युक्तमिति व्यवह्रियताम्।

अथ भेदवादिभिर्वामनादिभिरपि यदन्यथा गुणालङ्काराणां भेद उपपादितः सोऽपि न युक्त इत्याह यदप्युक्तमिति। लोकशास्त्रातिरेकी शब्दार्थयोरनुरञ्जकः कश्चिद्विशेषः शोभाशब्दवाच्यः, तस्याः शोभायाः कर्तारो धर्मा गुणाः, तस्याश्च शोभायाः प्रकर्षहेतवोऽलङ्कारा इति[4]। अत्रैव च श्लोकौ—(का. अ. सू. वृ. ३।२।२६) युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव। विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः॥ यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः। अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि

---

4 वामनकृतो गुणालङ्कारभेदः परिणामे शोभायास्तारतम्य एव पर्यवस्यति न तु तयोरापाततो भेदनिर्धारणे। नाप्यसौ तद्वैलक्षण्यसूचक इत्याशयः। वामनीयमतमुभयपक्षेऽप्यसान्तुष्टिकम्। प्राचीनपक्षावलम्बी नवीनमताभिज्ञोऽपि काव्यादर्शटीकाकृत्तर्कवाचस्पतिरेवमभिधत्ते 'शोभाहेतवो गुणाः शोभाऽतिशयहेतवस्त्वलङ्कारा इति कैश्चिदुक्तम्। शोभाऽतिशयहेतुत्वस्यैव विवक्षितत्वाभावं भेदहेतुरिति गुणा अलङ्कारा एवे'ति। नवीनमतानुप्राणितास्तु गुणालङ्कारयोः स्वगतभेदं स्वीकुर्वन्ति। एके आत्मधर्मा इतरे शरीरधर्माः। एतत्तु न वाच्यं यद्भामहदण्डिप्रभृतिभिरिव वामनीयैरपि शब्दशरीराश्रय एव विचारः। वामनेन 'रीतिरात्मा काव्यस्ये'-त्युक्तम्। वृत्तौ च तत्र शरीरस्येवेति वाक्यशेषः। शिङ्गभूपालस्तु 'अत्र रीतेरात्मत्वमिव शब्दार्थयुगलस्य शरीरत्वमौपचारिक'मिति सिद्धान्तयति। शिङ्गभूपालमन्तव्ये यथाविन्यस्ते पदार्थयुगलस्य शरीरत्वमिव रीतेरात्मत्वमौपचारिकमिति तदभिप्रायः प्रतिभाति। रुद्रटादिभिस्तु गुणदोषयोर्विचारो वृत्तेर्व्योपकलक्षणाया अवान्तरभेदश्च विहितः, न तु यथा नव्यै रसस्य मुख्यत्वे निर्बन्धवद्भिः। 'स्वर्गप्राप्ति'रित्यादिपद्ये वामनमतेन दर्शिते (४।३।२१) 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्य'मित्यत्र 'इयं साकमता लक्ष्मी'रित्यादिष्विव विशेषोक्तिसम्भवः। परं तत्र गुणनिरपेक्षत्वे काव्यप्रवर्तनप्रयासो दुःस्थः।

इति ( का. अ. सू. वृ. ३।१।१, २ ) तदपि न युक्तम्। यतः किं समस्तैर्गुणैः काव्यव्यवहार उत कतिपयैः। यदि समस्तैस्तत् कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा। अथ कतिपयैस्तत्—

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥३३९॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।

अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥३४०॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारप्रवर्तकौ।

इदानीं गुणानां भेदमाह—

माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश।

एषां क्रमेण लक्षणमाह—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥६८॥

---

संश्रयन्ते ॥ (का.अ.सू. ३।१।२ वृ.) इति। अतः सगुणं भूषणैरलङ्क्रियते न गुणरहितमिति तात्पर्यार्थः। यत इति—तत्र नाद्यः पक्षो विकल्पासहत्वादित्याह किं समस्तैरिति। अथ कतिपयैरेव गुणैः काव्यव्यवहार उच्यते तदानीमतिप्रसङ्गो यथा अद्रावत्रेत्यादि। अत्र न कश्चन विवक्षितो रसो न वाऽलङ्कारः—गुणाश्च तल्लक्षणानुसारेणाश्रितः, ततोऽत्रापि काव्यव्यवहारः प्रसज्येत।

एवमन्योक्तगुणलक्षणे दोषं निर्णीय "तदतिशयहेतवस्त्वलङ्कारा" इत्यपि न युक्तमव्याप्तेरित्याह स्वर्गेत्यादि। इयं वरवर्णिन्यनेनैव देहेन ( 150a ) स्वर्गप्राप्तिः। अत्र पूर्वार्धे विशेषोक्तिरुत्तरार्धे व्यतिरेकः। एतौ च गुणनिरपेक्षावेव काव्यव्यवहारस्य प्रवर्तकाविति[1]। गुणास्तु वस्तुतोऽस्त्येव, तस्य रसधर्मत्वात् किन्त्वलङ्कारावेतावत्र तन्नापेक्षेते। अतश्च गुणकृता शोभैव तावन्नास्ति कुतस्तरां तदतिशयोऽलङ्कारजन्य इत्येवंविधे सन्दर्भे काव्यव्यवहारः प्रतीयमानोऽपि विलीयेत।

माधुर्येत्यादि—न पुनर्दशेति वामनादीनां मतमपाकरोति। अथैषां प्रत्येकं लक्षणं नियतरसाश्रितत्वञ्च दर्शयति। आह्लादकत्वमिति—रतौ हि समस्तदेवासुरतिर्यङ्नरादिजातिष्वविच्छिन्नैव वासनाऽऽस्त इति न कश्चिदत्र तादृग् योगः सहृदयसंवादमयः, रतेरपि तच्चमत्कारोऽस्त्येव। अतएव सर्वलोकसिद्धशार्ङ्गराऽऽदिमाधुर्यवदाह्लादकत्वा-

1 'काव्यव्यवहारप्रवर्तका'विवक्षत स्यातामिति क्रिययाऽन्वर्थयाऽन्वयः।

शृङ्गारे अर्थात् सम्भोगे। द्रुतिर्गलितत्वमिव। श्रव्यत्वं पुनरोजःप्रसादयोरपि।

करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।

अत्यन्तद्रुतिहेतुत्वात्।

दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥६९॥

चित्तस्य विस्ताररूपदीप्तत्वजनकत्वमोजः।

बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।

वीराद्बीभत्से ततोऽपि रौद्रे सातिशयमोजः।

---

न्माधुर्यमित्युक्तम्। द्रुतिश्चित्तस्य द्रवीभावः। मन्युक्रोधादिप्रयुक्तं काठिन्यमुत्सृज्य चित्तमस्य द्रवतीत्यर्थः। गलितत्वमिवेति श्रोतृप्रेक्षकाणां मनस इत्यर्थः। अथ शब्दार्थाश्रितत्वशङ्कामस्य निराकुर्वाणः परकीयलक्षणं साधारण्यादपाकरोति श्रव्यत्वं पुनरिति—एतेन 'श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते' (भा. का. श्रा. २।३) इति भामहस्य माधुर्यलक्षणमुपलक्षितम्। ओजःप्रसादयोरपीति—तत्रौजसि यथा 'यो यः शस्त्रं बिभर्ति' इत्यादौ (वे. सं. ३।३२)। प्रसादे तु श्रव्यत्वमसमस्तत्वं (150b) चास्त्येव (ध्व. श्रा. लो. २।८)। अथ रसविशेषाश्रितत्वेन चित्तद्रुतिप्रकर्षान्माधुर्यस्य प्रकर्षं दर्शयति करुण इति। अत्र स्वाभाविकमनाविष्टात्मकं काठिन्यं मन्युक्रोधादिदीप्तरूपत्वं विस्मयहासादिरूपविमयत्वञ्च मनः परित्यजतीति सर्वथैव गलितत्वमिवेति। तथाचोक्तम्—गलितत्वमिवाह्लादं यद्दत्त्याह्नये ददत्। माधुर्यं नाम शृङ्गारे प्रोहं गाहते गुणः॥ क्रमेण तस्य करुणे विप्रलम्भे च जृम्भते। आधिक्यं गुष्यते शान्ते ततोऽप्युत्कर्षगामिता॥ इति। तदित्थं वस्तुनो[10] माधुर्यं शृङ्गारादे रसस्यैव गुणः। तन्मधुररसाभिव्यञ्जकयोः शब्दार्थयोस्तूपचरितम्। माधुर्यं मधुररसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्यमिति तल्लक्षणम्।

दीप्त्येति—दीप्तिरुज्ज्वलता याऽऽत्मविस्तृतेर्हेतुरिति, हृदये विस्ताररूपप्रज्वलनस्वभावरूपमास्वादविशेषात्मकं येन जन्यते स ओजो नाम गुण इति। अयञ्च वीररसाभिव्यञ्जकत्वात्तदाश्रितः। तस्येति—ओजसः। बीभत्सरौद्रयोः क्रमेणाधिक्यं, तेन वीररसाद्बीभत्सरस ओजस्तरः, ततोऽपि रौद्ररस ओजस्तम इति। यद्यपि चौजोमाधुर्ययोरन्योन्याभावरूपत्वात् सङ्करोऽप्यत्र[11] रीतिवाह्य इत्युक्तं तथापि तत्समावेशवैचित्र्यञ्च द्रष्टव्यम्। यथा हास्ये

---

10 वस्तुत इति 'ख' पुस्तके पाठः।

11 नीतीति 'क' पुस्तके पाठः।

कुतस्त्रय एव न दशेत्याह—

> केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।
> अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥७२॥

**बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः**

---

अभेदोपचारेणेत्यर्थः । तत्र दृष्टान्तमाह **आकार** इति । एवञ्च रसावलम्बिनो गुणाः *शब्दार्थाधिवासिनस्त्वलङ्कारा इति काश्मीरकाणां व्याहारोऽविचारसुन्दर एवेति यत्* केचिदुक्तं[14] तच्चिन्त्यम् ।

ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारताऽर्थव्यक्तिकान्तिनामानो दश गुणा वामनादिभिरभिहिताः । तत् कथं त्रय एवेति जिज्ञासामवतारयति वृत्तिकारः **कुतस्त्रय एवे**ति । तत्रोत्तरं **केचिदि**त्यादि । यतोऽस्मदुक्तेषु त्रिष्वेव गुणेषु केषाञ्चिद् गुणानामन्तर्भावः, केषाञ्चिद्दुष्टतामात्रविपर्ययाददुष्टताभात्रं (15ıb) न तु गुणत्वं, केषाञ्चित्तु न तावद्गुणत्वं प्रत्युत दुष्टत्वमेव, ततो **न दशे**ति । तत्र तल्लक्षणाद्यनुसारेणैव श्लेषादीनामोजस्यन्तर्भावं दर्शयति **बहूनामपी**ति । यस्मिन् सति भिन्नान्यपि पदान्येकवद्भासन्त इति पदानामनालम्बितसन्धीनां श्लिष्टतानिबन्धनमसृणत्वं सः श्लेषः । एवं बन्धस्य गाढत्वे त्वोजः । बन्धः पदरचना तस्य गाढत्वं श्लिष्टत्वमेव, अतः श्लेषगुणो नास्त्येतद्व्यतिरिक्तः किन्त्वेतदन्तर्भूत एव । एवमारोहावरोहयोः क्रमः समाधिरिति (का. अ. सू. ३।१।१२) । तत्रारोहस्य क्रमोऽवरोहस्य च क्रम **आरोहावरोहक्रमः** क्रमेणारोहणमवरोहणञ्चेत्यर्थः । तत्र त्वोजोरूप आरोहः प्रसादरूपोऽवरोह इति वामनेनैव शङ्कितं यदाह—(३।१।१३) न पृथक् समाधिरारोहावरोहयोस्तयोरोजःप्रसादरूपत्वादिति । तेनैव च पुनः समर्थितं 'नासम्पृक्तत्वा'दिति । तस्मादोज-प्रसादावत्र सम्पृक्तौ नद्योर्वेणिकावद्वहतस्ततः पृथगयं गुण इति (का. सू. ३।१।१४) । एतच्चायुक्तम् । तथाहि बन्धगाढत्वमोजः (३।१।५), शैथिल्यं प्रसादः (३।१।६) । अथचौजोविपर्ययात्मा दोष इत्योजसा सह 'सञ्चाराद्गुणत्वम्'

---

सत्त्वादुपचारो नैव कल्प्य इति तु मादृशा' इति रसगङ्गाधरकृतः । गुणवृत्तिकल्पने मम्मटभट्टा अभिनवगुप्तमतमनुसरन्तीति रसगङ्गाधरकृतां दोषख्यापनमनादेयम् । वस्तुतस्तु रसात्मवादोऽप्यलंकारशास्त्रे दृष्टान्तत्वेनैवोपकल्पित इत्यवधेयम् ।

14 एते च भोजादिमतानुसारिण आनन्दवर्धनप्रवर्तितसिद्धान्तं कटाक्षयन्ति । अर्वाञ्चो विद्यानाथपण्डितराजजगन्नाथप्रभृतयोऽप्येवम् ।

समाधिः, या च विकटत्वलक्षणोदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिरभिहिता। मार्गाभेदरूपा समता क्वचिद्दोषः। तथाहि 'मातङ्गाः किमु वल्गितैरि'त्यादौ (२६५ श्लो:) सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताऽभिधानात् तन्निराकरणेनापारुष्यरूपं सौकुमार्यम् औज्ज्वल्यरूपा कान्तिश्च स्वीकृते। एवं न दश शब्दगुणाः।

---

(३।१।७)। केवलस्य तु प्रसादस्य तन्मतानुसारेण दुष्टत्वमेवेति (३।१।७ वृ) प्रसादाङ्गस्यौजसि न्यग्भावात् समाधेरोजस्येवान्तर्भावः। 'विकटत्वमुदारता। यस्मिन् सति नृत्यन्तीव पदानीति जनस्य वर्णभावना जायते तल्लीलायमानत्वमित्यर्थो यथा 'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झगिति रणितमासीत्तत्र चित्रं कलञ्चे'ति (३।१।२२)। अत्र बन्धस्य गाढत्वाद्वृषकमेवौजस्त्वम्। प्रसादस्य शैथिल्यात्मनो दुष्टत्वमेव। तथाचोक्तम्—(का. अ. सू. वृ. ३।१।७) गुणः (1522) प्रसाद ओजसा सह संप्लवात्। केवलस्तु दोष एवेति। अस्य पूर्ववदोजस्यन्तर्भावः। पृथगिव पदानि यत्र भासन्ते स पृथक्पदः सन्दर्भः, उपमानगर्भो बहुव्रीहिः, तस्य भावः **पृथक्पदत्वं** (का. अ. सू. वृ. ३।१।२०) तद्रूपं **माधुर्यं** ह्लादकत्वमित्यादिना **साक्षादुपात्त**मेवेति न पृथक् शब्दाश्रितो गुणः, मधुररसं प्रति वैदर्भ्या जीवितप्रायत्वात्[15]। यन्न झगित्यर्थप्रतिपत्तिहेतुत्वं स गुणोऽर्थव्यक्तिः (३।१।२३ वृः) प्रसादेन गृह्यत इति दृष्टान्ततोऽप्यनेनोक्ता भवतीत्याह **प्रसादेनेति**। मार्गस्याभेदो **मार्गाभेदः समता**। येन मार्गेणोपक्रमस्तस्यापरित्याग इत्यर्थः (३।१।११)। इयच क्वचिद्दोषः। तथात्वे लक्ष्यसन्दर्शनमेव हेतुत्वेनाह **मातङ्गा** इत्यादि (२६५ श्लो:)। अत्र सिंहाभि-

---

15 असमासवृत्त्याश्रयेण पृथक्पदत्वस्य माधुर्याद्यशब्दगुणत्वेन तस्योक्तिवैचित्र्यं माधुर्य'मिति तस्यैवार्थगुणत्व श्लोकारेण 'सति वक्तरि सत्यर्थे सति शब्दानुशासने। अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥' इत्यनेनाभियुक्तवचनेन च सहृदयहृदयैरास्वादस्य समग्रसौन्दर्यसमुन्मेषिस्वरूपस्य रसस्य कच्चीकाराश्रिततेति वामनीयानामप्यत्र न विमतिः। रसपक्षमुपजीवतां 'शृङ्गार एव मधुरः परः प्रह्लादनो रसः। तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठती'ति पक्षः। लोचनकारेण 'वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुणः। मधुरशृङ्गारादिरसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्य'मिति हि तल्लक्षणमिति विवृतश्च।

'पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा। प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य चे ति (का॰ अ सू॰ वृ॰ ३।२।२०) या प्रौढिरोज इत्युक्तं, तद्वैचित्र्यमात्रं न गुणः, तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवी-

---

धाने'कोपाटोपे'त्यादौ यथा गुणत्वं तदुक्तमेव, तत्र विपर्यये दुष्टता स्यात्। अजरठत्वं सौकुमार्यं बन्धस्याजरठत्वमपरुषत्वम् (३।१।२१) कष्टत्वाभाव इत्यर्थः। बन्धस्योज्ज्वलता कान्तिः, यदभावे पुराणी च्छायेत्युच्यते (३।१।२५)।

अथार्थगुणास्तन्मतेनैव दर्शयति, तत्रार्थस्याभिधेयस्य प्रौढिः प्रौढत्वं यत्तदोजः। तत्र 'पदार्थे' इत्यादिना (का॰ अ॰ सू॰ वृ॰ २।२।२) 'साभिप्रायत्वमस्य चे'त्यन्तेन पञ्चधोक्तमित्याह—ग्राम्यत्वाभाव इत्यर्थः। यदेतौ द्वावपि दोषाभावमात्रे पर्यवसितौ। श्लोकाधात—(का॰ अ॰ सू॰ ३।१।२५ वृ॰) 'औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविचक्षणाः[16]। पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः' इति। पदार्थे इति—यथा—अत्र (चन्द्र-) पदवाच्येऽर्थे (152b) 'नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' (र॰ व॰ २।७५) रित्यत्रात्रिनयनेत्यादिपदसमूहलक्षणं वाक्यं प्रयुक्तम् (का॰ अ॰ सू॰ वृ॰ ३।२।२)। **वाक्यार्थे च पदाभिधा** यथा दिव्येव न भवति किन्तर्हि भानुपीति वक्तव्ये निमिषतीति। वाक्यार्थस्य व्यासो यथा—(का॰ अ॰ सू॰ वृ॰ ३।२।२) असौ नानाकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा प्रभवति भवत्येव न तत॰। पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत् पुनर्यस्मादूर्ध्वं भवति न च दुःखं न च सुखम्॥ इति। समासो यथा—श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्। आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥ तदेतत्-प्रकारचतुष्टयेनार्थस्य प्रौढत्वमिति यदोज इत्यर्थगुणत्वेनोक्तं तद्वैचित्र्यरूपं न तु गुणः। अत्र हेतुमाह **तदभावेऽपीति**। यथा—(र॰ वं॰ १।१) वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ इत्यादि। साभिप्रायत्वरूपमोजो यथा (का॰ अ॰ सू॰ वृ॰ ३।२।२) सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः॥ इत्यत्राश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्योपक्षेपपरतया यदि विशेषाधायकं न स्यात्तदानीमपुष्टार्थतैव स्यात्। "अर्थस्य शैथिल्यमर्थवैमल्यं

---

उभयत्रैव वैदर्भ्यादिरीतिमयस्यानपलापः परं ध्वनिपदनिर्बन्धवता'मनेन रीतिलक्षणेन न किञ्चि'दिति सत्काव्यतत्त्वविषयस्य स्वनय एव व्याकुलितसौलभ्यादित्यवधेयम्।

16 गुणविपश्चित इति 'ख' पुस्तके पाठः।

कृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपमुदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपाऽर्थव्यक्तिः दीप्तरसत्वरूपा कान्तिश्च स्वीकृते। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा

---

प्रयोजकमात्रपदपरिग्रहः, अर्थवैमल्यं प्रसादः." (का. अ. सू. वृ. ३।२।३)। अस्य च विपर्ययेऽधिकपदत्वं नाम दोषो यथा 'उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदं'मित्यत्र काञ्चीपदमित्येतावतैव विवक्षितस्य लब्धत्वात् (153a) विमलमणीत्यधिकपदत्वं स्फुटमेव (का. अ. सू. वृ. ३।२।२)। उक्तेर्वैचित्र्यं तन्माधुर्यं यथा (का. अ. सू. वृ. ३।२।१०) 'रसवदमृतं कः सन्देहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदा'दिति। एतद्विपर्यये पुनरुक्ताभिधानं अपरिपुष्टं तद्विहितं लक्षणेन दोषेणाक्रान्तं। पदवैऽर्थऽपारुष्यं सौकुमार्यं यथा मृते यशःशेषप्रभृतिः (का. अ. सू. वृ. ३।२।११)। एतद्विपर्ययेऽमङ्गलरूपाऽश्लीलता। अग्राम्यत्वरूपोदारता यथा— त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः कलानां सीमानं परमिह युवामेव भजथः। अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वामतः शेषं यत्स्याज्जितमिह तदानीं गुणितया (का. अ. सू. वृ. ३।२।१२)॥ दीप चेत् स्यादिति विपर्यये तु ग्राम्यता स्फुटैव। तदेतदाह अपुष्टार्थत्वेत्यादि—एवं 'साभिप्रायत्वरूपमोज' इत्यादिभिर्यथाक्रमं सम्बन्धः। यच्च 'वस्तुस्वभावस्फुटत्वरूपमर्थव्यक्ति', 'दीप्तरसत्वं कान्ति'रिति चोक्तम् (का. अ. सू. वृ. ३।२।१३-१४) तदपि न पृथगित्याह अभिधास्यमानेति। तथाहि वस्तूनां स्वभावानां (पदार्थानाम् ?) स्वभावस्य स्फुटत्वं यदर्थव्यक्तिः। इयं वक्ष्यमाणेन स्वभावोक्तिनामालङ्कारेण स्वीकृता यथा—(का. अ. सू. वृ. ३।२।१३) पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः। गोरोचनाहरितबभ्रु बहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य॥ प्रथमगलितैः पर्यन्ताभैः स्थितं पृथुकर्णिकैर्विकचविस्तैरम्बुभिर्मनाक्पतितैरिव। नामात्र किञ्चिदपि यदि (153b) दैवे-युक्तमवि श्री इदाञ्जानां कथा पद्मिनां॥ इति। एव दीप्ता विभावादिसम्मेलनेन प्रकाशिता [illegible] रसा यस्यार्थस्य स दीप्तरसस्तस्य भावस्तत्त्वं या कान्तिः [illegible] 'प्रेयसि सहभागिनि' इत्यादिना (३।२।१४) प्रागुक्ताभ्यां रसध्वनिगुणीभूतव्यङ्ग्याभ्यां [illegible], [illegible] गतार्थत्वात्।" इत्याहुः।

17 न चित्तकाव्यस्येति [illegible]। [illegible] दण्डिवामनादीनां प्राचीनानां रीतिवादे

श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं, न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्य-

---

घटनात्मा श्लेषे क्रमादित्यागो घटना। अत्रेदं कृत्वेदं कर्तव्यमिति क्रमः। लोकशास्त्र-विलक्षणा वक्रता कौटिल्यम्। अतिशयं प्रतिभासनाभावोऽनुल्बणत्वम्। कथमेवमर्थः सङ्गच्छत इत्यनुपपत्तिसमाधानौपयिकविशेषनिवेशनमुपपत्तिः। एभिः [ योगः ] योजन-मर्थस्य श्लेषो यथा—( का. अ. सू. वृ. ३।२।४ ) दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरा-देकस्या नयने निमील्य विहितक्रीडाऽनुबन्धच्छलः। तिर्यग्वर्तितकन्धरः सपुलकः स्वेदोल्लसद्-कम्पिनी-मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥ ( अ. श. )। अस्य च यद्यपि माधुर्यरूपत्वं तथापि विपर्ययेऽनवीकृतदोषेणाक्रान्तत्वाद्दोषाभावमात्रत्वेत्यर्थः[18]। अवैषम्य समता ( ३।२।५ )। येन क्रमेण लोकेऽर्थः प्रतीतस्तस्यानतिक्रमोऽवैषम्यं, तेनार्थस्य गणनं

---

रसस्य स्फूर्तत्वेनान्तर्भावः। अलङ्कारवादिना पक्षे स रसवदाद्यलङ्कारपरि-ग्रहेण साधितः। एवमादीना गुणानामोजोऽन्तर्भावे हेतुर्ध्वनिकारेणोक्तो यथा—रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः। तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥ 'आदि'पदेन वीराद्भुतयोरपि ग्रहणम्। माधुर्यगुणेन शृङ्गारस्य, तथा शान्तस्यापि नवरसत्वमते। प्रसादस्तु सर्वरससाधारणो स्वच्छता एवेत्यादिस्वीकृतः। त्रिकारविस्तारदीप्तिभिश्चित्तस्य त्रयो गुणाः प्रसादमाधुर्यौजो-नामानो यथाक्रमं प्रतीयन्ते। एतामेव सरणिमनुसृत्य रसशास्त्रे नूतननि-बन्धेषु सात्त्विकभावानां 'धूमायिता इते ज्वलिता दीप्ता उद्दीप्तसंज्ञिताः। वृद्धिं यथोत्तरं यान्तः सात्त्विकाः स्युश्चतुर्विधाः॥' इति चतुर्धा संज्ञाभेदा उद्भाविताः।

18 वामनेनास्य पद्यस्य श्लेषाख्यार्थगुणोदाहरणत्वमेव दर्शितम्। अभिनवभारत्यामपि (II. p 334) वामनमतं गृहीतमेव। भोजोऽप्येवमाह। टीकाकृता श्रीधरेणाला-ङ्कारिकबीजमुद्भाव्य दोषाभावमात्रत्वमेव सिद्धान्तितम्। एवममरुकपद्यान्तरे 'शून्यं वासगृह'मित्यस्मिन्नन्यैः प्रशंसितेऽपि मननतरितीर्णविद्यार्णवेन पण्डितराज-जगन्नाथेन कवेर्निर्माणसामर्थ्योदाहरणं प्रकाशितमिति निन्दा प्रवर्तिता। वस्तुतस्तु एकस्मिन् माने सम्भोगशृङ्गारस्य विभावादिकृतपरिपाटीकमे तात्पर्य-मितरत्त पदानां वर्णानाञ्च घटनायामिति नैवदाश्चर्यम्।

च्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं न दोषाकरं काव्यमित्यर्थदृष्टिरूपः समाधिरपि न गुणः।

तेन नार्थगुणा वाच्याः

वाच्या वक्तव्याः।

प्रोक्ताः शब्दगुणास्तु ये।

वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥७३॥

के कस्येत्याह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।

अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥७४॥

ट-ठ-ड ढ-वर्जाः स्पर्शाः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः। समासाभावो मध्यमः समासो वेति

---

समता, एतद्द्वयस्य प्रक्रमभङ्गाख्यदोषः[19] स्फुट इति तदभावमात्रं समता। क्रमस्यागस्य दुष्टता दर्शयति क· खदिरेति। अर्थदृष्टिः समाधि (का अ सू वृ ३।२।६)। अर्थस्य दर्शनं समाधि, समवधानकारणत्वात्। अत्र(154a)हित हि चित्तमर्थान् पश्यति। अर्थश्चायोनिरन्य छायायोनिर्वेति द्विविधो यथा—आश्वपेहि मम शीधुभाजनाद्यावदग्रदशनैर्न दश्यसे। चन्द्र मद्दशनमण्डलाङ्कित खं न यास्यसि हि रोहिणीभयात्॥ मा भैं शशाङ्क मम शीधुनि नास्ति राहु खे रोहिणी वसति कातर किं बिभेषि। प्रायो विदग्धवनितानवसङ्गमेषु पुसा मन प्रचलतीति किमत्र चित्रम्॥ अत्र पूर्वस्य श्लोकस्यार्थोऽयोनि। द्वितीयस्य चान्यच्छायायोनिरिति (का अ सू वृ ३।२।७)। अस्य चोभयरूपस्य काव्यस्य यदि न दर्शनं भवति तत काव्यस्य व्यवहार एव न स्यात्। तदेतदुपसंहरति सूत्रकार—तेनेति। न वाच्या इति नियोगार्थन कृत्येन शिक्षाकम उक्त —न वक्तु योग्या इत्यर्थ।

अथ वर्णाना यथाक्रम शृङ्गारादिरसाभिव्यञ्जकत्व दर्शयति मूर्ध्नीत्यादि। स्पृश्यन्त इति स्पर्शाः कादयो मावसाना। प्रत्यासत्तवर्गनामन्त्या इत्याह शिरसि निजेति। तेन ङञणनमान्तर्युक्ता कचटतपादय। तथा लघू इत्यनेन रणौ ह्रस्वान्तरितौ। एवरूपा वर्णा प्रयुक्ता सन्त शृङ्गारादिरसस्य प्रकाशका माधुर्यगुणस्याव प्रकृष्यमाणत्वात्। समासाभावो मध्यम· समासो वेति। यथा यमके शब्दान्तरान्वेषणरूप पृथक्-

---

19 'प्रक्रमभेदाख्य इति 'क' पु पाठः।

समासः, तथा माधुर्यवती पदान्तरयोगे च रचना माधुर्यस्य व्यञ्जिका। उदाहरणम्—

> अनङ्गरङ्गप्रतिमन्तदङ्गम्भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
> कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि ॥३४१॥

> योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।
> टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥७५॥

---

प्रयत्नो रसभङ्गहेतुरित्युक्तम्, तथा दीर्घसमासे समासमस्तपदत्वान्वेषणरूपः (154b) स्थित एव। अतः शृङ्गारे दीर्घसमाससंघटना सर्वथा परिहार्या, करुणविप्रलम्भयोस्तु विशेषतः, तत्रापि विशेषतोऽभिनेयार्थयोः। अत्र व्यवस्थावाहुल्याद्भावबाहुल्याद्विप्रलम्भतरणात्यन्तेनाविद्यमानसमासैव संघटनाऽनुकूलेति दीर्घसमासे तु मन्थररूपा प्रतीतिः साकाङ्क्षा सती चिरेण क्रियापदं दूरस्थमनुधावतीति वाच्यप्रतीतावेव शान्ता सुकुमारतररसचर्वणायोग्या स्यादिति भावः। माधुर्यं सौकुमार्यं तद्वती रचना पदान्तरयोगेऽप्यविरुद्धं। तेनोक्तप्रकारा वर्णास्तथा समासस्तथा **माधुर्यवती** संघटना च **माधुर्यस्य** मधुरतरशृङ्गाराद्याश्रयिणो व्यञ्जिकेति। यथा अनङ्गेति—अत्र शिरसि निजवर्गान्तेन ङकारेण युक्तो गकारः, एवं न्तम्भप्रभृतयः। समासाभावो द्वित्रिपदारब्धसमासश्च। पदान्तरयोगे माधुर्यवती रचना यथा 'भङ्गीभिरङ्गीकृतमानताङ्ग्या' इति। एभिः समुचितैर्माधुर्यं व्यज्यते[20]।

**योग** इति आद्यतृतीयौ प्रस्तावाद्वर्गस्य प्रथमतृतीयावन्त्ययोरप्येतयोरेव। तेन ककारेण खकारस्य गकारेण घकारस्य जकारेण झकारस्य योग इत्यादि। [रेण] रेफेण सर्वस्य सर्वत्र योगः र्क क्रादि। **तुल्ययोर्योगः** क्क इत्यादिरूपः। टवर्गोऽत्र णकारवर्जितस्यापरुषत्वेन माधुर्यप्रयुक्तत्वात्। **शषाविति**—शकार-षकारयोरैक्यं नास्ति, सकारस्य (155a) त्वस्त्येवेति शषावेव व्यञ्जकावित्यवधारणमिति यदन्यैरुक्तम् तदविचाररमणीयमेव। अत उक्तरूपाः सर्वे वर्णा दीर्घा दीर्घसमास इति त्वरितपाठ्यत्वात्[21]। **गुम्फः** संघटना। उद्धतत्वं विकटत्वम्।

---

20 एतन्मन्तव्यमनेनैवाकारेण तथाऽन्यापदेशेन च काव्यालङ्कारसारसंग्रहविवृतौ स्पृष्टतयामुपलभ्यते। अन्तो च 'मिश्रः क्वचिद्वै रचना स्वल्पदोर्घा कार्या' इत्यन्यत्रोक्तेरिति मतादेषः। किमिदं राजानकतिलकादेर्मन्तव्यमुपक्षिप्तमिति सन्देहः।

21 वचनमेतन्नाट्यशास्त्रे न लभ्यते, परन्तु नान्यदेवकृतभरतभाष्ये स्यात्। चतुरधिकपदवद्धे समासे ह्रस्वानामक्षराणामपि दीर्घाणामिव वाचिकोऽभिनयो विधेय इत्याशयः। त्वरितपाठश्चौजस आधायकः।

वर्गप्रथमतृतीयाभ्यां तद्द्वितीयचतुर्थयोः, रेफेणाध उपर्युभयत्र वा यस्य कस्यचित्, तुल्ययोस्तेन तस्यैव सम्बन्धः, टवर्गोऽर्थात् णकारवर्जः, शकार-षकारौ, दीर्घः समासः, विकटा संघटना ओजसः। उदाहरणं—"मूर्ध्नामुद्-वृत्तकृत्ते"त्यादि (१६३ श्लोः)।

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत्।
साधारणः समग्राणां स प्रसादो गुणः स्मृतः ।।७६।।

समग्राणां रसादीनां समासानां संघटनानां च।

उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।

---

यस्याः संघटनाया विकटत्वं पृथग्भावादिनिबन्धनं सा घटना **विकटा**। एते वर्णादयः शृङ्गारध्वंसका यदा वीरवीभत्सादौ[22] निवेश्यन्ते तदा रसं दीपयन्ति। अत्रौजसः प्रकृष्ट-तरत्वादोजसो व्यञ्जिकेति सम्बन्धो यथा **मूर्ध्ना**मित्यादि।

**श्रुतिमात्रेणेति**—आविद्वदङ्गनाबालप्रसिद्धार्थं प्रसादवत् (भा. का. अ. २।३)। **रसादीनां** रसभावतदाभासानाम्। असमासमध्यसमासदीर्घसमासाना संघटनानां शब्द-घटनानां शब्दगतानामर्थगतानां च प्रसादाख्यो गुणो व्यापी सर्वरससाधारणत्वात्।

प्रसादातिक्रमे ह्यसमासाऽपि संघटना करुणो विप्रलम्भः शृङ्गारो वेति न व्यनक्ति, तद्-परित्यागे च मध्यमसमासा संघटना प्रकाशयत्येव। तस्मात् सर्वत्र प्रसादोऽनुसर्तव्यः। अत एव 'यो यः शस्त्रं बिभर्ती'त्यादौ (वे. सं. ३।३२) दीर्घसमासाभावादोजसोऽप्यसम्भवेनैवाचारुत्वं, रौद्ररसे प्रसादगुणेनाभिव्यक्तेः। अयञ्च द्विधा लोकप्रसिद्धापभ्रंशग्राम्यपदारब्धभेदात्। तत्र गुणद्वयोपयुक्तवर्णातिरिक्तवर्णा अपि यकारादयो वर्णा व्यञ्जकत्वेनानुसर्तव्याः, केवलं लकारादिभिः सह यकारादयो न योजनीयाः। यथाचोक्तम्—(का. अ. सा. सं १।६) शेषैर्वर्णैर्यथायोगं रचिता कोमला(155b)ख्यया। ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृत-बुद्धयः॥ इति। अत्र हि यथायोगमित्यनेन लकारादिभिः सह यकारनिरासः। **परिम्लानमित्यादि**—अत्र, ग्राम्योपनागरपदारब्धसन्दर्भे विप्रलम्भशृङ्गारात्मनि म्ल-स्त-

---

22 ओजस इत्तोयस इति 'क' मातृकालिपौ दृश्यते। स च मातृकाया अस्या वङ्गीयलिपित उद्भवोऽथवा लिपिकरो गौडीयो नागराक्षरलिप्यामपि लिखितं दृष्ट्वा श्रुत्वा वा पठितं ग्रन्थमन्याकारेण लिखतीति वितर्क्यते।

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्गयाः सन्तापं वदति बिसिनीपत्रशयनम् ॥३४२॥

( रत्ना. २।१२ )

यद्यपि गुणपरतन्त्राः संघटनाऽऽदयस्तथापि
वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥७७॥

क्वचिद् वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनाऽऽदयः । यथा—
मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसमो दुन्दुभिस्ताडितोऽयम् ॥३४३॥

( वे स. १।२२ )

---

प्रभृतय पूर्वापेक्षुक्रशोषा वर्णा । एव समासादयोऽपि पूर्ववत् । अत्र च प्रमादः स्फुट एव ।

इह गुणाना सघटनाऽऽदीनाबैकात्म्य, सघटनाऽऽदीना धर्मा एव गुणा इति भट्टोद्भटादय ( भा वि )। एवच न युक्त, पक्षद्वयेऽपि सघटनाऽऽदीनामिव गुणानाम प्यनियतविषयत्वप्रसङ्गात् । अतो गुणपरतन्त्रा सङ्घटनाऽऽदय इत्यमेव पक्ष श्रेया नित्याह—यद्यपीति । गुणपरतन्त्रा राजभृत्यवत्तदायत्ता्तन्मुखप्रेक्षका इत्यर्थ । अत्रापवादमाह वक्त्रित्यादि । वक्ता द्विधा कवि कविनिबद्धश्च । स चापरो रसभाव रससमन्वितो वा, रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा, कथानायकादिश्च रामादिर्धीरोदात्तादि भेदभिन्न, प्रतिनायको वेति वक्तृभेदा । वाच्यश्च रसव्यञ्जक रसाभासव्यञ्जक वा, उत्तमप्रकृत्याश्रयं मध्यमप्रकृत्याश्रय चेति बहुप्रकारम् । प्रबन्धश्चाभिनेयार्थोऽनभिनेयार्थो वा, तेषामौचित्येनेति । तत्र वक्त्रौचित्याद् यथा मन्थेत्यादि—मन्थो विलोडनदण्ड । आयस्तः समन्तत क्षिप्त । धीरो गम्भीर सदृशो वा[23] । कोण· पटहवादनदण्डः। कृष्णा द्रौपदी । इद हि भानुमतीं प्रति तुम्हाणं अमुक्केसु(156a) केसेसु कह अम्हाण देवीए केसा सजमोअन्ति' ( वे स १ ) इति द्रौपदीवचनाकर्णनानन्तरम् । नेपथ्ये

---

23 'सदृशसदृशो वेति 'क' पुस्तके पाठ ।

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्। अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनाऽऽदयः। वक्ता चात्र भीमसेनः।

क्वचिद् वक्तृप्रबन्धापेक्षया वाच्यौचित्यादेव रचनाऽऽदयः। यथा—

> प्रौढच्छेदानुरूपोच्चलनरयभवत्सैंहिकेयोपघात-
> त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
> कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्दरारन्ध्रभाजां
> भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥३४४॥

(कृ. रा॰. छ. रा. १)

क्वचिद् वक्तृवाच्यानपेक्षया प्रबन्धोचिता एते। तथाहि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। नाटकादौ रौद्रेऽपि न दीर्घसमासादयः।

एवमन्यदप्यौचित्यमनुसर्तव्यम्। (ध्व. आ. ३।८, ६ इ. द्र.)

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम
अष्टम उल्लासः॥

---

कलकलश्रवणाच्च विस्मयजनकम्, अतो यद्यपि वाच्यं न क्रोधादिव्यञ्जकमभिनेयञ्च काव्यं तथापि धीरोद्धतप्रकृतौ भीमसेने वक्तरि तदुचिता उद्धता रचनाऽऽदयो वाच्यप्रबन्धप्रतिकूला अपि शोभन्ते। **वाच्यौचित्याद्** यथा—प्रौढेत्यादि। इयं हि कृत्यारावणाख्ये नाटके[24]वैतालिकस्योक्तिः। तदिह वक्तुः प्रबन्धस्यानौचित्यमपेक्षमाणाः संघटनाऽऽदयः।

**क्वचिदिति—एते** इति वर्णाः समासा रचनाश्च। तत्रोच्छ्वासादिना वक्त्रादिना च युक्ताऽऽख्यायिका। एतद्विरहिता कथा। उभयोरपि गद्यबन्धरूपता किन्तु विकटबन्धप्रधानाऽऽख्यायिका सुकुमाररचनाप्राया तु कथा। तत्राख्यायिकायां रससम्बन्धिन्यपि

---

24 चण्डीदासकृतदीपिकायामप्येवमेवाकरनिर्देशः। अपरे तु छलितरामनाटकीयं पद्यमिदमिति वदन्ति। किन्तु तयोरुभयोरप्येतयो रामनाटकयोर्मातृकाणामधुनाऽनुपलम्भात् किं तदेकतरत्र सत्यमाहोस्विदुभयमपि वितर्कमूलकमिति न निश्चेतुं शक्यम्।

वक्रारि भूम्ना मध्यमसमासदीर्घसमासे एव संघटने, गद्यस्य विकटबन्धाश्रयेण च्छायावत्त्वात्। आख्यायिकायाश्च विकटबन्धाश्रयतया गद्यस्य प्रकृष्यमाणत्वात् मसृणा वर्णादयो न वा पृथक्त्वमित्याह शृङ्गारेऽपीत्यादि—सौकुमार्यादेव। रौद्रादौ, तु न्याय्यमेव। विप्रलम्भकरुणयोस्त्वत्यापि दीर्घसमासरचना परिहर्तव्यैव, तयोरत्यन्त सौकुमार्यात्। कथायान्तु रसबन्धोक्तमौचित्यं, न त्वाख्यायिकावन्नियमः। अतो रौद्रेऽपि नात्यन्तमुद्धता रचनादयः।

एवमन्यदिति 'काव्यभेदरूपे विषयाश्रयमौचित्यम्'—तथाहि मुक्तकसन्दानितकादीनि पर्यायबन्धादयश्च प्रबन्धाः काव्यप्रभेदा द्रष्टव्याः। तत्रैकस्मिन् छन्दसि(156b) काव्यसमाप्तौ मुक्तकं, द्वयोः सन्दानितकं, त्रिषु विशेषकं, चतुर्षु कलापकं, पञ्चादिषु चतुर्दशपर्यन्तेषु कुलकम्। तत्र मुक्तके रसबन्धाभिनिवेशिनः कवे रसाश्रितमौचित्यं दर्शितमेव यथाऽमरुकस्य 'शून्यं वासगृह'मित्यादि (४३:)। रसरहिते तु कामचारः, सन्दानितकादिषु त्वावाक्यपरिसमाप्तेर्विकटत्वम्। तदौचित्यान्मध्यदीर्घसमासे संघटने। एतेष्वेव प्रबन्धाश्रितेषु सन्दर्भमेवौचित्यं न पुनः स्वाभाविकम्। तथाऽवान्तरक्रियासमाप्तावपि वसन्तवर्णनाद्यनेकवर्णनोद्देशेन प्रवृत्ति पर्यायबन्ध। मुक्तकादीनां कुलकपर्यन्तानामेकप्रघट्टकोपनिबन्ध इति कृत्वाऽत्र संस्कृतप्राकृतदेशभाषानिबन्धनाच्छृङ्गारबाहुल्यादसमासा संघटना। कदाचित्तु वीरादिरसौचित्यादितरे। तत्र दीर्घसमासायामपि संघटनायां पद्यता प्राप्या च वृत्ति परिहार्या। एकमेक धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्त्ये निर्वृत्ते निर्वृत्तवर्णना परिकथा। अस्यां कामचारः, कथामात्रतात्पर्येणात्यन्तरसानभिनिवेशात्। समस्तफलान्तेतिवृत्तवर्णना सकलकथा। एकदेशवर्णना खण्डकथा। एतयोः कुलकादिनिबन्धनभूयस्त्वाद्दीर्घसमासायामपि संघटनायां न विरोधः। तथाच पद्योपनागरिकाप्राम्याणां वृत्तीनां स्वनौचित्यं निजनिजरचनाऽनानुकूल्यात्। कामसमस्ततात्पर्येतिवृत्तिषु कामचारः। सर्गबन्धे तु रसतात्पर्ये यथारसमौचित्यम्, अन्यथा कामचार एव। अभिनेयार्थे च नाटकादौ सर्वथा रससम्बन्धाभिनिवेशः कर्तव्यः। अतोऽल्पसमासैनैव (157a) संघटना। तथाहि वाक्याभिनयलक्षणे 'चूर्णपदैः प्रसन्नै'रित्यादिकं यन्मुनिनोक्तं (ना. शा. १२।१४४) तत्रापि वीररौद्रादिवर्णने नायं नियम" इत्याहु.[25] (ध्व. आ. ३।६ इ.)। गद्यपद्यमयी

25 बडोदामुद्रितपुस्तके (२२।४) पाठोऽस्विन्थमस्योद्धृतसन्दर्भस्योपलभ्यते—नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः सचूर्णपदैः। प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः॥ इति, नानारसविशेषो वाक्यार्थस्तेन युक्तानि वाक्यानि यानि तानि च

वम्पुः । इत्थञ्च रसबन्धानभिनिवेश इति रसबन्धोक्तौचित्यसहकृतं विषयाश्रयमौचित्यं प्रवेल यथायोगमनुसर्तव्यं कविभिः ।

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते
काव्यप्रकाशविवेके अष्टम उल्लासः ॥

---

वृत्तरचितानि चूर्णपदात्मकानीत्याद्यभिनवभारतीटीका च (III. p.168)। (ध्वन्यालोकग्रन्थस्तदुपरि लोचनञ्च (१४३ पृ.) मूलकृता टीकाकृता चानूदितमनूदितप्रायं वा सर्वमेतत्प्रकरणे।) तत्र हि वाक्याभिनयलक्षणे 'चूर्णपदैः प्रसन्नै'रित्यभिनवगुप्तधृतपाठः। यत्तूपरि वीररौद्रादिवर्णने नायं नियम इति तत्र कदाचिदौचित्याश्रयेण परुषा ग्राम्या वा वृत्तिः परिहर्तव्येति प्रतीकस्थ-(१४२ पृ.) 'कदाचित्'पदस्य व्याख्याने लोचनग्रन्थे 'कदाचि'दिति रौद्रादिविषय इति तदस्यानुवादः। एष एवार्थो ध्वन्यालोकग्रन्थे (३।६) 'रौद्रवीरादिवर्णने विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते चे'ति चूर्णके प्रस्तुतः।

## अथ नवम उल्लासः

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र सभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।

---

एवमपास्तदोषस्योपात्तगुणस्य च काव्यशरीरस्य साम्प्रतं प्राप्तकालोऽलङ्कारयोग इत्यत आह **गुणविवेचने** इति । अलङ्काराश्च शब्दार्थोभयगतत्वेन बाह्या आभ्यन्तरा बाह्याभ्यन्तराश्चेति त्रिप्रकाराः[1] । अतोऽर्थापेक्षया शब्दस्य प्रतीतावन्तरङ्गत्वमिति शब्दालङ्कारान् प्रथममभिधातुमर्हन्तीत्याह **शब्दे**ति । यद्यपि 'ते चानुप्रासोपमादयः' ( ६७ का ) इत्युक्तम्, तथापि सर्वेषामेवालङ्काराणां कविसंरम्भगोचरवैदग्ध्यभङ्गीभणितेः स्वभावत्वख्यापनाय **वक्रोक्तिजीवित**काराभिप्रायेण प्रथमं वक्रोक्तिं[2] लक्षयति । यदाह 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृति'रिति ( भा का १।३६ ) तत्राभिधेयस्य शब्दस्य च वक्रता लोकोत्तीर्णेन रूपेण यदवस्थानं लोकोत्तरतया चातिशयः । अतोऽतिशयोक्तिः सर्वालङ्कारसामान्यरूपेति यदत्र भामहेनापि वक्रोक्तेः सर्वत्र प्राणितमिति व्यवस्थापितम् । यदस्य सामान्यरूपस्यापि विशेषप्रतिपत्तय ( 157b )र्थमाह—**यदुक्त**मिति वाक्यमर्थेन स्वरूपं **श्लेषेण काक्वे**ति ततो नामेति । अन्यथाऽन्याभिधेयाभिप्रायेण केनचिदुक्तं यदन्येन वक्त्रा श्लेषवलात् काकुमाहात्म्याद्वा वागर्थघटनया योज्यते तदुक्तिर्वक्रोक्तिरिति । तत्र श्लेषवक्रोक्तिः सभङ्गाभङ्गश्लेषभेदाद्द्विविधा । **नारीणा**मित्यादि—नारीणां स्त्रीणां, पदभङ्गेन न अरीणामित्यन्यथायोजनं कृत्वा तदुत्तरं आह **जानासि कश्चेतन** इति । एवं **वामाना**मननुकूलानां,स्त्रीणामिति च । हितं करोति कृन्तति चेति च **हितकृत्**, करोति

---

1. एतच्च कण्ठाभरणकारं भोजं तदनुसारिणो रत्नापणालङ्कारकारादींश्चानुसृत्य संज्ञाभेदकल्पनम् ।
2. वक्रोक्तिजीवितकाराभिप्रायेणोत्क्रम पदविन्यासः । सैषा सर्वत्र वक्रोक्तिरिति भामहनिर्देशमनुसृत्य सालङ्कारस्यैव काव्यत्ववादिना कुन्तकेन '' अलङ्कृतिः ।

युक्तं किं हितकर्तन ननु वलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेद विधातु कुतः ॥३४५॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥३४६॥

काक्वा यथा—

गुरुपरतन्त्रतया वत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ ॥३४७॥

**वर्णसाम्यमनुप्रासः**

---

कृन्तत्यो क्विपि तुल्यरूपत्वात्। अवलानां वनितानां दुर्बलानाञ्च। **बलाभावेन प्रसिद्धात्मा** दुर्बल, बलस्य दैत्यस्याभावेन विनाशेन प्रसिद्धात्मा शक्र। **मतमभिमतम्। कुत** पृथ्वीतश्च। अहो इत्यादि—दारुणा क्रूरा बुद्धिस्तव **केनेदृशी निर्मितेत्युक्ते, दारुणा** केन इति तृतीया परतया बुद्धा प्राह **त्रिगुणेति।** सत्त्वरजस्तमोलक्षणगुणत्रयात्मिका बुद्धिर्न पुन क्वचिद्दारु-**मयीति।** अतो नेयं दारुणा करणभूतेन निर्मितेत्यर्थ। **गुर्वित्यादि—नैष्यतीति** निषेध परत्वेन नायिका, काक्वैष्यत्येवेत्यर्थं सख्या प्रतिवचने। अयमलङ्कारमार्गक्रम पद्यवद् गद्येऽपि द्रष्टव्य।

अथावृत्तिनिबन्धनेऽलङ्कारे लक्षयितव्ये वर्णमात्रावृत्तिनिबन्धनतया रसानुगुणत्वेनान्तरङ्ग-त्वाच्च यमकात् प्रथम[3]मनुप्रास लक्षयति (१५८३) **वर्णसाम्यमिति।** एकवर्णकृतेनापि साम्येनायमिष्यत इति समासेन निर्देश। वर्णाश्च यद्यपि स्वरा व्यञ्जनानि च तथापि

---

वक्रोक्तिरेव वैदग्धीभङ्गीभणितिरुच्यते इति वैदग्ध्यपुर सरत्वख्यापनेनार्थनिवचनं कृतम्। कुन्तकात् प्राचीनाइन पदस्य रूढित्वेन-प्रधानत्वश्लेषकाकुभिर्द्वैविध्यदृष्टेऽङ्ग-नियमन च रुद्रटादिनिबन्धेषु दृष्ट कविसम्प्रदायशैलीस्वीकारपरं बोद्धव्यम्। काकु वक्रोक्तिस्तावदलङ्कारतया सर्वै न स्वीक्रियते तस्य पाठधर्मत्वात्, मुनिप्रतिपादितदिशा काकोरेव विच्छित्तिनिदानत्वात्, काको प्रकारसम्पादकस्यालङ्कारताव्यपदेशे प्रयोजकत्वाभावाच्च। 'पद्यवत् गद्येऽप्यय द्रष्टव्य' इति टीकाकृत स्वरससूचन कादम्बर्यादिगद्यकाव्ये सखीवचनप्रतिवचनादिकृता विच्छित्तिमङ्गीकृत्य प्रवृत्तम्।

3 'यमकात् प्रथम मिति सतात्पर्यं सूचन प्राचीनैर्भरतादिभिस्तदनुसारिभिर्वामनाद्यैश्च मुख्यतया यमकस्य स्वीकारानिर्देशो वेति कृत्वा।

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

छेकवृत्तिगतो द्विधा।

छेका विदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः, 'गत' इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किं तयोः स्वरूपमित्याह—

सोऽनेकस्य सकृत् पूर्वः

अनेकस्यार्थाद् व्यञ्जनस्य सकृदेकवार सादृश्यं छेकानुप्रासः। उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्। ३४८॥

(का मी ६७ पृ०)

एकस्याप्यसकृत् परः ॥७९॥

---

स्वरसाम्यमचारुत्वान्न गण्यत इत्याह व्यञ्जनसदृशत्वमिति। अर्थैरपेक्षया शब्दालङ्कारता स्फुटैव। अन्वर्थतां दर्शयति रसादीति—अनुशब्दोऽनुगमार्थः। अनुगमश्च रसबन्धाभिनिवेशिनः कवेश्चेतसि प्रयत्नान्तरं विना स्वयमेवाग्रहपूर्विकाया अनुप्रवेशात्[4]। एवं 'प्र' शब्दः प्रकर्षार्थः। प्रकर्षोऽपि पूर्ववर्णजात्यनुगमेन सहृदयहृदयावर्जनरूपो द्रष्टव्यः।

छेकवृत्तिगतो द्विधेति सूत्रप्रतीकं व्याचष्टे छेका विदग्धा इति। आलयवर्तिनः पक्षिणश्छेकास्तेषामविरतप्रौढत्वादित्यर्थः। सोऽनेकस्य सकृत् पूर्वः एकस्याप्यसकृत्

---

4 अनादिकालतो वाल्मीकिकालिदासादिकविपरम्परावाहिनि काव्यसंसारे सहृदयहृदयसंवादिन्या उपमाया इवास्यालङ्कारस्य साम्राज्यं स्वतःसिद्धमिति नाविदितमेव विदग्धानाम्। तेषु च रसाद्यनुगतत्वेनैव चमत्कारमहिमेति नातिरोहितं काव्यमीमांसकानाम्। 'अलङ्कारान्तराणि हि रसबन्धाहितचेतसः प्रतिभानवतः कवेरहम्पूर्विकया परापतन्ती'ति ध्वन्यालोकसन्दर्भस्यानुरणनप्राय टीकाकृन्मन्तव्यं 'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्। अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः' इति तत्रैव प्रतिष्ठापितस्य मूलीभूततत्त्वस्य निदर्शनपरं सूत्रमप्याश्रयति।

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥३३५॥

(कु म. १०२)

केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भीगौडीपाञ्चाल्याख्या रीतय उच्यन्ते ।

---

दीप्तमसृणमध्यवर्णवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रय-सम्पादनार्थं तिस्रोऽनुप्रासजातय एव वृत्तय[6] इत्युक्ताः, वर्तन्तेऽनुप्रासभेदा आस्विति कृत्वा । एवञ्च यद्यपि भामहादिभिर्वृत्त्यनुप्रासादिभ्यो नाभ्यधिकव्यापारा इति न पृथग्वृत्तयः कथितास्तथापि वामनादिभिः प्रयुक्तत्वाद्दर्शयति केषाञ्चिदिति[7] । भूयतेऽन्विष्यते यदि वा गम्यते महाकविपद्धतौ (159a) लाभार्थिभिरनयेति रीतिर्मार्गः, रीङ् गताविति धात्वनुसारात् । अस्याश्च विदर्भगौडपञ्चालदेशेषु तत्रत्यैः "कविभिर्यथास्वरूपमुपलभ्यत्वाद्देश-समाख्या, न पुनर्देश्यवद्देशैः किञ्चिदुपक्रियते काव्यानाम् ।" तत्र समग्रगुणोपेता वैदर्भी रीतिरिष्यते । ओजः कान्तिश्च यस्यां स्तः सा माधुर्यस्याभावादसमग्रगुणा गौडीया समास-

---

6 एताश्च सम्प्रदायभेदप्रभिन्ना भोजादीनां ग्रन्थेषु श्रुतिभिर्वृत्तिभिर्वर्णै रीतिभेद-वर्णिताभ्य कार्णाटीकौन्तलीलाटीदिसञ्ज्ञानिदर्शिताभ्यो वृत्तिजातिभ्यश्च व्यतिरिक्ता इति कुतूहलिभिराकरत एवावगन्तव्या । 'वृत्तयः काव्यमातृका' इति मुनिराह ।

7 वृत्तेर्नियतव्यापारगतरसाश्रयप्रक्रियत्वस्वीकारस्तदीयनिदर्शनैस्तद्वैविध्यप्रदर्शनादि च मूलकृतामुद्भटपक्षपातं रीतेस्तु 'केषाञ्चि'दित्यकिञ्चित्कताप्रतिपादनपरो निर्देशो वामनीयमते निन्दा च सममेव सूचयत । पर'मस्फुटस्फुरितं काव्यतत्त्व'मिति, 'वृत्तयोऽपि प्रकाशन्ते' इत्यव्यवहितकारिकाद्वयेनापक्षपातोऽत्र ध्वनिकृद्भिः सूचितः । अपरञ्च 'अस्फुटस्फुरित'मिति कारिकापदेन 'मनाक् स्फुरितमासी'दिति कृत्वा तद्विवरणेन व्याजस्तुतिरपि बोध्यते । रुद्रटेन तु रीतीनां भेदेन नामवृत्त्यन्तर्निर्दिष्टे-मोद्भटादिप्रतिपादितवृत्तीनामनुप्रासान्तर्भावेनास्य व्यापकताऽन्यस्यातथात्वञ्च कण्ठत एवोक्तम् । भोजकृते सरस्वतीकण्ठाभरणे शृङ्गारप्रकाशे चोभयोरेव वाच्यत्वं समर्थितम् । भोजप्रदर्शितनिर्वचनं श्रीधरेणोपस्थापितं 'रीङ् गता'विति सन्दर्भांशे ।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥८१॥**

शब्दगतोऽनुप्रासः । शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

**पदानां सः**

स लाटानुप्रासः । उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥३४९॥

(उ. वि. ?)

**पदस्यापि**

'अपि'शब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाऽऽकरः ।
सुधाऽऽकरः क नु पुनः कलङ्कविकलो भवेत् ॥३५०॥

**वृत्तावन्यत्र तत्र वा ।**

**नाम्नः स वृत्त्यवृत्त्योश्च**

---

बहुलाऽत्युल्वणपदा चेत्यर्थः । एवमोजःकान्त्यभावाच्छ्लथा विच्छाया च माधुर्यसौकुमार्योपपन्ना पाञ्चाली रीतिरिति ('का. अ. सू. वृ. १।२।१०-१३ ) ।

एवं वर्णानुप्रासं लक्षयित्वा शब्दानुप्रासमाह' शाब्दस्त्विति । लाटजनवल्लभत्वादित्यनेनात्युल्वणत्वादयं नान्यानुप्रासवत् सर्वेषां रञ्जक' इति दर्शयति यदाह वामनः—'उल्वणस्तु न श्रेयानि'ति (का. अ. सू. वृ. ४।१।६ ) । **तात्पर्य**मनन्यपरत्वं तदेव भिद्यतेऽत्र न पुनः शब्दार्थस्वरूपम्, अतएव यमकाद्भेदः । अयश्चोपलभ्यमानसुप्तिङन्तानां

---

8 पदानुप्रासेति तु वामनादीनां संज्ञा । पदानुप्रासेति संज्ञातो निर्दिश्यस्तस्येतरेभ्योऽनुप्रासभेदेभ्यो व्यावृत्तिसूचनार्थः । भामहवामनादयोऽपि भवैषं सिद्धान्तं प्रकटयामासुः । तथा तदनुवादिनोऽभिनवगुप्तादयो यथेतदुत्तरटिप्पण्युद्धृततद्वचनेन सूचितम् ।

9 लाटानुरागिणां राजशेखरप्रभृतीनां विशेषतः सरस्वतीकण्ठाभरणकर्त्ता नेदमादेयम् । 'यद्योनिः किल संस्कृतस्ये'त्यादि लाटदेशीयरचनाप्रशस्तिपरं पद्यमत्र स्मरणीयम् ।

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा, नाम्न प्रातिपदिकस्य, न तु पदस्य सारूप्यम्।

उदाहरणम्—

सितकरकररुचिरविभा विभाकराकार धरणिधर[10]कीर्ति ।
पौरुषकमला कमला सा च तवैवास्ति नान्यस्य ॥ (३१० श्लो)

तदेव पञ्चधा मत ॥८२॥

अर्थे सत्यर्थभिन्नाना वर्णाना सा पुन श्रुति ।

यमकम्

समरसमरसोऽय [11](३५९)मित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्ना

---

पदार्थानाम्। अनुपलभ्यमानत मात्राणा तु **समासे** ऐकपद्य सति परतन्त्र एव **भिन्ने समासे** स्वतन्त्र **समासासमासयो** स्वतन्त्रोऽस्वत त्वथेति लिधेति सूत्रकार परिगणयति।

**तदेवमिति**। **मत** इति लाटानुप्रास । स च पादयमकस्य भेदास्ते पादानुप्रासस्यापि द्रष्टव्या। तथाच पादानुप्रास पादयमकवदिति वामन[12] (का अ. सू वृ ४।१।१० )।

अथावृत्तिप्रकर्षात् यमक लक्षयति **अर्थे सतीति**। एकार्थतायामर्थपौनरुक्त्य प्रकृष्ट दोष । तात्पर्यमात्रभेदे तु लाटानुप्रासत्वेत्युक्तम् (अ स पृ २७ २८) (159b) **अर्थे भिन्नानामिति**। विभिन्नार्थता च यद्यप्यर्थसद्भाव एव सम्भवति तथापि सार्थकनिरर्थकानां

---

10 धरणीधवेति प्राचीन का प्र मातृकायामुभयत्र स्थले पाठ ।

11 मालिनीच्छन्दोबद्धस्य श्लोकस्य पादोऽय कुतोऽपि काव्यात् गृहीत स्यात्।

12 प्राचीनतमानामलङ्कारकर्ता प्र थेषु यमकस्यैव प्राधान्यम्। भरतीये नाट्यशास्त्रे शब्दालङ्कारतया यमकमेवैक परिगृहीतम्। तथा च तद्विवृतावभिनवगुप्ताचार्या तेना (यमकेना )नुप्रासलाटीयादेरनेनैवोपसग्रह इति। वामनेनापि प्राचीननयवेदिना यमकभेदाना निर्देशो यथा यत्नतो विहितस्तथा नानुप्रासस्य। तत प्राचीनतरेणाचार्यदण्डिनाऽनुप्रासस्य गुणसम्पर्कत एव वात्सय सूचयता तत्भेदप्रदर्शनव्यसने परिकरो न बद्ध । स एव भामहीय पक्ष ।

**धर्णानामिति न युज्यते वक्तुमि'त्यर्थे सती'त्युक्तम्। सेति सरो रस इत्यादि-वैलक्षण्येन तेनैव क्रमेण स्थिता।**

---

केवलनिरर्थकानामावृत्त्या च व्याप्तिमाशंक्याह **अर्थे सतीत्युक्तमित्याह**[13]। **समरे**त्यादि समरे संग्रामे तुल्यरस इति। 'शमरतेऽमरतेजसि पार्थिवे' (र. व. ६।१४) इत्युभयेषां निरर्थकत्वेऽपि द्रष्टव्यम्। एवमपि 'सरो रस' इत्यादावतिव्याप्तिरत उक्तं **सेतीति**। एवमावृत्त्या वर्णाः स्थाननियमेन यम्यन्त इति यमकमन्वर्थं[14] नाम। तथा च 'पदमनेकार्थमक्षरं वाऽऽवृत्तं स्थाननियमेन यमक'मिति ( का. अ. सू. वृ ४।१।१ ) **वामनः**।

एवं वर्णावृत्तावपि सजातीयनैरन्तर्ये एव यमकमुल्लासत इत्याशयवानाह[15] **वर्णानामिति**। कविशक्तिधानेन प्रकाशत इति तन्मात्रनिबन्धनचमत्कारास्पदत्वमलङ्कारतायां

---

13 अर्थे सतीत्यस्य भिन्नार्थत्व इति तात्पर्यम्। प्राचीनैर्भरतभामहदण्डिप्रभृतिभिर्लक्षणविधायिभिरत्र न नियमदार्ढ्यं प्रकटितम्। 'अत्र चार्थभेदो मुनिना नादृत इति तदप्रसिद्धं व्युत्पत्त्यादिना परहृदयं विदितमस्माभि'रित्यभिनवभारत्यां मतसूचनम्। भरतोदाहरणे 'दिनक्षयात् संहतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डल'-(१६।६३) मित्यादावत्र ज्ञापकम्। यद्यपि भामहलक्षणे 'भिन्नानामभिधेयै'-रिति निर्देशस्तथापि 'असौ नृपा दत्तसमस्तशासना' इत्युदाहरणे द्वितीयतृतीयचरणयोः 'शासना' इति पदस्य नार्थभेदः। दण्डिकृतलक्षणेऽप्यर्थभेदवत्त्वस्यादर्शनात् तथा काव्यादर्शे 'तव प्रिये'त्युदाहरणे (३।४१) द्वितीयचतुर्थचरणयो'र्मतये' त्यस्यार्थाभेदेन, 'मतां धुनाने'त्यादि (३।४६) पद्ये च द्वितीयतृतीयचरणयोरनुलोमतानिलोमता'पदाश्रययो'र्मते'ति च पदांशयोरर्थाभेदेनैतदेव सूचितम्। एवमेव भट्टियमके 'अवसितं हसित'मिति (१०।६) श्लोके। 'न गजा नगजा दयिता दयिता' इत्यत्र च 'मदा' इति वस्तुत एकार्थाः। एवमपि 'हुतं हुत'मिति ( १०।११ ) 'घनगिरीन्द्रे'ति (१०।११) श्लोके च द्रष्टव्यम्। अस्तार्थगतभेदवत्त्वे पदस्य सार्थकत्वादिविचारोऽस्माभिरलङ्कारमौक्तिकावल्यां ( २५७-२६५ पृ: ) सविस्तरं दर्शित इति जिज्ञासुभिस्तत एवावगन्तव्यः।

14 यमौ द्वौ समजातावुच्येते। तत्प्रतिकृतित्वाद्यमकमिति वा संज्ञा।

15 एवमेवदलङ्कारविवरणेऽभिनवभारतीमन्यः—'तेनैकस्याक्षरस्य पदस्य वा सदृशं निरन्तरं सान्तरं वा शोभाजनकमलङ्कारो यथा मुक्ताफलस्योचितमुक्ताफलान्तरं

पादतद्भागवृत्ति तद्यात्येनकताम् ॥८३॥

प्रथमो द्वितीयादौ(३) द्वितीयस्तृतीयादौ(२), तृतीयश्चतुर्थे(१), प्रथमस्त्रिष्वपीति(१) सप्त। प्रथमो द्वितीये तृतीयश्चतुर्थे इति, प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वे। तदेव पादाना नवभेदत्वम्।[16] अर्धावृत्ति॰ श्लोकावृत्तिश्चेति द्वे। द्विधा विभक्ते पादे प्रथमादिपादादिभाग पूर्ववद्द्वितीयादिपादादिभागेष्वन्तभागोऽन्तभागेष्विति विंशतिर्भेदा॰। श्लोकान्तरे हि न भागावृत्ति॰। त्रिखण्डे

---

बीजम्। बाहुल्येन छन्दोविषयत्वमवगन्तव्यम्।[17] तदुक्तम्— रु का अ ३।१) तुल्यश्रुति क्रमाणामन्यार्थाना मियस्तु वर्णानाम्। पुनरावृत्तिर्यमक प्रायश्छन्दांसि विषयोऽस्य॥ इति। तच्च समस्तपदावृत्ति तद्भागावृत्तिरूपश्चेति प्रथम द्विधा भूयो बहुप्रकारम्। तत्र पादावृत्तौ यदा प्रथमपादो द्वितीयपादेन तुल्यरूपस्तदा मुख नाम यमक, यदा तु तृतीयेन सन्दशश्चतुर्थेनावृत्तिर्नाम। एव द्वितीयपादो यदा तृतीयेन तदा गर्भश्चतुर्थेन तु सन्दष्टकम्। तृतीयस्तु यदा चतुर्थेन तदा पुच्छ। यदा त्वावृत्ति प्रथमद्वितीयतृतीयचतुर्थेषु सर्वेष्वपि पादेषु तदा पङ्क्ति —इति पादावृत्तिरूपा शुद्धभेदा सप्त (रु का अ ३।३।७७)। अथ द्वौ सङ्कीर्णौ। (1602) तत्र मुखपुच्छयो सयोगे युग्मक, गर्भावृत्त्योर्योगे परिवृत्तोति (रु का अ॰ ३।१३) पादाना नवभेदत्वमित्याह—**प्रथमो द्वितीयादा**वित्यादि। अर्धावृत्तिस्तु समुद्गव श्लोकावृत्तिर्महायमकमिति द्र यमके(३।१६)। अथ पादभागावृत्तिप्रकारा कथ्यन्ते। तत्र पादे द्विधा विभक्ते विंशतिर्भेदा॰ (रु का अ ३।२१ २२)।

श्लोकावृत्तिप्रकारो भागावृत्तौ न सम्भवतीति पादावृत्तिरत् प्रथमपादार्धभागा वृत्त्या दर्शय प्रकारा। एव द्वितीयभागस्यापि दर्शेति। त्रिधा विभक्ते पादे पूर्ववत्त्रिंशत् (रु का अ ३।१८)। चतुर्धा विभक्ते चत्वारिंशदित्याह **पादे प्रथमादि**

---

पद्मरागाद्येवोपाश्रयविशेष समुचितमहामीन सत्पुरुषमध्यपतन वा सत्पुरुषान्तरस्ये ति। अत्र वर्णाना मिति बहुवचनमविवक्षित द्वयोरपि साम्ये यमकत्वप्रसिद्धे।

16 'पादेषु नवभेद'मिति क्वाचित्क पाठ।

17 प्रायश्छन्दांसि विषयोऽस्ये ति रुद्रटलक्षणे प्रायोग्रहणात् गद्यमपि क्वापीति नमिसाधुमन्तव्य सुस्थित वासवदत्ताकादम्बरीनलचम्पूवान्दवृन्दावनचम्प्वादिषु क्वचिदल्पायतनेन क्वचिद्बहुलतयाऽस्य प्रयोगदर्शनात्। यमकानां विचित्रसज्ञाभेदाश्च रुद्रटादीनां म ध्ध्वपि लक्ष्यन्ते।

विंशत्। चतुःखण्डे चत्वारिंशत्। प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगत आद्यार्धादिभागे यम्यत इत्याद्यन्वर्थताऽनुसारेणानेकभेदम्। अन्तादिकम्, आद्यन्तिकं, तत्समुच्चयः—मध्यादिकम्, आदिमध्यम्, अन्तमध्यं, मध्यान्तकं, तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत् काव्यान्तर्गड्डुभूतमिति नास्य भेदलक्षणं कृतम्।

दिङ्मात्रं चोदाह्रियते—

---

**पादादिभाग** इत्यादि। प्रथमपादगतोऽन्तोऽर्धभागो यदा द्वितीयपादगतस्यार्धभागस्यादौ यम्यते तथा तृतीयपादार्धस्यादिभूतो भागश्चतुर्थपादार्धभागस्यान्ते यम्यते तदाऽऽ**न्तादिकम्**। यदा तूभयरूपमप्येतदेकश्लोके यम्यते तदोभयस्य समुच्चयनात् समुच्चय इत्याह **प्रथमपादादिगतान्त्यार्धे**त्यादि। प्रथमपादस्य मध्ये यदा द्वितीयार्धान्तयोर्यम्यते तदा मध्यादिकं चतूरूपम्। तत्र च द्वयोस्त्रयाणां चतुर्णामपि वा प्रकाराणां समुच्चयेऽयं विधेत्याह—**समुच्चय** इति। तदमी पादभागावृत्तौ पादान्तरभागावृत्तौ प्रकाराः। यदा तु यस्यैव पादस्यादिमध्यान्तभागास्तस्मिन्नेव पादे ते परस्परं परिवृत्त्या यम्यन्ते तदा स्थाननियमेनानन्तप्रकारत्वमित्याह **तथा तस्मिन्नेव पाद** इत्यादि। अमीषां चोक्तप्रकाराणामन्यैरलङ्कारकारैः[18] कृतमपि(160b)लक्षणं नीरसत्वादत्र न कृतमित्याह **तदेतत् काव्यान्तर्गड्डुभूतमिति**। 'गड्डुः पृष्ठगुडे कुब्जे' इति कोषकारः। तत्र मुखं यथा—

चक्रन्द दतारं चक्रं दहताऽरम्। खड्गेन तवाजौ राजन्नरिनारी (स॰ कं॰ भ॰ ३१४)॥

हे राजन् तव खड्गेनारं चक्रसमूहं दहता अर शीघ्रं हताऽरिनारी चक्रन्देति। एतच्च सुगमकोदाहरणेनोपदर्शितमिति सदृशमुदाहरति ग्रन्थकारः। एवमन्यत्रापि

---

18 "कृत्वाऽर्धशश्च भागानिहापि सर्वं तथा रचयेत्" इति रुद्रटादिभिः सूचिता बहवः प्रकाराः। तथा च रुद्रट—'यमकानां गतिरेषा देशावयवानपेक्षमाणानाम्। अनियतदेशावयवं त्वपरमसंदृश्य सदेवास्ती'त्याह। देश आदिमध्यान्तलक्षणः। अवयवोऽर्धविभागादिः। एवं कृता निर्दैतेषां प्राय सर्वत्र यथाऽऽह लोल्लटः—यमकानुलोमतदितरचक्रादिभिदा हि रसविरोधिन्यः। अभिधानमात्रमेतद् गड्डलिकाऽऽदिप्रवाहो वा॥ इति।

सघारीभरणोमायमाराध्य विधुशेखरम्।
सघारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥३५२॥
( रु. का. अ. ३।४ )

ग्रन्थकर्तुरभिप्राय उन्नेयः। **सघारी**ति सतोः साध्वीर्नारीर्बिभर्ति पोषयति या उमा ता याति संभजति यस्तं विधुशेखरमाराध्य सघा अरीभाः शत्रुगजा यत्र तथाभूतो रणो यस्य तथाऽमायो मायाशून्यस्ततः पृथिवीं जय सार्वभौमो भवेति। आवृत्तिर्यथा— कलङ्कमुक्तं तनुमध्यनामिका[19] स्तनद्वयी च त्वदृते न हन्त्यतः। न याति भूतं गणने भवन्मुखे कलङ्कमुक्तं तनुमध्यनामिका॥ ( का. आ. ३।८६ )। कलमव्यक्तमधुरमुक्तं वचनम्। स्तनद्वयी च तनुमध्यस्य नामिकाऽतिगुप्तत्वात्। त्वामृते पुरुषं कं न हन्ति न वशीकरोति अपि तु सर्वमेव। अतो जितेन्द्रियेषु भवन्मुखे भवदादिके प्रथमगणनीये त्वयि सतीत्यर्थः। कलङ्कमुक्तं निर्दोषम्। भूतस्य बहुविषयत्वात्तनुमपि शरीरमधिकृत्य भूतमनामिकाऽङ्गुलिर्न याति, परस्य त्वत्सदृशस्याभावात्। निर्दोषो हि लोक ऊर्ध्वयाऽङ्गुल्या निर्दिश्यते। गर्भो यथा ( का. आ. ३।९० )—यशश्च ते दिक्षु रजश्च सैनिका वितन्वतेऽजोपम दंशितायुधा। वितन्वतेजोऽपमदं शितायुधा द्विपाश्च कुर्वन्ति कुलं तरस्विनः॥ अजः स्वयम्भूस्तत्सदृशोत्यामन्त्रणे। तव सैनिका दंशितायुधाः क्वचितायुधा युधा संग्रामेण(१६१a)करणभूतेन यशो रजश्च वितन्वते। वितनु विशेषेण सूक्ष्ममतेजस्तेजोरहितमपगतमदं द्विपा च कुलं शितायुधास्तरस्विनः कुर्वन्ति। संदष्टकं यथा— (का. आ. ३।९१) बिभर्ति भूमेर्वलयं भुजेन ते भुजङ्गमोऽमा स्मरतो मदञ्चितम्। शृणुक्तमेकं स्वयमेव भूधरं भुजङ्गमो मा स्मरतो मदञ्चितम्॥ ते तव भुजेन अमा सह भुजङ्गमः शेषाह्वयो भूमेर्वलयं बिभर्ति। मत् मत्तः शास्त्रादिकं स्मरतः सकाशादुक्तमेकमखिलं पूजित शृणु। किं तदित्याह स्वयमात्मीयं भूधरमवेत्य मदीयबलेन सेयं पृथिवी धार्यत इति मत्वा रतः सन् चित्तमुपचितं मदं मा स्म गम। पुच्छो यथा—स्मरानलो मानविवर्धितो यः स निर्वृतिन्ते किमपाकरोति। समन्ततस्तामरसेक्षणे न समन्ततस्तामरसे क्षणेन॥

---

19 'क' पुस्तके पादयो विभज्यान्वयमुखेन श्लोकोदृतिर्दृश्यते। अत्र 'हन्त्यत' इत्यत्र पूर्वार्धात् 'अत' इति पदस्योत्तरार्धेनान्वये कर्तव्येऽर्धान्तरैकपदता दोष। स च दुष्करयमकनिर्वर्तनव्याजेन कथमपि सोढव्य.। उत्तरार्धस्यानुरूपं पद्यं— 'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा। अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूवे'ति।

विनाऽयमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥३५३॥
(द. का. अ ३।१८)

(का.आ. ३।६२)। अरमे नीरदे समन्ततः सर्वतः समं समकालं ततो विस्तीर्णः स्मराग्निर्मीन-विवर्धितस्ते यः स निर्वृतिं तद्रूपेण किं नापाकरोति अपि तु निर्वृतिमपाकरोत्येव।[20] पङ्क्ति-र्यथा—(का. आ. ३।७१) समान या समाऽनया समानयासमानया। समानया स माऽनया समानयासमानया॥ हे समान नयस्य या स्त्री समा सदृशी प्राणसमा वा अनया नयरहिताऽविनयवतीति यावत्। यसन यास-, समानौ यासमानौ यस्यास्तथाभूतया। समानया पूजासहितया स त्वं मा माम् अनया एतया समानय सङ्गमय असमानया अनुपमया।[21] पादत्रयावृत्तिरूपन्तु यमक नातिसुन्दरमिति (16 ।b) महाकविभिरनादृतं प्राक्तनैरलङ्कारकारैरपि बहुभिरुपेक्षितमिति नेह वितन्यते[22]। युग्मकं यथा **विनेति—विना** अयम् **एनः** अपराध **नयता** स्वस्थानं प्रापयता **असुखादिना** प्राणगञ्जकेण **विना** विहगपुरुष. **यमेन**ान्तकेन **ऊनयता** हानिं कुर्वता **सुखादिना** सुखमत्ति भक्षयति यस्तेन **महाजन** उत्तमपुरुषः **अदीयत** अपखण्डयत **मानसात्** चित्तात् अरं द्रुतम् [**महाजनोदी**] महान् उत्सवान् अजन्ति क्षपयन्ति ये दुर्जनास्तान् नुदति य. **यतमानानामुद्युक्तानां सादम्**अवसाद **राति** ददाति। यमेन नयता मानसादखण्डयतेति सम्बन्ध.। परिवृत्तिर्यथा (का. आ. ३।२६)—कलापिनां चारुतयोपयान्ति वृन्दानि लापोढघनागमानाम्। वृन्दानिला-पोढघनागमाना कलापिनां चारुतयोऽपयान्ति॥ के पानीये लपनशीला हसास्तेषां वृन्दानि

20 तस्मात् सङ्गम्यतां प्रियेण, किमनेन दग्धमानेनेति शेष।

21 श्लोकस्यास्य पदक्रमेण शब्दानां व्याख्यानमेषु। इयमेव यमकव्याख्याने सरला शैली।

22 सरस्वतीकण्ठाभरणकारेणापि 'करेण ते रणेष्वन्तकरेण द्विषतां हताः। करेणव-स्तरदक्ता भान्ति सान्ध्यघना इवे'ति काव्यादर्शीयमुदाहरणमुद्धृत्य 'अस्यापि नाति-मधुरः प्रयोग इति विशेषभेदा नोदाह्रियन्त' इत्येतावता निरस्तम्। मम्मटेन त्वत्र दशमोल्लासेऽलङ्कारदोषविवेचनप्रसङ्गे यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्व दोषः यथा 'भुजङ्गमस्येव मणि. सदम्भा' इत्याद्युदाहृतम्। 'यमकन्तु विपातव्य न कदाचिदपि त्रिपादि'त्यलङ्कारकाराणां निर्देशः।

स त्वारं भरतोऽवद्यमवलं विततारवम्।
सर्वदा रणमानैषीदवानलसमस्थितः ॥३५४॥ (रु. का. अ. ३।१८)
सत्वारम्भरतोऽवद्यमवलम्बिततारवम्।
सर्वदारणमानैषी दवानलसमस्थितः ॥३५५॥ (रु. का. अ. ३।१९)
अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।
या च मातेव भजते प्रणते मानवे दयाम् ॥३५६॥ (दे. श. १)

चाहतयोऽपयान्ति सङ्गच्छन्ते, लापेन परस्परसंलापमालेखोऽ. आप्तो घनो निरन्तर आगम आगमनं येषां, शून्दानिलो वात्या तेनापोढा निरस्ता घनाना आगमा यैस्तेषां कलापिनां मयूराणां च आहतय. समन्तत. केका अपयान्ति अवगच्छन्ति। समुद्गकं यथा—अनेकपादभ्रमदभ्रसालं मान्येदृशाभीरुपतत्त्रिकूटम्। अनेकपादभ्रमदभ्रमालं मान्ये दृशा भीरु पतत्त्रिकूटम् ॥ (स. क. आ. १८७ पृ) अनेकेषु पादेषु प्रत्यन्तपर्वतेषु भ्रमन्त्यभ्राणि मेघा एव सालो वरणः प्राकारो यत्र। (1622)मान्याः पूजार्हा ईदृशा यथा दृश्यन्ते तथैव मनोहारिण. अभीरवो भयरहिताः पतत्त्रिकूटा. पतत्त्रिसंघा यत्र। अनेकपा हस्तिनस्तेषामदभ्र उत्कटो यो मदस्तं भरन्ति धारयन्तीति मूलविभुजादित्वात् कः (पा ३।२।५)। अनेकपादभ्रमदभ्रा साला वृक्षा यत्र। मान शृङ्गारभावस्तदर्हा मान्या। मान्ये भीर्विति सम्बोधनद्वयम्। दृशा [ नयनेन ] त्रिकूटं पर्वतम् आलोकयेति शेषः।

महायमकं[23] यथा—स त्वारमिति। स तु महापुरुष आरं शत्रुसमूहं भरतः भरात् अवद्यं वशेऽवर्तमानम् अवलं बलरहित विततारवं दीर्घाक्रन्दं सर्वदा सर्वकालं रणं संग्राममानैषीत् प्रापयामास। अवान् अलसम् अस्थितः अपि तु त्वरितं गच्छन्। यद्वा अस्थितः अस्थिनो तस्यानि उपक्षिणोतोत्यस्थितः, अत्र 'आर्द्र-सन्तस्य चाधातो'रिति (पा. ६।४।१४) निषेधात् दीर्घत्वाभावः। सत्त्वेति—सत्त्वेन य आरम्भास्तद्रतः अवद्यं सर्वदाऽवलम्बितमाश्रितं तारवं तरुत्वग्वसनं येन तथाभूत सर्वेषां दारणो यो मानस्तमिच्छति दवानलेन दवाग्निना समं स्थितं यस्येति। एवं पादावृत्त्यैव पादार्धादिमध्यादिवृत्तिः। त्रिप्रकाराणामपि महायमकं वर्जयित्वा व्यपेताव्यपेतत्वेनोदाहरणानि द्रष्टव्यानि। तत्र व्यपेतं संदष्टकं यथा अनन्तेत्यादि। अनन्तो विष्णुस्तस्य महिमा माहात्म्यं तेन व्याप्तम्, अनन्तैर्महिमभिर्व्याप्तं वा विश्वं

23 शब्दश्लेषादस्य महायमकस्यायं विशेषो यत्तत्रैकेनैव प्रयत्नेन वाक्यद्वयमुच्चार्यते, इह तु द्वाभ्यामिति नमिसाधुमन्तव्यमत्रोपयोगि।

यदानतोऽयदानतो नयात्ययं न यात्ययम्।
शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम् ॥३५७॥ (दे श. ४६)
सरस्वति! प्रसाद मे स्थितिं चित्तसरस्वति।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति! ॥३५८॥ (दे श ५०)
ससार साकं दर्पेण कन्दर्पेण ससारसा।
शरं नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥३५९॥ (रु का अ ३१३५)
मधुपराजिपराजितमानिनीजनमनःसुमन सुरभिश्रियम्।
अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत् ॥३६०॥ (रु वि ३।५७)
एव वैचित्र्यसहस्रैः स्थितमन्यदप्युन्नेयम्।

---

यथेति **वेधाः** प्रजापति **न वेद** वेत्ति **यां,** स एव चेत जानाति तदाऽन्यस्य सम्भावनाऽपि नास्तीति। **या च मातेव प्रणते** प्रह्वे **मानवे** पुरुषे **दयां** कृपा **भजते** पोषयतीति। (162b)आद्यन्तयमक व्यपेत यथा—**यदानत इति** यस्या आनतः प्राणात अयस्य शुभावहस्य विधेर्दानाद्यस्य अत्ययं **न याति** गच्छत्यय पुरुष। शिवमीहित यस्या **शिवे** हरे **हितामनुकूला स्मरेण** कामेन **अमिताम**विच्छिन्नाम्। अव्यपेत यथा—**सरस्वती**त्यादि—**हे सरस्वति** वागीश्वरि **प्रसादं** प्रीति **सर** गच्छ। **सु** सुष्ठु [ **अति** ] अतिशयेन च। तथा **मे** मम **चित्तसरस्वति** मन समुद्रे **स्थितिं** पद **कुरु**। **क्षेत्रं** शरीरमेव **कुरुक्षेत्रं** तत्र **सरस्वत्या**ख्ये नदीशरीरे नित्यावस्थानात् सरस्वतीनदीसादृश्येनामन्त्रणम्।

समस्ताऽन्तादियोगादर्धपरिवृत्तिर्यथा **ससारे**त्यादि—**ससार** प्रसृता **साकं** सार्ध **दर्पेण कन्दर्पेण** कामेन च **ससारसा** सह सारसै पक्षिविशेषैर्वर्तते या सा। **शर** काण्ड **विभ्राणा** धारयन्ती, **नवानि** प्रनासि शब्दानि यस्या सा **नवानाः**। **नाविभ्राणा** वीणां भ्राण शब्द सोऽविद्यमानो यस्या, न तथाभूता, अपि तु पक्षिशब्द-युक्ता। **शरत्** ऋतुविशेष **नवा** नूतना। मध्ययमक यथा **मधुपेति**—'भ्रमरराज्या परिभूत **मानिनीजनस्य** मनो याभिस्तथाभूता या **सुमनसः** पुष्पाणि तासा सौगन्ध्यलक्ष्मीं[24]

---

24 एवमपि रुचकमनुसृत्य बृहत्सङ्केतकार सोमेश्वर। पर 'स सुरभि सुरभि सुमनोभरै'रिति माघयमक इनात प्रस्तुते वसन्तवर्णने सुरभेर्वसन्तस्य शोभामिति मनोज्ञतर व्याख्यानम्।

वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृश ।
श्लिष्यन्ति शब्दा श्लेषोऽसावक्षरादिभिरष्टधा ॥८४॥

अर्थभेदेन शब्दभेद' इति दर्शने 'काव्यमार्गे स्वरो न गण्यते इति च नये

---

जगत कर्तृ अभूत। **वारितो वारिजे** एव विप्लुरो यत्र। **स्फुटितानि** विकशितानि **ताम्राणि** लोहितानि **ततानि** विस्तृतानि **आभरणानि** यत्र' (रु स ५६ पृ)। **अन्यदिति** यथा—विविधधववना नागगर्द्दनानाविविततगगनाऽनाममज्जनाऽना। शशरुरुललना नावबन्धु धुनाना मम हि हिततनाऽनाननखस्वनाना ॥ (का श्रा सू वृ ४।१।२)। विविधानि धवानां वनानि यस्यां नागान् हस्तिनो गृध्यन्ति (?) ये ऋद्धा महान्तो नाना प्रकारा नय पक्षिणो व्यालादयस्तैर्विततं व्याप्तं गगनं यस्याम्। अनामेन अनमनेनैव मज्जन्तो जना यत्र। अविद्यमाना नर पुरुषा यस्याम्। शशाना रुरूणाञ्च मृगभेदानां ललनं क्रीडनं यत्र। नौ आवयो। अबन्धु शत्रु [धुनाना] धुनयन्ती। मम हि यस्मात् हितं तनोति [ या ] अनाननोऽमुखो य स्वं आत्मीय स्वन स्वर स एवान प्राणो यस्या इति **हरिप्रबोधे** हरिणा हलधरं प्रति समुद्रविकटा भूर्वर्ण्यते (रु स ५७ पृ)। अनया वर्णयमकमालया पदयमकमालाऽपि व्याख्याता (का श्र सू वृ १।४।२)।

आवृत्तिवैपरीत्याद् यमकानन्तर श्लेषमाह **वाच्येति**। इहानेकार्थस्य युगपद्विवक्षायां द्वयी गति। अर्थभेदेन शब्दा भिद्यन्ते न वेति। तत्राद्य एव दर्शने एतत् सम्भवतीत्याह[25] **अर्थभेदेनेति**। *यद्यपि शब्दस्य प्रतीतानेकत्वावशाद्यावनास्ति शब्दभेद* शब्दार्थयोस्तादात्म्यमिति न विरोधाद्बाधितमेव तथापि शब्द्यते प्रतिपाद्यतेऽनेनार्थ इत्यानुपूर्वीविशेषविशिष्टवर्णसमूहलक्षणस्य शब्दस्यार्थभेदेन प्रतिपादकत्वोपाधिवशादौपाधिकं भिन्नत्वमिति भाव। तथा च वैयाकरणा त्रिधा शब्दा भिद्यन्ते रूपत स्वरूपतोऽर्थतश्च त्याहु। एवमपि स्वरभेदेन भिन्नप्रयत्नोच्चार्यत्वाद्युगपदुच्चारणमनुपपन्नमित्यत आह **काव्यमार्गे**

---

25 भट्टोद्भटसिद्धा ते तथैव परिग्रह। एवमेव श्लेषालङ्कारस्य सम्भावना नान्यस्य। उद्धृतवैयाकरणनयेनाप्यस्यैवावसर। रूपभेदत्वे न श्लेषस्योत्थापना। स्वरभेदपक्षस्तु *काव्यमार्गे स्वरो न गण्यते इति प्रतिषिद्ध*। यत्तु द्वितीयोल्लास टीकायां काव्यमार्गे प्रधानतो नाटकादिदृश्यकाव्ये टीकाकृतोदात्तादिस्वरभेद स्वीकारपक्ष रितस्तेन नालङ्कारसम्भावना गतार्था। एतादृश स्वरभेद पाठधर्मो न सन्दर्भधर्म नापि तेन काव्यशोभाकरता काचित् न पाठधर्मा सर्वेतादृष्टे रिति वामनमतस्य ज्ञापकत्वात्। काकादिस्वराणां तु वस्तुस्वभावेनैवार्थान्तर-

वाच्यभेदेन भिन्ना अपि शब्दा यद् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूप-मपह्नुवते स श्लेषः। स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा।

क्रमेणोदाहरणम्—

> अलङ्कारः शङ्काकरनरकपालं परिजनो
> विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः।
> अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
> र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥३६१॥

( सु.र.को. १३४४ )

---

इति। एवञ्च यद्यप्येकवक्तृकत्वादुच्चारणस्यैक्यं तथापि विषयाधीनभेदेन तस्य भेदाद्वस्याप्यने-नास्याः क्रियाया एककालाभि-(163b) सम्बन्धः सम्भवतीत्यभिप्रेत्याह **युगपदुच्चारणेनेति**। **श्लिष्यन्तीति** व्याचष्टे **भिन्नं स्वरूपमपह्नुवत** इति। तदयमर्थः। समानरूपानेकशब्द-प्रतिपत्त्यनुकूलेनैकेन प्रयत्नादिरूपेण व्यापारेण यत्र तदर्थक्रियाकारित्वाद्भिन्ना अपि शब्दा एक-रूपतया प्रतिभासन्ते स श्लेष इति। अयञ्चाक्षरादिभेदादष्टधा। अक्षरादीनि दर्शयति **वर्णेत्यादि**। तत्र प्रत्ययग्रहणेनैव लब्धे विभक्तिपदस्य पुनरुपादानं विशेषतश्चारुत्वातिशय-प्रकाशनार्थम्। तत्र विभक्त्यादिवशाद्यत्र भिन्नानां वर्णानामैकरूप्यं स वर्णश्लेषः। **अलङ्कार** इत्यादि—अलङ्कारः शङ्काकरनरकपालमिति विधेयाविमर्शता चिन्त्या। **विधाविति**—अत्र विधुर्विधिश्चेत्युकारेकारयोः सप्तमीवशात् सारूप्यम्। एवं प्रत्यर्थ-वर्णान्तरवशादपि[26] द्रष्टव्यम्। पदश्लेषे स्वस्यान्तर्भावः कैश्चिदुक्तः, स्थूलदृशा वर्णभेदा-

---

प्रतिपादनम्। न तु तत्र दृष्टौ दर्शितः स्वरूपापह्नवरूपो विच्छित्त्युपादानक' श्लेष इति सम्प्रदायविदां व्यवस्था। उद्भटमते यः अन्यकाव्येऽपि स्वरभेदो वैयाकरणसिद्धान्ततः समर्थनीयस्तथा तदानुपङ्क्तिक उच्चारणे यः प्रयत्नभेदः सोऽप्यु-पादीयते। 'सुश्लिष्टक्लिष्टविविधपदसन्धी'ति व्याकृते रुद्रटलक्षणे 'युगपद्भाषण-स्पृश' इत्यस्य मम्मटलक्षणस्य सूचनम्। रुद्रटदर्शिता भेदप्रकारा एवात्रानुसृता इति मम्मटस्वीकृतो नवमभेदः 'व्यापित्व शब्दमात्र' सामान्यमिहापि सम्भवत' इत्यत्र गृहीतः। शब्दार्थालङ्कारविवेके रुद्रटमतन्तु विभिन्नमेव।

26 'वर्णान्तररूपादपी'ति 'ख' पुस्तके पाठः।

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ( ३०२ श्लोः )

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥३६२॥

( व्य. वि. २।६२, ३६२ पृ. )

एवं वचनश्लेषोऽपि ।

महदे सुरसंधम्मे तमवसमासंगमागमाहरणे ।
हरबहु ! सरणं तं चित्तमोहमवसरउ मे सहसा ॥३६३॥

( गा. स. वे. ६६१ )

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥३६४॥

---

देवार्थभेदात् तद्व्यतिरिक्तस्य प्रकृतिप्रत्ययभागस्य [च] साधारण्यात् । यत्र तु पदभङ्गे विभक्तियोगसमासयोगो विभक्तौ भवतः स पदश्लेषः—यथा **पृथुकार्तस्वरपात्र**मित्यादि प्राग्व्याख्यातमेव (७म उः २४३ पृः) । 'स्त्रीनपुंसकानां शब्दानां यत्र यत्र वचनलुप्तवद्दीर्घत्व-समासैः सारूप्यं स लिङ्गश्लेषो यथा भक्तीत्यादि । **नीतेहितप्राप्तये** इति च **महानिधी** इति च वचनश्लेषोऽपी'ति ( ह. सं. ५७पृः ) । **महानिधि**स्ततो **रसिकता**मिति सन्धेः 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा. ६।३।१११) इति (१८।१३) दीर्घत्वे रूपं स्फुटमेव । एवं **कुरुता**मित्यात्मनेपदे तामिति भ्रेरन्त्यादेशे च तुल्यं रूपम् । **वचनश्लेषोऽपी**ति द्विवचनैकवचनयोः । सारूप्याद्यत्र भिन्नभाषाणां वाक्यानि यावदर्थमुच्चार्यन्ते स भाषाश्लेषो यथा—**महदे** इत्यादि । '**महदे** उत्सवदे **सुरसन्ध**' सुरैः सन्धानं यत्र मे मम तमु अव रक्ष । **समासङ्गम् आगमाहरणे** आम्नायस्वीकारे. हर निवारय बहु प्रभूतं सरणं प्रसरणं यत्र तम् । **चित्तस मोह**मज्ञानं, अवसरे काले, उमे गौरि, **सहसा** झगित्येव । अन्योऽर्थः—मम देहि रसं धर्मे तमोवशामाशां गमागमात् संसारात् हर नः हरवधु शम्भुपत्नि शरणं त्वं चित्तमोहः अपसरतु मे सहसा बलेन' ( ह. सं. ५७ पृः ) । प्रत्ययागमोपपदैरैर्यत्र भिन्नानां प्रकृतीनां सारूप्यं स प्रकृतिश्लेषो यथा—**अय**मित्यादि ।

सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम् ॥३६६॥

भेदाभावात् प्रकृत्यादेर्भेदोऽपि नवमो भवेत्।

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—

योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥३६७॥

अत्र प्रकरणादिनियमाभावाद् द्वावप्यर्थौ वाच्यौ।

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसम्पत्सहस्रम्।
प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥३६८॥

---

अत्र **वक्ष्यतीति** धारयिष्यति स्पर्धिष्यति चेति बहिवच्यो इलाम्। **कृदिति** कृन्तति करोति चेति प्रकृतिश्लेषः।

प्रकृतिप्रत्ययसमुदायानां भिन्नानां यत्र प्रत्ययतः साम्यं स प्रत्ययश्लेषो यथा **रजनीत्यादि**। **पादेनेत्यादिना सहस्र**पर्यन्तेन क्रियाविशेषणम्। **स्यां** स्यादिति च नन्दयतीति **नन्दिता** नन्दिनो गणविशेषस्य भाव इति च तद्धितकृत्प्रत्यययोः' (इ. स. ५७ पृ.)। तत्र तु नन्दिता नन्दनं स्यां सा चोचिता रुचिस्तया स्यादिति सम्बन्धः। तृन्प्रत्यये तु अहमुचितरुचिः स्यां नन्दिता मम स्यादिति। यत्र सुपां तिङां वा मिथः साम्यं (164b) स विभक्तिश्लेषो यथा **सर्वस्वमित्यादि**। 'हे **हर त्वं सर्वस्य सर्वस्वं**, त्वं भवः संसारस्तस्य **च्छेदे तत्परः** मुक्तिप्रदः **नयोपकारयोः साम्मुख्यं** शरीरवर्तनमायासि प्रागच्छसि। अपरोऽर्थः—हर अपहर भव सम्पदस्तु नय निवारय आयासि खेदकारि वर्तनं वृत्तिं तनु विस्तारय। अत्र सुप्तिङोः प्रकरणादिनाऽनियमेन श्लेषो न तु शब्दशक्तिमूलो ध्वनिः' (इ. सं. ५८ पृ.)।

नवमः श्लेषप्रकारो यथा—**य इत्यादि**। 'अत्र **गोत्र**शब्दः कुलपर्वतयोः, पक्षा वर्गाः पतत्राणि च। क्षणः उत्सवः, **शतकोटिदः** शतं कोटीर्ददातीति यः, शतकोटिना वज्रेण द्यति खण्डयति च **विबुधाः** पण्डिता देवाश्च' (इ. सं. ५८ पृ.)। अत्रापि न प्रकरणादिकं नियामकमस्ति येन ध्वनिसम्भावना स्यादिति।

नतु स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्याणां तदभावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालङ्कारमध्ये गणितोऽन्यैरिति कथमयं शब्दालङ्कार उच्यते ? उच्यते"। इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभाग सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते। तथाहि—

---

अथ परमत निराचिकीर्षुराशङ्कते नन्विति—इह केचिदुदात्तादिस्वरभेदात् प्रयत्नादिभेदाद् युगपत् प्रयोक्तु न शक्यन्ते परस्परच्छायाऽनुकारिणश्च भवन्ति तद्विषयोऽर्थभेदेन कृतोऽर्थश्लेष. 'अर्थभेदेन शब्दभेदा'दिति, शब्दान्यत्वे शब्दश्लेषो यत्र प्रायेण पदभङ्गा भवन्ति। केचित् पुनरुदात्तादिस्वरैक्यात् प्रयत्नादिसाम्याच्च तन्त्रेण प्रयोक्तु शक्यन्ते। तदुक्तं सभङ्गपदत्व नास्तीत्येतद् लगतफलद्वयन्यायेनार्थद्वयस्य शब्दश्लिष्टत्वादर्थश्लेष सङ्कलनया तूभयश्लेषो यथा रक्तच्छदत्व विकचा वहन्तो नाल जले सङ्गतमादधाना। निरस्य पुष्पेषु (१६५३) रुचि समग्रां पद्मा विरेजुः श्रमणा यथैव॥ अत्र रक्तच्छदत्वमित्यादावर्थश्लेष, नालमित्यादौ शब्दश्लेष, उभयघटनायान्तूभयश्लेष '(अ स श्लेष प्र)। एष च नाप्राप्तेषूपमादिष्वारभ्यमाणस्तत्स्वद्बाधकत्वात्तत्प्रतिभामुत्पादयति। न त्वत्रोपमादयोऽलङ्कारा, अन्यत्र लब्धसत्त्वाकत्वात् यथा स्वयञ्च त्यादि—न केवल हिमादेस्तथाभूतस्य त्व सुता यावत् स्वयमेवभूतेति च शब्द। गौरीपक्षे किशलयवद्रक्ताभ्या दीप्यमानाभ्यां कराभ्यां शोभिता सुखेन फलं यत्प्राप्तु शक्यते तत लुब्धानामीहित प्रददाति। 'प्रात सन्ध्यापक्ष उज्ज्वलसूर्यमरीचिभि शोभिता स्वापफले निशान्ते यो न लुब्धस्तद्विषये हित प्रददाति। अत्र प्रथमार्धे स्वरादिसामर्थ्यादर्थश्लेषता। उत्तरार्धे तु सुबादिभेदाच्छब्दश्लेषता। तथाहि—आत्मनेपदादावेकार्थे 'थाथघञ्क्ताजबित्रकाणा'मिति (पा ६।२।१४४) सूत्रेणान्तोदात्तत्व लघुत्वयत्नतश्च। अन्तपदे थाथादिस्वरेणान्तोदात्तत्व मिति (स ह)। अत्र चोपमाप्रतिभोत्पत्तिहेतु श्लेष इति। तथाचोक्तम्— एकप्रयत्नोच्चार्याणा तच्छायां चैव बिभ्रताम्। स्वरितादिगुणैर्भिन्नैर्बन्ध श्लिष्टमिहोच्यते॥ अलङ्कारान्तरगता प्रतिभां जनयन् पदैः। द्विविधैरर्थ-

---

27 अथ हि प्राचीनायां का प्र मातृकायां पाठ। 'शब्दालङ्कार उच्यते। इदे ति प्रायिक पाठ।

कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वादिप्रौढत्वाद्युपमाऽऽदयश्च तद्भावतद्-भावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

सर्यं च पल्लवाताम्रभास्वत्करविराजिता।

इत्यभङ्गश्लेषः,

प्रभातसन्ध्येवास्वापफलल्लुब्धेहितप्रदा ॥३६८॥

(का. श्र. सा. सं. ४।२१)

इति सभङ्गश्लेषश्चे ति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्द-श्लेषत्वमुपपन्नं, न त्वाद्यस्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयः, यत्र शब्द-परिवर्तनेऽपि न श्लेषत्वखण्डना। यथा —

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।

अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥३६९॥ इति।

(प. त. १।१२० ; व. श्रा. ; सु. र. को.)

न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतु-रुपमा। तथाहि यथा 'कमलमिव मुखं मनोज्ञमेतत् कचतितरा'मित्यादौ (३७०)

---

शब्दोक्तिं च.धः श्लिष्टं [28]प्रतीयताम् ॥ (का. श्रा. सा. स. ४।२०-२१) ॥ इति। एतच्च विचार्यमाणं न युक्तमित्याह(165b)—इहेति। न हि भास्वत्करविराजितेत्यर्थ-श्लेषः, यतो वैचित्र्यमलङ्कारः, कविप्रतिभासंरम्भगोचरश्चार्थोऽलङ्कारः, लोकवदाश्रया-श्रयिभावेन तयोर्व्यवस्थितेः। न चातार्थः संरम्भगोचरः, न हि भानुदीप्यमानादिशब्द-प्रयोगेऽलङ्कारोऽस्तीति शब्दान्वयव्यतिरेकानुविधायिनोऽस्य शब्दालङ्कारत्वमेव न्याय्यमित्याह **न त्वाद्यस्येति**। अभङ्गसभङ्गकृतस्त्वनयोः शब्दश्लेषयोर्भेदः। **अर्थश्लेषस्येति यथा स्तोकेनेत्यादि**—प्रत्यन्योपचयापचययोरुद्गमानुद्गमादिशब्दपरिवर्तेऽपि तुलाकोटिखल-धर्मयोरर्थयोः श्लिष्टत्वमप्रतिहतमेव। यदप्युक्तमलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति तदपि न युक्तमित्याह **न चेति** वैपरीत्यं दर्शयति। एतदुपपादयन्नाह **तथाहीत्यादि**। एवञ्च 'पल्लवाताम्रे'त्यादौ नोपमाप्रतिभोत्पत्तिहेतु श्लेषत्वं किन्तु सङ्करत्वमेव न्याय्यम्।[29]

---

28 विशिष्टं स्वमिति ख. पु. असमीचीनः पाठः।

29 एवमन्तव्यमादिमात् राजानकतिलकक्रताद्उद्भटविवेकादुद्धृतं स्यात्। मुद्रित उद्भट-विवृतिग्रन्थेऽ-(G. O. Series) प्ययं पाठो दृश्यते। परं तस्य न संशयो-

गुणसाम्ये क्रियासाम्ये उभयसाम्ये वा उपमा, तथा 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'' इत्यादौ (३७१) शब्दमात्रसाम्येऽपि सा युक्तैव । तथाह्युक्तं रुद्रटेन

> ''स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु ।
> आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः'' ॥ इति ॥
> ( रु. का. अ. ४।३२ )

---

अथवा न्यायपरीक्षायामुपमारूपकमेव (उद्भट-(विवेक) विवृति ३६ पृः)। तथाहि श्लेषस्तावदुपमाऽऽदिव्यतिरिक्तेऽपि विषये प्राप्तप्रतिष्ठा यथा देव त्वमित्यादि। पाता रक्षिता अलं पर्याप्तं पातालं रसातलञ्च। आशाः प्रत्याशा दिशश्च। चामरस्य मरुत्, अमराणां मरुता वायूनाञ्च [भूमिः]। अत्र त्वमेव पातालमित्याकारणाथालत्वञ्चामरस्य मरुद्भूमिरित्याकारात् पौरस्त्येऽन्तरे श्लिष्टमिति वर्णश्लेषता। न चात्र श्लेषस्य पृष्ठेऽलङ्कारान्तरस्योत्थापनमस्ति। (166a) एवमुपमाऽपि यथा गुणादिसाम्ये तथा शब्दमात्रसाम्येऽपि दृश्यते। यथा सकलेत्यादि सह कलङ्केन वर्तते सकला कला यस्येति चेति। अत्रैव प्रामाणिकसम्मतिं दर्शयति तथाहीति। इहापि शब्दालङ्कारमध्ये। उदाहृतञ्च यथा—यदनेकपयोभिभुजस्तवैव सदृशोऽस्य हीनमुरतरभसः। ननु बलिजित्. कथं ते तद्मौ

---

*मुक्तेत्यन्यत्रावोचाम (*Hemacandra and the 11th century Kashmir Poeticists*) Asiatic Society Letters, Meghnad Saha Vol. 1958)। विमर्शमुपमारूपकस्य वामनपरिगृहीतस्य मम्मटमन्येऽस्वीकारादयमंशोऽस्यास्योऽनवकाशपराहतश्च। एवंविधेषु स्थलेषु मूलमातृकालिपेष्टिप्पन्यंशः किं टीकायामन्तर्भुक्तः स्याल्लिपिकरानवधानतयेति संशयो जागर्ति।

30 पद्यार्धमिदं रुद्रटीये काव्यालङ्कारेऽन्यथा पठितं दृश्यते तत्र समग्रं पद्यं 'मुखमापूर्णकपोलं मृगमदलिखितार्धपत्रलेखं ते। भाति ललाटगकनकं स्फुटलाञ्छनमिन्दुबिम्बमिवे'ति। तच्च कल्पितोपमाभेदत्वेन स्वीकृतं रुद्रटेन। अत्र पुरवर्णने तात्पर्यम्। रुद्रटकृतश्लोकस्य च्छायामवलम्ब्य राजानकतिलकेन केनाप्यनेन वा रचितमिदं स्यादिति सम्भाव्यते। हेमचन्द्रविश्वनाथादीनां *मम्मटानुसारिणां ग्रन्थेष्वपि* 'पुर'शब्ददर्शनादुद्धृते प्रघट्टके शब्दमात्रसाम्यस्य प्रकृतत्वाच्चायमेव समीचीनः कल्पः।

न च 'कमलमिव मुख'मित्यादिसाधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तं पूर्णोपमाया निर्विषयत्वापत्तेः।

देव ! त्वमेव पातालमाशानां त्वं निबन्धनम्।

त्वञ्चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥३७२॥

इत्यादिश्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति द्वयोर्योगे सङ्कर एव। उपपत्तिपर्यालोचने तु उपमाया एवायं युक्तो विषयः। अन्यथा विषयापहार एव पूर्णोपमायाः स्यात्। न च 'अविन्दुसुन्दरी नित्यं गलल्लावण्य-विन्दुके'त्यादौ (३७३) (का. प्र. सा. सं. ४।१६) विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः। न ह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः, द्वितीयस्यार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्। न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः। तस्मादेवमादौ श्लेषप्रतिभोत्पत्तिहेतु-रलङ्कारान्तरमेव। तथाच

सद्वंशमुक्तामणिः, ॥३७४॥ (उ. विवेक ?)

---

सदृशः सुराधिकृतः॥ वसुधामहित सुराजित नीरागमना भवांश्च वर्पाश्च। सुरजित-वराहवपुरस्त्र च हरेश्चोपमा घटते॥' (ह. का अ. ४।३३, ३४) इति। न च यत्र शब्द-मात्रसाम्य उपमा तत्र श्लेषत्वमिति वक्तुं युक्तं, **पूर्णोपमाया** निर्विषयत्वप्रसङ्गात्। गुणादि-सादृश्ये सा भविष्यतीति चेत्, न, अर्थविषयस्य **निर्विषयत्वापत्तेः**।

अथास्मदुपदर्शितशब्दश्लेषवदुपमाविरहितोऽर्थश्लेषस्य विषय. कल्प्यते. तद्द्वयोरप्यन्यत्र-लब्धसत्ताकयोरेकत्र सन्निपाते सङ्करत्वेव प्राप्तेति 'गुणक्रियासाम्यमुपमा' 'शब्दसाम्यन्तु श्लेष'इति विशेषणस्यानभिधानाच्छब्दसाम्यमप्युपमाया विषयः। श्लेषस्य तूपमाविरह इति 'पल्लवे'त्यादावुपमैव न्याय्या। एवञ्च 'अविन्दुसुन्दरी'त्यादौ विरोधप्रतिभोत्पत्ति-हेतुः श्लेष'इति यदुक्तं (उ. वि. ?) तदपि न सम्यगित्याह न चेति। अप्सु प्रतिबिम्बितो य इन्दुस्तद्वत् सुन्दरी नित्यञ्च गलन्तो लावण्यविन्दवो यस्याः। अविद्यमानविन्दुः कथं स-विन्दुरिति शब्दालङ्कारविरोधः, श्लेषस्य तु तेन बाधितत्वात् प्रतिभानमात्र' (166b) न तु प्ररोहः। विरोधस्याभासत्वादेवालङ्कारता, इतरथा तस्य दुष्टत्वात्। **एवमादाविति**— तत्र श्लेषप्रतिभोत्पत्तिहेतोरेकदेशविवर्ति रूपकं यथा **सद्वंशे**ति। वंशः कुलं, वंशो वेणुः,

नाल्पः कविरिव स्वल्पश्लोको देव ! महान् भवान् ॥३७५॥
अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥३७६॥
( ध्व. आ. १।१३ )

आदाय चापमचलं कृत्वाऽहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥३७७॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्वमुचितं, न तु श्लेषत्वम् ।

---

तदिह सद्वंश एव सद्वंश इत्यारोपपूर्वको मुक्तामणेरारोपः ।[31] श्लेषव्यतिरेको यथा नाल्प इत्यादि । श्लोकः पद्यं कीर्तिश्च । समासोक्तिर्यथा अनुरागेत्यादि, अनुरागः सन्ध्याऽरुणिमाऽभिलापश्च पुरोऽग्रे जगतः सरति । "यद्यपि वामनाभिप्रायेणायमाक्षेपस्तथापि भामहाभिप्रायेण[32] प्रसिद्धिं पुरस्कृत्य समासोक्तिरित्युक्तवान्" ( ध्व. आ. लोचन ३७ पृः द्रः ) । विरोधो यथा आदायेत्यादि । अचलं पर्वतं निश्चलञ्च, अहीनं सर्पराजमिनमहीनञ्च, विषमा विरूपा अस्थिरा च । अच्युतः कृष्णो गतिशून्यश्च । लक्ष्यमभाङ्क्षीदिति त्रिपुरभेदे ।[33]

---

31 अप्रसिद्धात् ग्रन्थान्तरादुद्धृतमिदं श्लोकावयवरूपं पदं वृत्तिकारशैलीविरोधितया विचित्रोत्कर्षं प्रतिभाति । मूलग्रन्थे दशमोल्लासे श्लिष्टमालापरम्परितरूपकनिदर्शने 'अलौकिकमहालोके'त्यादौ 'सद्वंशमुक्तारत्न'मिति पदमुपलभ्यते, न तु सद्वंशमुक्तामणिरिति ।

32 "यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः । सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा ॥" इति भामहलक्षणम् । "उपमानाक्षेपश्चाक्षेपः" इति वामनलक्षणम् । उपमानस्याक्षेपः प्रतिषेध इति उपमानाक्षेप इति च तत्रत्या वृत्तिः । वामनमते लोकप्रसिद्धैवत्रोपमानोपमेयता माह्या । एतच्च तत्कृतायामुपमालक्षणवृत्तौ स्पष्टम् । वस्तुतस्तत्र मम्मटाभिप्रायेणापि समासोक्तिरिति टीकाकृतां भामहवामनयोर्मतभेदवद् ध्वन्यालोकलोचनग्रन्थप्रतिध्वनित्वेनोक्तस्य कौतुकघायकत्वेनाऽथवाऽन्यत् किमपीति बहुतरग्रन्थानां लोपे वक्तुं दुष्करम् ।

33 "रथः क्षौणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति" इति महिम्नःस्तवीयपद्यस्यांशिकतः संवादोऽयं पद्यम् ।

शब्दश्लेष इति चोच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः ? किञ्च वैचित्र्यमलङ्कार इति य एव कविप्रतिभासंरम्भगोचरस्तस्यैव विचित्रतेति सैवालङ्कारभूमिः। अर्थमुखप्रेक्षित्वमेषां शब्दानामिति चेद्, अनुप्रासादीनामपि तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते ? रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वे ह्यनुप्रासादीनामलङ्कारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव स्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। "विधौ वक्रे मूर्ध्नि"त्यादौ (३६१ श्लोः) च वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतीत्येवमादि स्वयं विचार्यम्।

---

'किञ्चैकप्रयत्नोच्चार्याणा'-( का. श्रा. सा. सं. ४।८० )मित्येतत्सामर्थ्याच्छब्दानामित्यवगमने आक्षेपे भवदनुमतेऽर्थश्लेषे भवतैव शब्दानां श्लिष्टत्वाऽभ्युपगतैवेत्यर्थोक्तिविशिष्टं श्लिष्टं प्रतीयतामित्यन्त-शून्यमेव। अपरञ्च तन्मत एव दूषणमुत्पादयति। शब्दश्लेष इति चेति। तस्मादेवंविधे विषये शब्दालङ्कारत्वमेव युक्तम्।[34] अथ शब्दशक्तिमूलोऽत्रालङ्कारो न तु शब्दस्यालङ्कार इति चेदत्याह, वैचित्र्यमिति। अर्थमुखेति— एवञ्च सत्यतिप्रसङ्ग इत्याह अनुप्रासादीनामपीति। न चैषामर्थोन्मुखत्वं नास्तीति वाच्यमित्याह रसादिव्यञ्जकेत्यादि। किञ्च "शब्दार्थौ (1672) सहितौ काव्यम्" ( भा. का. अ. १।१६ )। ततोऽनयोः परस्परसव्यपेक्षयोस्तुल्यैवापेक्षेति यथा शब्ददोषादीनामर्थापेक्षयाऽर्थगतत्वं तथाऽर्थदोषादीनामपि शब्दगतत्वं प्राप्नोतीत्याह शब्दगुणेत्यादि। किञ्च यदैकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं तदाऽतिप्रसङ्ग इत्याह विधावित्यादि। स्वयं विचार्यमेतद्विद्वद्भिर्नत्व-[ स्म ] दुक्तमित्येतावतैव फणित्याश्रयणीयमित्यूहनीयमिति।[35]

---

34 अयं विचारो मूलतस्त्वाश्रयाश्रयित्वपरिवृत्तिसहत्वासहत्वयोः कतरदाश्रयणीयमित्याधित्य प्रवृत्तः। उद्भटविवेकादिमन्थकृतो राजानकतिलकाद्या रुद्रटादीना प्राचीनानां मतमनुसृत्यास्य पक्षमुपजीवन्ति। परन्तु नव्यैर्मम्मटप्रमुखैः परिवृत्तिसहत्वासहत्वपक्ष एव प्रतिष्ठापितः। स एव ध्वनिदोषगुणालङ्कारेषु सर्वत्रैवाप्रतिहतप्रसरो न्यायमूलश्चेत्याचार्यहेमचन्द्रविश्वनाथाद्यैः प्रमाणनिपुणैरलङ्कारमर्मपारीणैर्ह्यैत इति सत्यपि केषाञ्चिद्वैमत्ये नवीननये सिद्धान्तत्वेन स्वीकृतः।

35 एवं संशोधितमस्माभिरुद्भटकाव्यालङ्कारसारसङ्ग्रहोपरि विवृतिटीकास्थपाठदर्शनेन। ( G. O. S. edn. ४४ पृः )। स च पाठस्तत्र राजानकतिलककृतोद्भट-

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥८५॥**

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रं काव्यम्। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्—

मारारिशक्ररामेभमुखैरासाररंहसा।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥३७८॥
माता नतानां सङ्घट्टः श्रियां बाधितसम्भ्रमा।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽऽदिमा ॥३७९॥
(रु. का. अ. ५।६,७)

खड्गबन्धः।

---

**तच्चित्रमिति** यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशित्वे चित्रत्वं तथापि श्रोत्राकाश-समवेतवर्णात्मकशब्दभेदेन तेषां लोकप्रतीतेः शब्दाश्रयत्वम्। एतच्च बहुभिर्भेदैर्भिद्यमान-मनन्तत्वात् परिसंख्यातुमशक्यं यदाहुः—(रुद्रट का ५।२-५) चक्रकखड्गमुसलै-र्बाणासनचापशूलहलैः। चतुरङ्गपीठविरचितरथतुरगगजादिपदपाठैः॥ अनुलोमप्रति-लोमैरर्धभ्रममुरजसर्वतोभद्रैः। इत्यादिभिरन्यैरपि वस्तुविशेषाकृतिप्रभवैः॥ भेदै-र्विभिद्यमानं संख्यातुमनन्तमस्मिन्नैतदलम्। यन्नाम नाम यत्र स्यात्तदाकृतिलक्षणं मतं तस्य। तल्लक्षणमेव दृष्ट्वाऽवधार्यमखिलं ततोऽन्यदपि॥ इति। अतः शिष्यव्युत्पत्तये दिङ्मात्रमुदाहरति। "**मारारिः** परमेश्वरः, **शक्र** इन्द्रः, **रामो** हलायुधः, **इभमुखो** गणपतिः, एभिः **आसार**सदृशेन **रंहसा** वेगेन **सारम्**उत्कृष्टम् **आरब्धः** स्तवो यस्याः, **तदार्ति**-स्तेषामार्तिः **हरणे क्षमा** शक्ता **नतानां** प्रणतानां **माता श्रियां संघट्टः**, **बाधितः सम्भ्रमो** यया। **मान्या अथ** समुच्चये **रामाणां** वरवर्णिनीनां **सीमा** पर्यन्तभूः (167b) **शं** कल्याणं **मे दिश्यात्** समादिशतु **उमा** गौरी **आदिमा** सर्वप्रथमभवा। 'अनेन श्लोकद्वयेन खड्गबन्धप्रस्तारः।'[36] तथा द्वादिकाऽन्तरे 'मा'शब्दं तिर्यगधोऽधःक्रमेण

---

विवेकाद्गृहीतः स्यात्। यदि तु श्राश्रयणीयमिति पाठो मूले स्वीक्रियते तदाऽत्र टीकाकृतामाधाराधेयभावस्यालङ्कारविभागकल्पने योग्यतायामास्था सूचिता स्यात्। टीकाप्रकरणात् सा नात्यन्तसमीचीनेति प्रतिभाति। अन्यत्र च (Fol. 151b) तथैवाकूतं टीकाकृता लक्ष्यते।

36 खड्गबन्धादीनामिहोपदर्शितानां तदतिरिक्तानाञ्च चित्राणां चित्राणि रुद्रट-काव्यालङ्कारे (नि. सा. सं) सरस्वतीकण्ठाभरणे (नि. सा. सं) कविकर्ण-पूरकृतेऽलङ्कारकौस्तुभेऽस्मत्सम्पादिते कुतूहलिभिरवलोकनीयानि।

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाऽबहुलामला ॥३८०॥

( स. का. अ. ५।१३ )

मुरजबन्धः ।

भासते प्रतिभासार ! रसाभाता हताविभा ।
भावितात्मा शुभावादे देवाभा वत ते सभा ॥३८१॥

पद्मबन्धः ।

---

वर्णचतुर्दशकं धारायां न्यसेयावत्-'मा'शब्दं श्लिष्टम्. एतत्फलकम्। तस्यैव 'मा'-शब्दस्य दक्षिणपार्श्वे निष्कामकमेणाक्षरसप्तकम्. ततोऽपरपार्श्वात् 'मा'शब्दान्तिक-प्रवेशक्रमेण वर्णसप्तकम्। एषा शाखिका। ततो 'मा'-शब्दादारभ्योर्ध्वक्रमेण शान्तिकार्धं वर्णत्रयम्[37]। तदुपरि 'मा'शब्दः। तद्दक्षिणपार्श्वेऽन्यदक्षरचतुष्टयम्। अपरपार्श्वे च 'मा'शब्दान्तिकं वर्णचतुष्टयम्। एतन्मुकुलकम्। ततः श्लिष्टस्य 'मा'-शब्दस्योपरि वर्णद्वयम्। एतन्मस्तकम्। **सरलेति—बहुलारम्भः तरलानां** चपला-नामलिबलानां भ्रमरसैन्यानामारावः शब्दो यत्र। **वारलाभिर्हंसीभिर्बहुलाऽमन्दा** तद्युक्ताः [ **करला** ] करं दण्डं लान्ति ये ते भूपा यत्र। अबहुलेन शुक्लपक्षेणामला निर्मला बहून् वा लातीति बहुला या सा शरत् प्रक्रान्ता। एष मुरजबन्धः। तथाहि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमद्वितीयतृतीयचतुर्थपादेभ्यो यथाक्रमं प्रथमादीन्यक्ष-राणि चत्वारि चतुर्थतृतीयद्वितीयप्रथमपादेभ्यः पञ्चमषष्ठसप्तमाष्टमानि च गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं, प्रथमाद्द्वितीय-(168a) तृतीयौ, द्वितीयतृतीयाभ्यां चतुर्थपञ्चमौ, चतुर्थात् तृतीयद्वितीयौ तृतीयात् पादात् प्रथमं वर्णञ्च गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमं प्रथमात् सप्तमषष्ठौ, द्वितीयतृतीयाभ्यां पञ्चमौ, चतुर्थात् षष्ठसप्तमौ, तृतीयादष्टमञ्च गृहीत्वा तृतीयः पादः। चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि गृहीत्वा चतुर्थः पाद इति प्रस्तारः।' ( रु. सं. ५८-५९ पृ: )

**भासत** इति। 'हे **प्रतिभासार** प्रज्ञाऽतिशयोत्कृष्ट **रसेना**दरेणा**भाता** समन्ताद्दीप्ताऽहताऽप्रतिहताऽऽ**विभा** शोभा यथा। **भावितात्मा** एकाग्रीकृतहृदया **वादे** एव **देवै**र्विजिगीषुभिः परिष्कृतैरा**भा** यस्याः। **वत** इत्याश्चर्ये निपातः। **ते** तव **सभा**।

---

37 शान्तिकार्धं वर्णद्वयमिति (ख) पुस्तके पाठः।

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥८५॥**

**सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रं काव्यम्। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्—**

मारारिशक्ररामेभमुखैरासाररंहसा।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥३७८॥
माता नतानां सङ्घट्टः श्रियां बाधितसम्भ्रमा।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽऽदिमा ॥३७९॥
( रु. का. अ. ५।६,७ )

खड्गबन्धः।

---

**तच्चित्रमिति** यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशित्वे चित्रत्वं तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दभेदेन तेषां लोकप्रतीतेः शब्दाश्रयत्वम्। एतच्च बहुभिर्भेदैर्भिद्यमानमनन्तत्वात् परिसंख्यातुमशक्यं यदाहुः—( रुद्रट का ५।२०५ ) चक्रकखड्गमुसलेषीणासनचापशूलहलैः। चतुरस्रपीठविरचितरथतुरगगजादिपदपाठैः॥ अनुलोमप्रतिलोमैरर्धभ्रममुरजसर्वतोभद्रैः। इत्यादिभिरन्यैरपि वस्तुविशेषाकृतिप्रभवैः॥ भेदैर्विभिद्यमानं संख्यातुमनन्तमस्मिन्नेवदलम्। यन्नाम नाम यत् स्यात्तदाकृतिर्लक्षणं मतं तस्य। तल्लक्षयमेव दृष्ट्वाऽवधार्यमखिलं ततोऽन्यदपि॥ इति। अतः शिष्यव्युत्पत्तये दिङ्मात्रमुदाहरति। "मारारिः परमेश्वरः, शक इन्द्रः, **रामो** दशरथः, **इभमुखो** गणपतिः, एभिरासारसदृशेन **रंहसा** वेगेन **सारब्धस्तवा** आरब्धः स्तवो यस्याः, तदार्तिस्तेषामार्तेर्हरणे **क्षमा** शक्ता **नतानां** प्रणतानां **माता श्रियां संघट्टः, बाधितः सम्भ्रमो** यया। **मान्या अथ** समुच्चये **रामाणां** वरवर्णिनीनां **सीमा** पर्यन्तभूः (167b) **शं** कल्याणं **मे दिश्यात्** ममादिशतु **उमा** गौरी **आदिमा** सर्वेषामग्रया। 'अनेन श्लोकद्वयेन खड्गबन्धप्रस्तारः।'[36] तथा द्वादिकाऽन्तरे 'मा'शब्दं तिर्यगधोऽध-क्रमेण

---

विवेकाद्गृहीतः स्यात्। यदि तु आश्रयणीयमिति पाठो मूले गृह्यते तदाऽत्र टीकाकृतामाश्रयाश्रयिभावस्यालङ्कारविभागकल्पने योग्यतायामास्था सूचिता स्यात्। टीकाप्रकरणात् सा नात्यन्तसमीचीनेति प्रतिभाति। अन्यत्र च (Fol. 151b) तथैवाकूतं टीकाकृतां लक्ष्यते।

36 खड्गबन्धादीनामिहोपदर्शितानां तदतिरिक्तानाञ्च चित्राणां चित्राणि रुद्रटकाव्यालङ्कारे ( नि. सा. सं ) सरस्वतीकण्ठाभरणे ( नि. सा. सं ) कविकर्णपूरकृतेऽलङ्कारकौस्तुभेऽस्मत्सम्पादिते कुतूहलिभिरवलोकनीयानि।

सरला बहुलारम्भतरलालिवलारवा।
वारलाबहुलामन्दकरलाऽबहुलामला ॥३८०॥

( रु. का. अ. ५।१३ )

मुरजबन्धः।

भासते प्रतिभासार रसाभाता हताविभा।
भावितात्मा शुभावादे देवाभा बत ते सभा ॥३८१॥

पद्मबन्धः।

---

वर्णचतुर्दशकं धारायां न्यसेयावत्-'मा'शब्दं श्लिष्टम्, एतत्फलकम्। तस्यैव 'मा'-शब्दस्य दक्षिणपार्श्वे निष्क्रामकमेणाक्षरसप्तकम्, ततोऽपरपार्श्वात् 'मा'शब्दान्तिक-प्रवेशक्रमेण वर्णसप्तकम्। एषा द्राढिका। ततो 'मा'-शब्दादारभ्योर्ध्वक्रमेण गान्तिकार्थं वर्णत्रयम्[37]। तदुपरि 'मा'शब्दः। तद्दक्षिणपार्श्वेऽन्यदक्षरचतुष्टयम्। अपरपार्श्वे च 'मा'शब्दान्तिकं वर्णचतुष्टयम्। एतन्मुकुलकम्। ततः श्लिष्टस्य 'मा'-शब्दस्योपरि वर्णद्वयम्। एतन्मस्तकम्। **सरलेति**—**बहुलारम्भः**, तरलानां चपला-नामलिवलानां भ्रमरसैन्यानामारावः शब्दो यत्र। **वारलाभि**र्हंसीभिर्**बहुलाऽमन्दा** तद्युक्ताः [ **करला** ] करं दण्डं लान्ति ये ते भूपा यत्र। **अबहुलेन** शुक्लपक्षेणामला निर्मला बहून् वा लातीति बहुला या सा शरत् प्रक्रान्ता। एष मुरजबन्धः। तथाहि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमद्वितीयतृतीयचतुर्थपादेभ्यो यथाक्रमं प्रथमादीन्यक्षराणि चत्वारि चतुर्थतृतीयद्वितीयप्रथमपादेभ्यः पञ्चमषष्ठसप्तमाष्टमानि च गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं, प्रथमाद्द्वितीय-(168a) तृतीयौ, द्वितीयतृतीयाभ्यां चतुर्थपञ्चमौ, चतुर्थात् तृतीयद्वितीयौ तृतीयात् पादात् प्रथमं वर्णं च गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमं प्रथमात् सप्तमषष्ठौ, द्वितीयतृतीयाभ्यां पञ्चमौ, चतुर्थात् षष्ठसप्तमौ, तृतीयादष्टमं च गृहीत्वा तृतीयः पादः। चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि गृहीत्वा चतुर्थः पाद इति प्रस्तारः।' ( छ. सं. ५८-५६ पृ: )

**भासत** इति। 'हे **प्रतिभासार** प्रज्ञाऽतिशयोत्कृष्ट **रसेना**दरेणाभाता समन्ताद्दीप्ताऽ**हता**ऽप्रतिहताऽऽ**विभा** शोभा यया। **भावितात्मा** एकाग्रीकृतहृदया वाद एव देवैर्विजिगीषुभिः पण्डितै**राभा** यस्याः। ॰ बतेत्याश्चर्ये निपातः। ते तव **सभा**।

---

37 गण्डकार्थं वर्णद्वयमिति (ख) पुस्तके पाठः।

रसा सारसारसासार ! सायताक्ष ! क्षतायसा ।
सातावात ! तवातासा रक्षतस्त्वततक्षर ॥३८२॥

( रु. का. अ. ५।२० )

सर्वतोभद्रम् ।

सम्भविनोऽप्यन्ये भेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ।

---

एषोऽष्टदलपद्मबन्धः । तथाहि प्रथममक्षरमत्र कर्णिकास्थाने ततोऽक्षरद्वयेनैकं दलं, निःसरणक्रमेण तावतैव भागेन प्रवेशक्रमेण द्वितीयं दलं, यावता कर्णिकाऽक्षरम् । ततस्तावतैव तृतीयं निःसरणक्रमेन तदेवाक्षरद्वयम् । एवं दिग्दलान्यक्षरद्वयमितानि निर्गमप्रवेशाभ्यामुत्पाद्यानि । विदिग्दलानि तु प्रवेशेनैव । तदिह दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टाक्षरत्वं विदिग्दलेष्वन्यथा कर्णिकाऽन्तरन्तु श्लिष्टमेव' ( रु. सं. ५६ पृः ) ।

**रसासारेति**-"हे **सारसारसासार** उत्कृष्टाभिलाषस्य वेगवद्रूप, **आयताक्ष** विस्तीर्णनयन, **सात** सुखस्वभाव, **अवात** अचपल, **अतक्षर** तक्षू त्वक्षू तनुकरणे । अतक्षं वृद्धिं राति ददाति यस्तथाभूत, **तव रक्षतः** सतः **सा रसा** भूः । **अतासा** नास्ति तास उत्क्षेपो यस्याः । तस उत्क्षेपे । [ **क्षतायसा** ] क्षत **आय** अर्थागमोपायो येस्तान् स्यति विनाशयति । (168b) अस्तु भवतु । अरक्षतामशोभना भूः । तुशब्दो व्यतिरेके । अत्र न केवलमधोऽधःक्रमेण स्थितानां पादानां प्रातिलोम्येन व्यवस्थितिर्यावदर्धभ्रमस्यापि । तत्र हि प्रथमादिपादाक्षराणि चत्वारि, चतुर्थतृतीयप्रथमपादान्त्याक्षराणि चेति प्रथमः पादः । प्रथमादि यावत् द्वितीयाक्षराणि चत्वारि चतुर्थादिपादसप्तमाक्षराणि चेति द्वितीयः पादः । प्रथमादि यावत् तृतीयाक्षराणि चतुर्थादि यावत् षष्ठाक्षराणि चेति तृतीयः पादः । चतुर्थपञ्चमैश्चतुर्थः पादः । इह च सर्वं तदेवोपलभ्यत इत्यर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् ॥" ( रु. स. ५६-६० पृः )

**सम्भविनोऽप्यन्य** इति यथा—स रं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो लब्धाऽघक्षयशुद्धिरुद्धुरतरधीवत्सभूमिर्मुदा । मुक्त्वा काममपास्तभीः परमृगव्याधः सनादं हरेरेकौघैः समकालमभ्रमुदयारोपैस्तदा तस्तरे ( शिशु. स. १६।१२० ) ॥ श्रीवत्सो रोमावर्तोऽस्य भूमिर्वक्षः, हरेर्नादं सिंहनादं मुक्त्वेति सम्बन्धः । अत्र मुक्त्वा काममिलास्तरणक्रियाविशेषणम् । अनेन श्लोकेन कविकाव्यनामाङ्कितषडरचक्रप्रस्तारः । तथाहि प्रथमपादस्य नवाक्षराणि धाराकारतयाऽधोऽधःक्रमेण न्यसेत् । ततो नाभौ 'र'शब्दसाधारणं ततोऽधोऽधःक्रमेणैवापराणि नवाक्षराणीति प्रथमपादेनारद्वयम् । तत

गीते गीतवेदिन ॥ रीतयो वाङ्मयप्राणा हृदय तस्य वृत्तय । रचनाऽऽदिरयं मूर्तिरनु-प्रासस्तु जीवितम् ॥ उक्तयो दैवत छायामुद्राभणितयो भृति । पठिति धम्यता प्रेक्षाऽभिनयोऽध्ययन वृति ॥ श्लेष पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् । वाक्रोवाकेन कृष्यन्तो मनासि महतामपि ॥ विनयेन विना का श्री का निशा शशिना विना । विना यमक-चित्राभ्यां कीदृशी वाग्विदग्धता ॥ गूढागूढचतुष्पादा मादिना वादशान्तये । प्रश्नोत्तर दग्ध-मुष्टि विदग्धमुखमण्डनम् ॥ क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चापि सोपयोगा प्रहेलिका ॥ (का श्रा ३।६७) यथामति यथाशक्ति यथोचित यथारुचि । कवे पात्रस्य चैतासां प्रयोग उपपद्यते ॥ (स क. श्रा २ २६) याद्गुगुद विधौ वाणा पदवन्धे न तादृश । गत्वा गत्वामिय देवी भिन्नरूपा सरस्वती ॥ सस्कृतेनैव कोऽप्यर्थ प्राकृतेनैव वाऽपर । शक्यो रचयितु कश्चिदपभ्रशेन जायते ॥ (स क श्रा २।१०) पैशाच्या शौरसेन्याऽन्यो मागध्याऽन्यो निबध्यते । द्वित्राभि क्वेऽपि भापाभि सर्वाभिरपि कश्चन ॥ (स क श्रा २ ११) कश्चिद्गद्येन पद्येन कश्चिन्मिश्रेण शक्यते । निबद्ध कश्चन द्वाभ्यां कश्चित पथिभिस्त्रिभि ॥ सस्कृतेनैव केऽप्याहु प्राकृतेनैव केचन । साधारण्यादिभि केचित् केचन म्लेच्छभाषया (स क. श्रा २।७)॥ न म्लेच्छितव्य यज्ञादौ स्त्रीषु नाप्राकृत वदेत् । सकीर्ण नाभिजातेषु नाप्रबुद्धेषु सस्कृतम् ॥ (स. क. श्रा २।८) वदन्ति सस्कृत देवा प्राकृत किनरादय । पैशाचाद्य पिशाचाद्या मागध हीनजातय ॥ (स क श्रा २।६) केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभापिण । काले श्रीसाहसाङ्कस्य के न सस्कृतवादिन ॥ (स क श्रा २।१४) नात्यन्त सस्कृतेनैव नात्यन्त देशभाषया । कथां गोष्ठीषु कथयन् लोके बहुमतो भवेत् ॥ (स क श्रा २।१२) शृण्वन्ति लटभ लाटा प्राकृत सस्कृतद्विष । अपभ्रशेन तुष्यन्ति (1703) स्वेन नान्येन गुर्जरा ॥ (स क. श्रा २।१३) ब्रह्मन् विज्ञापयामि त्वा स्वाधिकारजिहासया । गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ॥ (का मी ३३ पृ स क श्रा २।१४) द्विधा प्रयुक्तेन न वाङ्मयेन सरस्वती तन्मिथुन नुनाव । सस्कार पूतेन वर वरेण्य वधू सुखार्थोभिनिबन्धनेन ॥ (कु स ७।६०) एतद्दोम्ला (?) सुरभिकुसुम ग्राम्यमेतन्न धेय धत्ते शोभां विरचितमिदमानमेतदस्य(?) । मालाकारो रचयति यथा साधु विज्ञाय कल योज्य काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥[39] गिर

39 जालन्धरप्रस्तावे मुद्रिते सरस्वतीकण्ठाभरणेऽय सन्दर्भो नोपलभ्यते परन्तु तत्रैवाय प्रासङ्गिक इत्यनुमीयते । अन्तिमे श्लोके तु पाठान्तर व धनीगर्भेण पाठेन दर्शितम् ।

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।

एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेनेव मुखेऽवभासनं[40] पुनरुक्तवदाभासः। स च

शब्दस्य

सभङ्गाभङ्गरूपः केवलशब्दनिष्ठः।

उदाहरणम्—

अरिवधदेहशरीरः सहसारथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥३८३॥

---

भव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम्। (विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे निबद्धाः किं यस्तेषां स खलु निखिलेऽस्मिन् कविवृषा ॥) विदग्धानां गोष्ठे मगधमथुरावासिभणितिर्निबद्धा यस्तेषां स इह कविराजो विजयते ॥ (बा. रा. १।११; स क. आ. २।१६)

ग्रन्थकृता तु केषाञ्चिदेवानौचित्यपारतन्त्र्याद्दोषाभावमात्रपर्यवसायित्वं केषाञ्चिदुक्तेष्वेवान्तर्भावः केषाञ्चित्तु रसप्रकाश एवाचरणत्वमिति प्राचीनानामनुसारेण षडेव लक्षिताः। यदाहुः—(रु. का. अ. २।१३) वक्रोक्तिरनुप्रासो यमकं श्लेषस्तथा चित्रम्। शब्दस्यालङ्काराः श्लेषोऽर्थस्यापि सोऽन्यस्तु ॥

अधुना शब्दार्थालङ्कारयोः मध्यान्तराल उभयालङ्कारममुं लक्षयते पुनरुक्तेति। यथा चास्यैवमन्येषामप्यलङ्काराणामुभयालङ्कारत्वं तदग्रे वक्ष्यति। लाटानुप्रासयमकाभ्यां भेदं दर्शयति विभिन्नेति। भिन्नरूपता च सार्थकादनर्थकाद्वा शब्दान्तरादित्याह भिन्नरूपेति। एकोऽर्थो ययोस्तावेकार्थौ तयोर्भाव एकार्थत्वं तेनेव न तु वस्तु-(170b)भूतेनेत्यर्थः। एतेन पर्यवसानेऽन्यथात्वं दर्शयति, इतरथा दुष्टत्वापत्तेः। न चैवमस्यादुष्टत्वमात्रं तदतिरिक्तस्य कविशक्तिव्युत्पत्तिप्रभवस्य वैचित्र्यस्य सद्भावात्। भिन्नरूपौ शब्दौ यत्रैकार्थत्वभ्रमात् पुनरुक्ताविव भासेते स पुनरुक्तवदाभासो नामालङ्कार इत्यर्थः। शब्दस्येति सूत्रप्रतीकः। केवल-

---

40 मुखेऽवभासनमिति धारप्रतीविद्याचक्रवर्तिप्रभृतिभिर्धृतः पाठः। अयञ्च प्रतीहारेन्दुराजकृतलघुवृत्त्यनुसारी 'यत्र भिन्नरूपे पदे एकार्थवदाभासेते' इति तत्र दर्शनात्। अलङ्कारसर्वस्वेऽपि 'आमुखावभासनं पुनरुक्तवदाभास'मिति सूत्रम्। एकार्थत्वेन चाऽऽमुखे इति पाठान्तरम्।

गीते गीतवेदिनः ॥ रीतयो वाङ्मयप्राणा हृदयं तस्य वृत्तयः । रचनाऽऽदिनयं मूर्तिरनु-प्रासस्तु जीवितम् ॥ उक्तयो दैवतं छायामुद्राभणितयो श्रुतिः । पठितिः श्रूयता प्रेक्षाऽभिनयोऽध्ययनं धृतिः ॥ श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् । वाकोवाकेन कृष्यन्ते मनांसि महतामपि ॥ विनयेन विना का श्रीः का निशा शशिना विना । विना यमक-चित्राभ्यां कीदृशी वाग्विदग्धता ॥ गूढागूढचतुष्पादा वादिना वादशान्तये । प्रश्नोत्तरं दग्ध-सुष्टि विदग्धमुखमण्डनम् ॥ क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ (का. आ. ३।९७) यथामति यथाशक्ति यथौचित्यं यथारुचि । कवेः पातस्य चैतासां प्रयोग उपपद्यते ॥ (स. क. आ. २।२६) यादृग्गद्य-विधौ बाणः पद्यबन्धे न तादृशः । गद्यां गद्यामियं देवी भिन्नरूपा सरस्वती ॥ संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चाऽपरः । शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥ (स. क. आ. २।१०) पैशाच्या शौरसेन्याऽन्यो मागध्याऽन्यो निबध्यते । द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥ (स. क. आ. २।११) कश्चिद्गद्येन पद्येन कश्चिन्मिश्रेण शक्यते । निबद्धः कश्चन द्वाभ्यां कश्चित्तु पधिभिस्त्रिभिः ॥ संस्कृतेनेव केऽप्याहुः प्राकृतेनैव केचन । साधारण्यादिभिः केचित् केचन म्लेच्छभाषया (स. क. आ. २।७) ॥ न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥ (स. क. आ. २।८) वदन्ति संस्कृतं देवाः प्राकृतं किन्नरादय । पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥ (स. क. आ. २।९) केऽभूवनाढ्यराजस्य राज्ये प्राकृतभाषिणः । काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः ॥ (स.क.आ. २।१५) नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया । कथां गोष्ठीषु कथयन् लोके बहुमतो भवेत् ॥ (स. क. आ. २।१२) शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः । अपभ्रंशेन तुष्यन्ति (1702) स्वेन नान्येन गुर्जराः ॥ (स. क. आ. २।१३) ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया । गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ॥ (का. मी. ३३ पृः स. क. आ. २।१४) द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव । संस्कार-पूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ (कु. सं. ७।९०) एतद्गोम्ना (?) सुरभिकुसुमं ग्राम्यमेतन्न धैर्यं धत्ते शोभां विरचितमिदमानमेतदस्य(?) । मालाकारो रचयति यथा साधु विज्ञाय कालं योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥[39] गिरः

---

39 आत्मलङ्कारप्रस्तावे मुद्रिते सरस्वतीकण्ठाभरणेऽयं सन्दर्भो नोपलभ्यते, परन्तु तत्रैवायं प्रासङ्गिक इत्यनुमीयते । अन्तिमे श्लोके तु पाठान्तरं बन्धनीगर्भेण पाठेन दर्शितम् ।

**पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।**

**एकार्थतेव**

**भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेनेव मुखेऽवभासनं[40] पुनरुक्तवदाभासः । स च**

**शब्दस्य**

**सभङ्गाभङ्गरूपः केवलशब्दनिष्ठः ।**

**उदाहरणम्—**

**अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।**
**भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥३८३॥**

---

श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् । (विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे निबद्धाः किं यस्तेषां स खलु निखिलेऽस्मिन् कविवृषा ॥) विदग्धानामीष्टे मगधमधुरावासिभणितिर्निबद्धा यस्तेषां स इह कविराजो विजयते ॥ ( बा. रा. १।११; स क. भा. २।१६ )

ग्रन्थकृता तु केषाञ्चिदेवानौचित्यपारतन्त्र्याद्दोषाभावमात्रपर्यवसायित्वं केषाञ्चिदुक्तेष्वेवान्तर्भावः केषाञ्चित्तु रसप्रकाश एवावरणत्वमिति प्राचीनानामनुरोधेन पञ्चैव लक्षिताः । यदाहुः—( रु. का. अ. २।१३ ) वक्रोक्तिरनुप्रासो यमकं श्लेषस्तथा चित्रम् । शब्दस्यालङ्काराः श्लेषोऽर्थस्यापि सोऽन्यस्तु ॥

अधुना शब्दार्थालङ्कारयोः मध्यान्तराल उभयालङ्कारमनु लक्षयते **पुनरुक्तेति** । यथा चास्यैवमन्येषामप्यलङ्काराणामुभयालङ्कारत्वं वक्ष्ये वक्ष्यति । लाटानुप्रासयमकाभ्यां भेदं दर्शयति **विभिन्नेति** । भिन्नरूपता च सार्थकादनर्थकाद्वा शब्दान्तरादित्याह **भिन्नरूपेति** । एतेऽयो यथोक्ताविकार्थौ तयोर्भान एकार्थत्वं तेनैव न तु वस्तु-( 170b )भूतेनेत्यर्थः । एतेन पर्यवसानेऽन्यथात्वं दर्शयति, इतरथा दुष्टत्वापत्तेः । न चैवमस्यादुष्टत्वमात्रं तदतिरिक्तस्य कविशक्तिव्युत्पत्तिप्रकाशकस्य वैचित्र्यस्य सद्भावात् । भिन्नरूपौ शब्दौ यत्रैकार्थत्वभ्रमात् पुनरुक्ताविव भासेते स पुनरुक्तवदाभासो नामालङ्कार इत्यर्थः । शब्दस्येति सूत्रप्रतीकः । केवल-

---

40 मुखेऽवभासनमिति आधारभूतविवाचकत्वविवक्षितिर्भिर्ति वः पाठः । अयच प्रतीहारेन्दुराजकृतलघुवृत्त्यनुसारी 'यत्र भिन्नरूपे पदे एकार्थवदाभासेते' इति तत्र दर्शनात् । अलङ्कारसर्वस्वेऽपि 'आमुखावभासनं पुनरुक्तवदाभास'मिति सूत्रम् । एकार्थत्वेन चाऽऽमुखे इति पाठान्तरम् ।

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधा पार्श्ववर्तिनः ॥३८४॥

तथा शब्दार्थयोरयम् ॥८६॥

उदाहरणम्—

तनुवपुरप्यनन्योऽसौ[41] करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥३८५॥ ( उ. वि. ? )

---

ग्रहणेनार्थनिरासः । अरीत्यादि अरीणा वधं ददतो ईहा येषा तादृशाः शरिणो धानुष्कास्ता-नीरयन्ति ये सूता बन्दिनः" ( रु. सं. ६० पृ )। पादातं पत्तिसमूहः सारथिप्रभृतिभिः सह वर्तत इति सतामानत्या हेतुभूतया स्थिरतायां सत्यामगः पर्वतः स अवनितलतिलको भाति। चकासतीत्यादि। "अङ्गनेष्वारामा उपवनानि अङ्गनाभिः शोभनाश्च। अत्रैकार्थ-तया प्रतिभातौ देहशरीरशब्दौ सार्थकौ सभङ्गौ प्रतिभासेते इति पौनरुक्त्यसम्भावना। सारथि-सूतशब्दौ सार्थकावभङ्गौ दानत्यागशब्दावनर्थकौ सभङ्गौ, अङ्गनारामा इत्येतावनर्थकावभङ्गौ देहशरीरादिवदिह शब्दयोर्भङ्गाभावात्।" (रु. सं. ६० पृ.) निजेनैव रूपेणैवावस्थितयोरनयो- "रुपलभ्यमानसुपामपि शब्दानामुपरि शब्दार्थपौनरुक्त्यमुदाहरति तस्येति। सुमनसः शोभनचित्तस्य राज्ञः सुमनसो देवा विबुधाश्च। तत्र एवानेकार्थताभ्रमः।" (रु. सं. ६० पृः)

"तथा शब्दार्थयोरयमिति सूत्रप्रतीकः। यथा तनुवपुरित्यादि—तनु स्वल्पं करिकुञ्जरा वारणश्रेष्ठाः 'वृन्दारक-(1713) नागकुञ्जरैः पूज्यमान'मिति (पा. २।१।६२) समासः। रक्तास्छुरिता.। (रु. स. ६० पृः) विभिन्नाकारशब्दगेति समासे संख्या न विवक्षितेति भिन्नरूपाणां बहूनामपि शब्दानामभिधेयस्वभ्रमे पुनरुक्तवदाभासः। लक्षयतो दर्शयति तेज इत्यादि"[42] (रु. स. ६० पृः)। तेजसो धामान्याश्रयास्तेजस्विनस्तेषां

---

41. अत्र मूलस्थपद्ये 'तनुवपुरप्यनन्योऽसौ'विति प्राचीनानां श्रीधरचण्डीदासश्रीविद्या-चक्रवर्तिप्रभृतीनां पाठः। श्रीधरश्रीविद्याचक्रवर्तिनोश्च टीकायोरजघन्यपदे व्याख्यानादर्शनेन चण्डीदासस्य 'कृशशरीरोऽप्यदृष्टपूर्वपराक्रमशाली'ति विवरणेनेदं सूच्यते।

42. उद्धृतग्रन्थे काव्यालङ्कारसारसंग्रहे तेनैव प्रथमं परिगृहीतत्वादावेतादृशोक्तेस.। रुचकेनालङ्कारसर्वस्वे पुनरर्थालङ्कारतयैवास्य निर्देश.। उभयोर्मातृकालिप्योः सङ्कलनेनात्र पाठोद्धारः कृतः। अयमेव पाठो रुचकसङ्केतानुयायी।

अत्रैकस्मिन् पदे परिवर्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयत इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम्।

इति काव्यप्रकाशे शब्दालङ्कारनिर्णयो नाम
नवम उल्लासः॥

---

मह उत्सवः। इन्द्रः स्वामी, हरिः सिंहः, जिष्णुः जयशीलः। **अत्रैकस्मिन्निति**—पदपरिवृत्त्या सहिष्णुत्वमसहिष्णुत्वञ्चैवानयोरलङ्कारयोर्निमित्ते। तदिह तनुशब्दपर्याय-सूक्ष्मादिशब्दोपादानेऽलङ्कारता न प्रसरतीति शब्दाश्रितत्वं, वपुःशब्दपर्याये तु शरीरादिशब्देऽप्युपात्तेऽलङ्कारता घटत इति तत्रार्थालङ्कारता। एवं करिकुञ्जर इत्यत्र कुञ्जरशब्दः श्रेष्ठादिना परिवर्तनं न सहते, करिशब्दस्तु सहत एव, तथा **तेजोधाम** इत्यादावपि। एवं तिङन्तापेक्षया पुनरुक्तवदाभासो द्रष्टव्यः। यथा भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः। जगन्त्यपि सदाऽपायादव्याच्चेतोहरः शिवः[43]॥ (श्रीकण्ठस्तवे अ. सं. २२ पृः)।

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके
नवम उल्लासः।

---

43 मरुल्लकृतश्रीकण्ठस्तवादुदाहरणमिदमलङ्कारसर्वस्वे साहित्यदर्पणे चोपलभ्यते।

## अथ दशम उल्लासः

अर्थालङ्कारानाह—

*साधर्म्यमुपमा भेदे*

उपमानोपमेययोरेव न तु कार्यकारणादिकयोः साधर्म्यं[1] भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा। भेदग्रहणमनन्वयव्यवच्छेदाय।

---

अथार्थालङ्काराणां प्रस्तावः। तत्र चोपमैव प्रकारवैचित्र्येणालङ्कारबीजभूतेति तामेव प्रथमं निर्दिशति **साधर्म्यमिति**। अर्थप्राप्तं व्याचष्टे **उपमानोपमेययोरेवेति**— उपमीयते सादृश्यमानीयते येनोद्भूतगुणेनान्यत्तदुपमानं, यदु-( 171b )पमीयते सादृश्यमानीयते न्यूनगुणं तदुपमेयम् ( का. आ. सू. वृ. ४।२।१ )। अत एव पार्थेन धनुर्धरान्तरमुपमीयत इत्याहुः। विवक्षया[2] तु यथा चन्द्र इव मुखं कामिन्यास्तथा मुखमिव चन्द्रो यामिन्या इत्यपि। **न कार्यकारणादिकयोरिति**—आदिपदेन वाच्यवाचकलक्ष्यलक्षकस्वस्वामिप्रभृतीनां परिग्रहः। समानस्य सादेशो रूपमिति व्याचष्टे **समानेनेति**। तद्धितार्थमाह **सम्बन्ध इति**। तदुक्तं "यत्र किञ्चित् सामान्यं कश्चिद्विशेषः स विषयः सदृशताया इति" ( अ. स. ३१ पृः )। उपमितिरुपमा 'आतश्चोपसर्गे' ( पा. ३।३।१०६ ) इति स्त्रियां भावे अङ्। *कविप्रतिभोत्थापितचारुत्वातिशययोगित्वं सर्वालङ्कारतायां बीजम्*[3], अत एव गौरिव गवयः, समुद्रः कुण्डिकेवेत्येवमादौ नालङ्कारता। ननु चोपमानमुपमेयञ्च परमार्थतः पृथग्भूतमेव तत्किं भेदग्रहणेनेत्यत आह—**अनन्वयव्यवच्छेदायेति**। अस्य च

---

1 'साधर्म्यं' सम्भवती'ति मूले पाठः साधीयान्।

2 न तु पदार्थनैयत्येनेत्याशयः।

3 यदाह कुन्तकः "अलङ्कृतिरलङ्कार्यमपोद्धृत्य विविच्यते। तदुपायतया तत्त्वं सालङ्कारस्य काव्यता॥" 'वस्तुमात्रञ्च शोभाऽतिशयशून्यं न काव्यव्यपदेशमर्हति।···अपरा कविकौशलशालिनी। निर्मितिर्नूतनोल्लेखलोकातिक्रान्तगोचरा॥' इत्यादिभिरलङ्कारस्वरूपसूचनपरैरन्वर्थैरभिधानैः। अन्यत्र उद्धारे अपरा वस्तुवक्रताया विलक्षणा। लोकातिक्रान्तगोचरेत्यस्या एव स्वभावोक्तिव्यतिरिक्ता वक्रोक्तिरिति भामहोपज्ञा संज्ञा। सा च कविप्रतिभोत्थापिता क्रियागोचरा शक्तिर्यामधिकृत्यैवमुच्यते 'कविप्रतिभोत्प्रेक्षितत्वेन चात्यन्तगम्भीरभाव्यमप्युपनिबध्यमानं समञ्जसतामाहत'इति।

## पूर्णा लुप्ता च

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

साऽग्रिमा।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥८७॥

अग्रिमा पूर्णा। यथेवादिशब्दा यत्परास्तस्यैवोपमानतागतीतिरिति यद्यप्युपमानविशेषणान्येते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् संबन्धं

---

पूर्णत्वलुप्तत्वादिभेदाद्बहुविधत्वं यथा चिरन्तनालङ्कारकारैरुक्तं तथैव दर्शयति। तत्रोपमानादीनां चतुर्णामुपादाने **पूर्णा**। ततः साधारणधर्मस्योपमानस्य चोपमाद्योतकस्य[4] चेत्येकस्य धर्मोपमाद्योतकयोर्धर्मोपमानयोरुपमाद्योतकोपमेययोर्वेति द्वयोः, धर्मादीनामन्यतरत्रयाणामिति त्रयाणां लोपे **लुप्ता**। श्रुतिनिरन्तरार्थनिष्ठः शब्दव्यापारस्तत्प्रतिपादिता **श्रौती** तद्विपरीता त्वार्थीति पूर्णा द्विधा। प्रत्येकं वाक्यसमासतद्धितगम्येति षोढा।

ननूपमेयेन (1720) साक्षादसम्बन्धात् यथेवादीनां प्रयोगे कथं श्रौतीत्वमित्याशङ्क्याह—**यद्यपीति**। **उपमानविशेषणानि** उपमेयस्य[5] विशेषरूपतया व्यवस्थापकानि। परिहरति—**तथापीति**। शब्दशक्तिस्वाभाव्येन प्रतिपादकत्वे दृष्टान्तमाह—**षष्ठीवदिति**। यथा राज्ञः पुरुष इत्यादौ षष्ठी यद्यपि उत्तरावदेव विशिनष्टि सम्बन्धस्योभयाश्रयमभिधत्ते तथेदमपि लुप्तविभक्तिकमव्ययमेकत्रापि विश्रान्तमुभयाश्रयं सम्बन्धमभिव्यनक्ति। कथं पुनरत्र राज्ञ एव षष्ठी न

---

4 'वोपमे'ति 'ख' पुस्तके पाठः।

5 उपमानस्य विशेषरूपतया व्यवस्थापकानि इति (क) पुस्तके पाठः। अत्र तु मातृराखंधोहकानवधानात् अन्यमातृकाऽन्तरस्थो मैथिललिप्यां पयपङ्क्तिकटेद्रुदाकारपत्रस्यान्तर्निवेशः। स चैवं 'नापि समयस्य प्रवृत्तिर्दर्शिता भवति…… अत्र वार्तिके आतिमरं ततीयादानुमाने…………प्रतिबन्धस्याख्यातिः। द्वितीयानुमाने श्रोत्रमनोव्यापृतेः……पार्थज्ञानजन्यत्वं यद्यप्यदृष्टं न चापि प्रत्यक्षे साध्यमिति। ननु कर्मानन्तर्यावित्यादिसूत्रे कर्मानन्तर्यावित्रे बुद्धचनवस्थानबुद्धिरपि नवा स्यात्। किं द्वौ वैलक्षण्येनाद्यैवबुद्ध्या विनाशः। नैव कर्मविभाग.।' अस्मद्भक्ते पंक्तावा यत्नाद्धारः, तत्रानवतिकमते तु न तथेति अपरपङ्क्तौ निर्देशः।

प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव 'तत्र तस्येव' (पा. ५।१।११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने। 'तेन तुल्यं मुखम्' इत्यादावुपमेय एव 'तत्तुल्यमस्य' इत्यादौ चोपमान एव 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिशब्दोपादाने आर्थी,

---

पुरुषात्? उच्यते—इह तावदेकस्य प्राधान्येऽन्यस्योपसर्जनत्वमाश्रयणीयं तुल्यत्वे "सम्बन्धाभावात्। तत्र न प्रधानं पुरुषादि गुणानुरोधेन प्रवर्तितुमर्हति। उपसर्जनन्तु राजादि। यथा प्रधानानुग्रहस्तथा गौनं (गौणं) निवर्तयति स्वरूपास्थितौ प्रधानार्थत्वसिद्धेः। अतोऽप्रधाने सम्बन्धस्याधिकः पदन्यास' इति तत्र षष्ठी भवति। सा चैकत्वात् सम्बन्धस्य पुरुषगतत्वमभिधत्ते। एवं तद्धितेष्वपि द्रष्टव्यमित्यलं प्रसक्तानुप्रसक्तेन। यत्तु "यथेवशब्दौ सादृश्यव्यतिरेकिणा"विति (भा. का. अ. २।३१) भामहेनोक्तं[8] तदुपलक्षणत्वेन व्याख्येयम्। अत्रापि नियमेन सा-योगान्वितस्तदनुकारितया प्रतिमस्तुलया धृतत्वात्तुल्यः, एवंकृत-(भूत) प्रतिबिम्बप्रतिच्छाय-सदृक्-सदृशादिशब्दानामप्यवान्तरविशेषाः प्रतिपाद्यमानार्थवैचित्र्यसमर्पकत्वेनान्वेयाः। अथार्थीमाह—तेन तुल्यमिति। सममेव साम्यं साधारणो धर्मः।

---

6 'कथ'मित्यादि 'तेन तुल्यत्व' इत्यन्तं 'क' पुस्तके गलितमिति प्रतिभाति।

7 'क' पुस्तके 'म्यधिकप्रदन्या स्वप्रतीत एव स्वीनवति……यत्वेऽप्येनमेवविधा' इति विसदृशः पाठः।

8 'इववद्वायथाशब्दा' इत्यादिना 'उपमायामिमे प्रोक्ताः कवीनां बुद्धिमीदयदा' इत्यन्तेन गरीयसा सन्दर्भेणाचार्यदण्डिना सप्रपञ्चमुक्ताः। तत्र शाब्दिकशिरोमणिभिः प्राचीनैस्त्रिकाण्डकृद्भिरपि "वद्वा यथा तथैवैवं साम्ये"इति दिग्दर्शनं कृतम्। अस्मिंश्च प्रसङ्गे वतिप्रभृतितद्धितप्रत्ययानां कथं सादृश्याभिधानमिति वैयाकरणानां नैयायिकानाञ्च विवादाः प्रवर्तेरन्। तेषामाभासश्चीकाकृता दत्तः। अर्वाचां भट्टोजिदीक्षितप्रभृतीनामाख्यातवादे विवरणकाराणां मथुरानाथप्रभृतीनां च सिद्धान्तस्तत्र एवावगन्तव्यः श्रीजुद्धिभिः। नास्य भूयानुपयोगोऽलङ्कारशास्त्रसिद्धान्तोद्बोधे तथापि शाब्दन्यायमीमांसादिज्ञानप्रकटने व्यसनिना टीकाकृताऽऽयासः कृतः। गदाधरजगदीशादयोऽपि काव्यप्रकाशटीकाकृतोऽत्र शाब्दबोधविनिगमनेन भेदसमाधानं कुर्वन्ति।

**तद्वत् "तेन तुल्यं क्रिया चेद्वति"- ( पा. ५।१।११५ ) रित्यनेन विहितस्य वतेः स्थितौ। "इवेन नित्यसमासो विभक्त्यलोपः पूर्वप्रकृतिस्वरत्वं च" ( पा. २।१।४ वाः ) इति नित्यसमासे 'इव'शब्दयोगे समासगा। क्रमेणोदाहरणम्—**

---

तुल्यता द्विष्ठरूपं सादृश्यम्। **तद्वदिति** 'तेन तुल्यं क्रिया चेद्वति'-( पा. ५।१।११५ ) रित्यत्र क्रिया साध्यस्वभावा विवक्षिता। तद्विशेषणं **तुल्यमिति**। तथाभूता च क्रिया क्रियैवोपमीयते। प्रातिपदिकन्तु तेनेति तृतीयासमर्थं द्रव्यवाचि। अतः सामर्थ्यात् प्रातिपदिकार्थसमवेतक्रियायां वर्तमानात् प्रत्ययो भवतीति विज्ञायते न तु मुख्यवृत्तेः, असम्भवात्। ततश्च 'ब्राह्मणवत् क्षत्रियादधीते, 'क्षीरवज्जलं पिबती'त्येवमादयः प्रयोगाः सिध्यन्ति। ब्राह्मणादिशब्दाना ब्राह्मणादिस्थास्वध्ययनादिक्रियासु साहचर्याद्वृत्तेस्ताभिश्च क्षत्रियादिस्थानामध्ययनादिक्रियाणां तुल्यत्वात्तृतीयाऽन्तत्वमेव ब्राह्मणादिशब्दानामुपपद्यते। तदित्थं क्रियासामर्थ्यपर्यालोचनयाऽत्र तुल्यताप्रतीतिरित्यार्थत्वम्। (172b) एवञ्च देवदत्त इव स्थूलः, यज्ञदत्त इव गोमानित्यादौ सप्तमीषष्ठ्यन्ततयोरभावेऽपि[9] क्रियाग्रहणादेव 'तत्र तस्येव' ( पा. ५।१।११६ ) इत्यत्र वतिर्द्रष्टव्यः।

कथं पुनः क्रियाशब्देन गुण उच्यते? क्रियापूर्वकत्वात्। स्थौल्यगुणयोगाद्धि स्थूलो भवति गोसम्बन्धाच्च गोमानिति। नन्वेवं सति क्रियाग्रहणमपि न कर्तव्यम्; प्रवर्तना(ता)-मविशेषेण 'तेन तुल्य'मित्यस्मिन्नर्थे वतिः। तत्र तस्येवेत्यनेन नार्थः सूत्रारम्भेण, तदर्हम् ( पा. ५।१।११७ ) इत्येतदप्युपमानतो न व्यतिरिच्यते। यद्धि वृत्तं राजानमर्हतीति तद्राज-सदृशमेव भवति। एवञ्च 'तेन तुल्यं क्रिया चेद्वति'रित्येतावति स्थिते(वातिष्ठते)? तथाचाह **चन्द्रगोमी** 'इवे(व)वति'रिति ( च. वा. ४।१।१३५ )।

नन्वेवं गौरिव गवय इत्यत्रापि वतिः प्राप्नोति? नैवम्, उपमायां वतिर्नोपमाने। यद्यपि 'इव' शब्देनोभयमपि द्योत्यते तथाऽप्यन्यदेवौपम्यमन्यदेवोपमानम्। भूयोऽवयव-सादृश्ययोगा ह्युपमा यथा चन्द्र इव मुखम्। सादृश्यात् सदृशप्रतिपत्तिरुपमानम्, यथा गौरिव गवय इत्याख्यामेतत्। ब्राह्मणवत् क्षत्रिय इत्युक्ते गच्छति पठतीत्यादिकासु क्रियासु न विशेषोऽवगम्यत इति तत्प्रतिपत्तये क्रियाविशेषोऽवश्यं प्रयोक्तव्य इति वाक्यविषय एवास्य प्रयोगः प्रकरणादिना वा तत्प्रतिपत्तिरिति तुल्यमेव। 'सामान्यान्येन भूयांसि गुणावयवकर्मणाम्। भिन्नप्रधानसामान्यव्यक्तिः सादृश्यमुच्यते॥' इति लीलावतिताः। सदृशमिति कृत्वा यत् प्रतीयते तत् सादृश्यम्। न (173a)चैतदप्यनुगममिन्द्रियापात-

---

9 'घ' पुस्तके 'ऽपी'ति नास्ति

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्त स्वाधीनपतिका यथा ॥३८६॥
चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥३८७॥

---

मात्रणाप्रतिभासमानात् । न च लिङ्गादिगम्यम्, तदनुसन्धानविरहिणोऽपि सादृश्यप्रतीतेः, [10]प्रत्यक्षादिविषयीभूतद्रव्यादिपदार्थातिरिक्तत्वाच्च । तथाहि न तावद्द्रव्यं गुणः कर्म वाऽ गुणत्वाद् गुणवृत्तित्वाद्विभागाहेतुत्वात्, [न] सामान्याद्यन्यतममनुगतव्यावृत्त्येदबुद्ध्य-हेतुत्वात् । अतः पदार्थान्तरमेवेति प्राभाकराः । "परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥" (न्या कु अ ३।८ का) इति न्यायाद् भावाभावा-भ्यामन्यः प्रकारः शङ्कितुमपि न शक्यः । तथा च विधिरूपतया प्रतीयमानस्याभावत्वं न वक्तव्यम् ।[11] भावरूपश्च गुणवन्निर्गुणं वेति ? तत्र प्रथमे द्रव्यत्वं द्वितीये त्वाश्रितमनाश्रितं वेति । तत्र द्वितीये समवाय एवानवस्थाभयात् । आश्रितं तु सामान्यवन्निःसामान्यं वेति । प्रथमे तु स्पन्दरूपमस्पन्दरूपं वा ? एतद्द्वयं यथासंख्यं कर्म गुणश्च । निःसामान्यं निर्गुणम् आश्रितं त्वेकाश्रितमनेकाश्रितञ्चेति । एतदपि यथासंख्यं विशेषः सामान्यञ्चेति । अतः सादृश्यमेवानेकं विधामानादयन्नानिरिच्यते । अनारादथवा पदार्थभूय स्यातुमुत्सहते शक्ति-सङ्ख्यावदिति नैयायिकाः (न्या कु अ ३।८ टी १६३-१६४ पृ)। एतद्विलावलमीमांसा ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च नेह प्रतन्यते ।

**स्वप्नेऽपीत्यादि—प्रभावप्रभवं** कान्तमित्यनेन वीरशृङ्गारादिमत्त्वं दर्शयति । अष्टासु नायिकास्वासन्नायत्तरमणोत्कृष्टनायिका स्वाधीन-(173b) पतिकेत्युच्यते (द रू २।२३)। सा उपमानं, **विजयश्री**रुपमेयं यथाशब्दो द्योतकः, अपरित्यागो धर्मः । स च सम्बन्ध-भेदाद्भिन्नोऽप्येकजातीयतया साधारण इति चतुर्णामुपादानं वाक्यगम्येयं पूर्णा श्रौती । **चकितेत्यादि—क्रुधि** ईर्ष्यायाम् । अत्रापि पूर्ववत् **तरुणारुणतारहारिकान्तित्वं** साधारणो

---

10 अत्रापि मीमांसकमतखण्डने सादृश्यस्यातिरिक्तपदार्थस्वीकारे गौरवं नैयायिक-धुर्याणामुदयनाचार्याणां ग्रन्थोद्धारेण सूचितम् । परं प्रकृतानुपयोगाच्च नेह प्रतन्यत' इति टीकाकृन्मन्तव्यमलङ्कारशास्त्रे तद्गतेनैव समयेन विषयविवेचनं विपश्चिदा-लोचनमर्हतीति स्वीकरोति । मैथिलपण्डितराजादय एव साधर्म्यं सादृश्य-मित्यर्थं इत्याद्यभिदधति ।

11 'न वक्तव्यम्' इति 'ख' पुस्तके नास्ति ।

अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपाययमैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो [12]लक्ष्मीविलासभवनैर्भुवनं बभार ॥३८८॥
(क. अ. ११३६)

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥३८९॥
गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥३९०॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूस्तथा जयश्री-स्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेष्वैचित्र्यं, वैचित्र्यञ्चा-लङ्कारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः। न खलु व्यङ्ग्यसंस्पर्श-

---

धर्मः। सम्मदा हर्षः। समशब्दो द्योतक इतीयमार्थी। अवितथेत्यादि—सुरतरु-सदृश इति 'पूर्वसदृशे'-(पा. २।१।३१)त्यादिना समासः। तद्धितगम्या यथा गाम्भीर्ये-त्यादि। भुजङ्गः कामुकः[13]। अत्र गङ्गाभुजङ्गस्येव गाम्भीर्ये गरिमा तस्येत्यर्थे वतिः। आर्थी यथा 'दुरालोक' इत्यादि। अम्बररत्नं सूर्यः। स यथा प्रतापातिशयाद्दुःखेनाव-लोक्यते तथा वर्णनीयोऽपि निदाघसूर्याकारतया दुरालोकतया वर्णनीयसम्बन्धिन्यास्तस्या-स्तुल्यतेति तुल्यक्रियार्थेऽत्र वतिरित्यार्थी यमुपमा।[14] यद्यप्यत्र स्वाधीनपतिकेत्यादावनुपमाया विषये ध्वनिगुणीभूतव्यङ्ग्यता सम्भवतस्तथापि (न) तद्व्यवहारः। [15]अत्र हेतुमाह—न

---

१२ अत्र अत्यायतैरित्यादिमूलोदाहृते कप्फिणाभ्युदयकाव्यपद्ये श्रीधरेणाव्याकृते 'सदा यो' इत्यस्य स्थाने 'सहायो' इत्यपि समञ्जसः पाठः। 'अयः शुभावहो विधि'-रिति कोषात् श्लेषपुष्टिः।

13 'रणाश्वमेधे पशुतामुपागता' इतिपदस्य भुजङ्गपदेनानुचितार्थता प्रसक्ता। सा च 'शशी दिवसधूसर' इत्यादावुदाहरिष्यमाणे सहचरभिन्नतेव कथमपि सोढव्या।

१४ 'न चार्थ्युपमाया सदृशस्य वाच्यतया सादृश्यस्यावाच्यत्वेनार्थ्याप्तिरिति वाच्यं शक्यतावच्छेदकसादृश्येऽपि शक्तिमत्त्वेन तस्यापि वाच्यत्वादि'ति रसगङ्गाधरे नागेशभट्टाः।

15 ननु निर्व्यञ्जका उदाहियन्तामलङ्कारा येन विषयविवेकः स्यादित्याह—तद्-द्विरहेणेति। यद्यपि तृतीयं काव्यं चित्राख्यमलङ्कारादीनां शुद्धमुदाहरणं शब्दार्था-

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥३८६॥
चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥३८७॥

---

मात्रणाप्रतिभासमानात् । न च लिङ्गादिगम्यम्, तदनुसन्धानविरहिणोऽपि सादृश्यप्रतीतेः, [10]प्रत्यक्षाविविषयीभूतद्रव्यादिपदार्थातिरिक्तत्वाच्च । तथाहि न तावद्द्रव्यं गुणः कर्म वाऽगुणत्वाद् गुणवृत्तित्वाद्विभागाहेतुत्वात्, [न] सामान्याद्यन्यतममनुगतव्यावृत्त्यैवबुद्ध्यहेतुत्वात् । अतः पदार्थान्तरमेवेति प्राभाकराः । ''परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥'' (न्या.कु.अ. ३।८ का:) इति न्यायाद् भावाभावाभ्यामन्यः प्रकारः शङ्कितुमपि न शक्यः । तथा च विधिरूपतया प्रतीयमानस्याभावत्वं न वक्तव्यम् ।[11] भावरूपश्च गुणवन्निर्गुणं चेति ? तत्र प्रथमे द्रव्यत्वं द्वितीये त्वाश्रितमनाश्रितं चेति । तत्र द्वितीये समवाय एवानवस्थाभयात् । आश्रितन्तु सामान्यवन्नि सामान्यं चेति । प्रथमे तु स्पन्दरूपमस्पन्दरूपं वा ? एतद्यथासंख्यं कर्म गुणश्च । निःसामान्यं निर्गुणम् आश्रितं त्वेकाश्रितमनेकाश्रितञ्चेति । एतदपि यथासंख्यं विशेषः सामान्यञ्चेति । अतः सादृश्यमेवानेका विधामासादयन्नातिरिच्यते । अनासादयन् पदार्थीभूय स्वानुभुतसहते शक्तिसंख्यावदिति नैयायिका (न्या. कु अ. ३।८ वृ: १६३-१६४ पृ.) । एतद्धलापलमीमांसा ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च नेह प्रतन्यते ।

**स्वप्नेऽपीत्यादि—प्रभावप्रभवं कान्तमित्यनेन** वीरश्रृङ्गारादिमत्त्वं दर्शयति । अष्टासु नायिकास्वासन्नायत्ततरमणोत्कृष्टनायिका स्वाधीन-(173b) पतिकेत्युच्यते (द. रू. २।२३) । सा उपमानं, **विजयश्रीरुपमेयं** यथाशब्दो द्योतकः, अपरित्यागो धर्मः । स च सम्बन्धभेदाद्भिन्नोऽप्येकजातीयतया साधारण इति चतुर्णामुपादाने वाक्यगम्येयं पूर्णा श्रौती । **चकितेत्यादि—क्रुधि** ईर्ष्यारोषे । अत्रापि पूर्ववत् **तरुणारुणतारहारिकान्तित्वं** साधारणो

---

10 अत्रापि मीमांसकमरणी सादृश्यस्यातिरिक्तपदार्थस्वीकारे गौरवं नैयायिकधुर्याणामुदयनाचार्याणां ग्रन्थोद्धारेण सूचितम् । पर प्रकृतानुपयोगाच्च नेह प्रतन्यत' इति टीकाकृन्मन्तव्यमलङ्कारशास्त्रे तद्गतेनैव समयेन विषयविवेचनं विपश्चिदालोचनमर्हतीति स्वीकरोति । मैथिलपण्डितराजादय एव साधर्म्यं सादृश्यमित्यर्थं इत्याद्यभिदधति ।

11 'न वक्तव्यम्' इति 'ख' पुस्तके नास्ति ।

अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो [12]लक्ष्मीविलासभवनैर्भुवनं बभार ॥३८८॥

(क. अ. ११३६)

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥३८९॥

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥३९०॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूस्तथा जयश्री-स्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यं, वैचित्र्यञ्चालङ्कारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः। न खलु व्यङ्ग्यसंस्पर्श-

---

धर्मः । सम्भवा इवः । समशब्दो द्योतक इतीयमार्थी । अवितथेत्यादि—सुरतरुसदृश इति 'पूर्वसदृशे'-(पा. २।१।३१)त्यादिना समासः । तद्धितगम्या यथा गाम्भीर्येत्यादि । भुजङ्गः कामुकः[13] । अत्र गङ्गाभुजङ्गस्येव गाम्भीर्यगरिमा तस्येतीवार्थे वति । आर्थी यथा 'दुरालोक' इत्यादि । अम्बररत्नं सूर्यः । स यथा प्रतापातिशयादक्लेनावलोक्यते तथा वर्णनीयोऽपि निदाघसूर्याकारतया दुरालोकतया वर्णनीयसम्बन्धिन्यास्तस्यास्तुल्यत्वेति तुल्यक्रियार्थेऽत्र वतिरित्यार्थीयमुपमा ।[14] यद्यप्यत्र स्वाधीनपतिकेत्यादावुपमाया विषये ध्वनिगुणीभूतव्यङ्ग्यौ सम्भवतस्तथापि (न) तद्व्यवहारः । [15]अत्र हेतुमाह—न

---

12 अत्र अत्यायतैरित्यादिमूलोदाहृते कप्फिणाभ्युदयकाव्यपद्ये श्रीधरेणाव्याकृते 'सदा यो' इत्यस्य स्थाने 'सहायो'इत्यपि समञ्जसः पाठः । 'अयः शुभावहो विधि'-रिति कोषात् श्लेषपुष्टिः ।

13 'एणाश्वमेधे पशुतामुपागता' इतिवदत्र भुजङ्गपदेनानुचितार्थता प्रसक्ता । सा च 'शशी दिवसधूसर' इत्यादावुदाहरिष्यमाणे सहचरभिन्नतेव कथमपि सोढव्या ।

14 'न चार्थ्युपमायां सदृशस्य वाच्यतया सादृश्यस्यावाच्यत्वेनाव्याप्तिरिति वाच्यं शक्यतावच्छेदकसादृश्येऽपि शक्तिमत्त्वेन तस्यापि वाच्यत्वादि'ति शक्रागमे गागाभट्टः ।

15 ननु निर्व्यग्यपा उदाह्रियन्तामलङ्कारा येन विषयविवेक स्यादित्याह—तद्-रहितत्वेनेति । यद्यपि तृतीय काव्यं चित्राख्यमलङ्काराणां शुद्धमुदाहरणं शब्दार्था-

परामर्शादिव चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादिस्तु व्यङ्ग्योऽर्थोऽलङ्कारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः। तद्रहितत्वेन तूदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम्।

**तद्वत् धर्मस्य लोपे स्याच्च श्रौती तद्धिते पुनः।**

धर्मः साधारणः। तद्धिते कल्पबादौ त्वार्थ्येव। तेन पञ्च। उदाहरणम्—

---

खल्विति। 'अलङ्कारान्तरञ्चे'ति—तर्ह्यनुप्रासादिश्लिष्टतर(?)मपि काव्ये तद्व्यवहारो यदा व्यभिचारित्वेन गण्येत तदा तेन सहोपमाऽऽदीनां सङ्करसंसृष्टी स्यातामिति केवलत्वेनैषां विषयो नावकल्प्येत[16]। **तद्रहितत्वेन** त्विति। स चास्फुटतरो रसादिरर्थः। तथाऽलङ्कारान्तराणीति 'नपुंसकमनपुंसकेने'त्येकशेषः (पा. १।२।६६)। अस्फुटश्च रसादिर्गुणी (१७४a) भूतव्यङ्ग्य गृहीत इत्यस्फुटतरोऽत्र गृह्यत इति संस्पर्शपदेन ध्वनितम्' (रु. सं. ६१ पृ.)।

अथ लुप्तोपमा प्रपञ्चयति **तद्वदिति**, पूर्णावद्वाक्यसमासयोः प्रत्येकं श्रौत्यार्थी चेति पञ्चधा। **कल्पबादि** कल्प-जातीयादि। तत्रैव वाक्ये गम्या लुप्तोपमा यथा—

---

लङ्कारभावतया तस्य नव्यालङ्कारनये व्यवस्थापनात्, यथा निरलङ्कारमुत्तमं काव्यं रसध्वनेः, न खल्वलङ्काराणां रसध्वनौ निर्बन्धो यथा चित्रविषये ध्वनिवादिनां तथाऽपि तद्विषयविभागलोभादुदाह्रियमाणा न चमत्काराय। इत्थं गुणीभूतव्यङ्ग्यालङ्कारान्तरयोः सङ्करेऽप्यपोद्धारबुद्धैवालङ्कारा उन्नेतुं शक्याः। वस्तुतस्तु ध्वनिवादिनोऽपि समीक्ष्य विनिवेशितानामलङ्काराणां व्यङ्ग्यानामलङ्काराणाञ्च चमत्कारमङ्गीकुर्वन्ति। एवमप्यप्राचीनानां कविविमर्शकानां पण्डितराजजगन्नाथचरणानां 'निर्दूषणा गुणवती रसभावपूर्णा सालङ्कृतिः श्रवणकोमलवर्णराजिः। *सा मामकीनकवितेव मनोऽभिरामा रामा कदाऽपि हृदयान्मम नापयाती*'त्यादिस्वालङ्कारसिद्धान्तसूचके पद्ये रसगङ्गाधरे द्वितीयानने च सर्वत्रैव समं वाच्यव्यङ्ग्ययोरुभयोरेवालङ्कारजात्योरालोचनम्।

16 एवमेव प्राचीनैरानन्दवर्धनादिभिस्तदनुयायिभी रसगङ्गाधरादिकारैश्चालङ्काराणां वाच्यप्रतीयमानात्मभेदद्वयेन स्वीकारेऽपि वाच्यप्रतीयमानयोर्वैजात्यात् सङ्करसंसृष्टिचिन्ता कृता।

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥३९१॥
आकृष्टकरवालोऽसौ संपराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥३९२॥
करवाल इवाचारस्तस्य वागमृतोपमा ।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ॥३९३॥
उपमानानुपादाने वाक्यगाऽथ समासगा ॥८८॥
सअलकरणपरवीसामसिरि[17] विअरणं ण सरसकव्वस्स ।
दीसइ अहव णिसम्मइ सरिसं अंसंसमेत्तेण ॥३९४॥
( गा. स. वे. ६६५ )

'कव्वस्से'त्यत्र 'कव्वसम'मिति 'सरिस'मित्यत्र च 'णूण'मिति पाठे एषैव समासगा

---

धन्यस्येत्यादि । वचनामृतयोः साधारणो धर्मो माधुर्यादिः प्रसिद्धो यथा शब्दसामर्थ्या दनिर्दिष्टोऽपि प्रतीयते । एवमुत्तरत्रापि द्रष्टव्यम् । आर्थी यथा, आकृष्टेत्यादि । अत्र साधारणधर्मो विनाशकत्वादिः प्रतीयमानः । समासगम्या शब्दोपमा श्रौती यथा—करवालेत्यादि—अत्र पूर्ववदिवशब्देन समासः, साधारणधर्मो दारुणत्वादिः । वागमृतोपमेति पूर्ववत् समासः । उपमाशब्दयोगत्वा [ दा ] र्थी । सैव तद्धितगतस्य यथा—विषकल्पं मनो वेत्सीति । अत्र यद्यपि विषमिव विषमित्युपचारात्त्योपमानशब्दोऽप्युपमेये मनसि वर्तते ततश्च स्वार्थ एव स्वार्थिकः कल्पप्प्रत्ययस्तथापि गुणभूत उपमानार्थमभिधत्ते, शब्दशक्तिस्वाभाव्यात्, यथा शुक्लादिभ्यस्तरबादि । यथा, अयं शुक्लः, अयश्च शुक्लः, अयमनयोरतिशयेन शुक्ल इत्युक्ते शौक्ल्यस्यैव प्रकर्षो गम्यते न तु शौक्ल्यवतस्तद्वदिह विषसदृशं मन इत्यर्थो न तु विषमेवेति । तस्मादुपमाया एव हीदमुदाहरणं न तु रूपकस्येति । यदि जीवसीति यदियोगे भविष्यति वर्तमानप्रत्ययः ( पा. ३।३।१५१ द्रः ) ।

अथोपमानस्य लोपे तद्धितप्रत्ययस्य ततो (174b) विहितस्याभावात् वाक्यसमासगम्यत्वमेव सम्भवतीतीयं द्विधा, न श्रौतीति सम्बन्धः । सअलेत्यादि—सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य । दृश्यतेऽथवा श्रूयते सदृशमंशांशमात्रेणेति[18] ॥ सरसकाव्यपदं नोपपद्यते सदृशमिन्द्रियाणां परनिर्वृतिर्न च भूयस इत्यर्थः । अत्र

---

17 अत्र 'सिरो'ति ह्रस्वप्रयोगश्छन्दोऽनुरोधात् प्राकृतव्याकरणानुयायी चेत्यवधेयम् ।

18 सदृशमशांशमात्रेणेति 'ख' पुस्तक पाठः ।

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।**

**कर्मकर्त्रोर्णमुलि**

'वा'शब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट् समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा कर्तुः क्यङा कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् । उदाहरणम्—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥३९५॥

तथा—

असितभुजगभीषणासिपत्रो रुहरुहिकाऽऽहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥३९६॥

पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥३९७॥

---

परब्रह्मादिकमुपमानमनुपात्तं समासगम्यायां त्वाम्योम् एतदेव पाठान्तरे सत्युदाहरणमित्याह-कऽवस्येति ।

उपमाद्योतकस्य लोपे षोढेत्याह—**वादेर्लोप** इत्यादि । 'वा' शब्दोऽप्यौपम्यद्योतको यथा—लोचनमिन्दीवरं वाऽस्या इति । इवादिलोपश्च समासादिषु षट्सु विधीयत इति षट्प्रकाराः क्रमेणोदाह्रियन्ते । तत इत्यादि—**कुमुदनाथ**श्चन्द्रः, **कामिनीगण्डपाण्डुः** कामिनी-गण्ड इव पाण्डुः, कामिनीगण्डमुपमानमन्तर्गतेवार्थं 'पाण्डु'ना[19] समस्यत इति । **असितेत्यादि**—असितभुजग इव भीषणोऽसिपत्रो यस्येति, इत्युपमानोपमेयसाधारणधर्माणा-मसितभुजगासिपत्रभीषणशब्दैरिवार्थस्य च समासेनाभिधाने 'सर्वं' समासे स्या'दिति सर्व-समासोपमेयम् । अत एवात्रोपमानोपमेययोरेकपदानुप्रवेशः ।[20] पूर्वत्र तु पृथङ् निर्दिष्ट इति विशेषात् पुनरुदाहरणम् । सुतमिवाचरति **सुतीयति** 'उपमानादाचारे' ( पा ३।१।१० ) इति कर्मणि क्यच् । आचरणमत्र साधारणो धर्मः पौरजनमुपमेयमिति द्योतकस्यैव लोपः । अन्तःपुर इवाचरतीत्यन्तःपुरीयति, 'अधि-(1752) करणाच्चेति वक्तव्य'-(पा. ३।१।१०) मिति क्यच् । अत्र रणाभ्यन्तरमुपमेयं [ **नारीयते** ] नारीवाचरतीति 'कर्तुः क्यङ् सलोपश्चे'ति ( पा. ३।१।११ ) क्यङ् । कृत्वसेना तु द्विविधा, कर्मोपमानिका कर्तुपमानिका

---

19 'पाण्डु'ना सह समस्यत इति 'क' पाठः ।

20 'पदानु' इत्यस्य स्थाने 'प्रमेय' इति (ख) पाठः ।

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥३९८॥

एतद्द्विलोपे क्विप्समासगा ॥८७॥

एतयोर्धर्मवाचोः। उदाहरणम्—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ३९९॥

परिपन्थिमनोराज्य[21]शतैरपि दुराक्रमः।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥४००॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते।

ढुण्ढुण्णन्तो मरिहसि कण्टअकलिआइँ केअइवणाइं।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥४०१॥

( गा. स. वे. ६८५ ) ( ध्व. श्या. लो. ११६६. )

---

च। तत्राद्या यथा **मृध** इत्यादि। मृधे संग्रामे। अत्र शत्रवो निदाघसूर्यमिव तं पश्यन्तीत्यर्थः। स च **पार्थसञ्चारं सञ्चरति**, पार्थ इव चरतीत्यर्थः, 'उपमाने कर्मणि चे'ति ( पा. ३।४।४५ ) चकारात् कर्तर्यपि णमुल्। [ **एतदिति—** ] एवमेकस्य लोपे लुप्तोपमां प्रदर्श्य द्वयोर्लोपे दर्शयति। तत्र साधारणधर्मद्योतकयोर्लोपे द्विधा क्विब्गम्या समासगम्या चेति। तत्राद्या यथा **सवितेति**। विधवति विधुरिवाचरतीति "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य"मिति ( पा ३।१।११ ) क्विप्। समासगम्या यथा **परिपन्थीत्यादि**। अत्र राजकुञ्जर इति 'वृन्दारके'त्यादिना ( पा २।१।६२ ) समासः। तत्र च 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( पा २।१।५६ ) इत्यनुवर्तते। धर्मोपमानयोर्द्वयोर्लोपे समासगम्या वाक्यगम्या चेति द्विधा यथा **ढुण्ढुण्णन्तो** इत्यादि। ढुण्ढुणन् परिभ्रमन्मरिष्यसि कण्टककलितानि केतकीवनानि। मालतीकुसुमसदृक्षं भ्रमर भ्रमन्न प्राप्स्यसि ॥ इयं हि प्रियतमेन सहोद्याने विहरन्त्याः कस्याश्चिदितस्ततः [ कमपि ] सञ्चरन्तमवलोक्य ससौभाग्यगुणादभिमानवशादन्यापदेशेनोपालम्भगर्भोक्तिः। अत्र यद्यपि 'तेन तुल्य'मित्यादौ ( पा ५।१।११५ ) तुल्यादिपदानामुपमेय एव विश्रान्तिरित्युक्तं तथापीह

---

21. मनोरथमित्यर्थे मनोराज्यपदमप्रयुक्तम्। न च राजपदेन प्रस्तुतेन तस्य सम्बन्धः कल्प्यः, दुराक्रम इत्यनेनैव तदन्वयात्।

'कुसुमेण समं' इति पाठे वाक्यगा ।

क्यचि वाद्युपमेयासे

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।

कृपाणोदग्रदोर्दण्डः सहस्राक्षायुधीयति ॥४०२॥

अत्रात्मा उपमेयः ।

त्रिलोपे च समासगा ॥९०॥

त्रयाणां वादिधर्मोपमानानाम् । उदाहरणम्—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।

स्मरशरविसराचितान्तरा[22] मृगनयना हरते मुनेर्मनः ॥४०३॥

अत्र 'सप्तम्युपमाने'त्यादिना ( पा. २।२।२१ ) यदा समासलोपौ भवतः तदेद-

---

कुसुमेन सदृशमिति सदृशशब्दाभिधेयस्योत्कृष्टतरगुण (175b)त्वेनाप्राप्यताप्रतिपादनात्तदुपमानत्वं बलायातम् , तस्य च साक्षादनिर्देशादुपमानस्यैव लोपः । उपमाद्योतकोपमेययोर्लोपे क्यच्प्रत्ययगम्या यथा—अरातीत्यादि । सहस्राक्षायुधीयतीति[23] वज्रमुपमानम् । आत्मोपमेयः । स च द्योतकश्च लुप्तः । क्यच्प्रत्ययोक्तत्वाचारार्थ-पूर्ववत् समानो धर्मः । त्रिलोपे त्वेकस्यैव यथा तरुणिमनीत्यादि । मृगनयनेति—"मृगनयने इव नयने यस्याः, अत्र दीर्घापाङ्गत्व-शुभ्रत्व-कृष्णतारकत्वादिसाधारणगुणद्योतकोपमानशब्दानां त्रयाणां लोपः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहेरुत्तरपदलोपश्च'-( पा. २।२।२४ ) त्यादिना हि प्रकरणेन यदुत्तरपदं लुप्यते तत् 'कण्ठेकाल' इत्यादाविव सर्वत्र प्रथमोत्पादित[24]समासस्थमेव, समाससन्नियोगेनोत्तरपदलोपविधानात् , तदानीं तस्यैवोत्तरपदत्वात् । बहुव्रीहौ तु विहिते द्वितीयस्योत्तरपदत्वमिति कुतस्तस्योपमेयभूतस्य लोपः ? यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इत्युष्ट्रमुखवत् रूपक-

---

22 विशरारितान्तरेति क्वाचित्कः पाठः । विशरारितं विभिन्नं विदारितं वेति व्याख्यानम् ।

23 प्रचलितपुस्तके 'स सहस्रायुधीयती'ति पाठो दृश्यते । प्रदीपधृतपाठस्तु सहस्रारायुधीयतीति । मूलधृतपाठे श्रीधरटीकायां सहस्राक्षस्यायुधं वज्रमिति पूरणीयम् ।

24 'प्रथमोदित' इति 'ख' पाठः ।

मुदाहरणम्। क्रूरस्याचारस्याय:शूलतयाऽध्यवसायादयःशूलेनान्विच्छति[25] 'आयःशूलिकः' इत्यतिशयोक्तिर्न तु क्रूराचारोपमेयतैक्ष्ण्यधर्मवादीनां लोपे त्रिलोपेयमुपमा।

एवमेकोनविंशतिर्लुप्ता, पूर्णाभिः सह पञ्चविंशतिः।

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता।
मम्लौ साऽथ विषादेन पद्मिनीव हिमाम्भसा॥४०४॥

इत्यभिन्ने साधारणे धर्मे

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥४०५॥

इति भिन्ने वा तस्मिन्नेकस्यैव बहूपमानोपादाने मालोपमा।

---

समासस्यैव विषयो न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः। अतएवाह यदेति।" (छ. स. ६२पृ:)। आय:शूलिक इति पार्श्वेनान्विच्छतीति तृतीयाया (पा. ५।२।७५) अनुवृत्तेरयःशूलदण्डाजिनाभ्यां ठक् च (ठक्ठञौ) (पा ५।२।७६) इति ठकि रूपम्। अर्थार्जनोपायः कश्चिदतिदारुण उपमेयः, तैक्ष्ण्यादिः साधारणो धर्मः, इवादिरुपमाद्योतकः। एषां त्रयाणां लोपात् त्रिलोपोपमेयमिति (176a) यत् केनचिदुक्तं[26] तन्न युक्तमित्याह नत्विति। क्रूराचारश्चासावुपमेयश्चेति कर्मधारयः। अतिशयोक्तिरियमित्यत्र बीजमाह—क्रूरस्याचारस्येति। अर्थार्जनोपायस्य साहसरूपस्यायःशूलतयाऽध्यवसायात्। तदेवमेकस्य लोपे वाक्यगम्यास्तिस्रः, समासगम्यास्तिस्रः, तद्धितगम्यैका, सुब्धातुप्रत्ययगम्यास्तिस्रः, कृद्गम्ये द्वे इति त्रयोदश। द्विलोपे सुब्धातुगम्ये द्वे, वाक्यगम्यैका, समासगम्ये द्वे इति पञ्च। त्रिलोपे त्वेकैव—इत्येकोनविंशतिर्लुप्ता। पूर्णाया भेदाः षड् दर्शिता एव, अतस्तैः सह पञ्चविंशतिर्भेदाः।

अनयेनेवेत्यादि—मानिनीगता म्लानिः सर्वत्र राजलक्ष्म्यादावभिन्नेति साधारणधर्मस्यानुगामितयैकरूपेण निर्देशः। अनयादिभ्यश्च विषादाद्युपमानभूतेभ्यः पृथक् पृथगिवशब्दप्रयोग इति विस्तरेणोपमितेर्मालोपमाभेदोऽयम्। मम्लावित्येकेन दीपस्थानीयेन दीपनाद्दीपकमत्रानुप्रविष्टं प्रतीयमानं द्रष्टव्यम्। ज्योत्स्नेवेत्यादि—भिन्ने वा तस्मिन्निति

---

25 अन्विच्छतीत्यनुसरतीत्यर्थं इति पुरुषोत्तमादयः। तेन नानुकारोऽत्रार्थः वस्तुतस्तु पाशुपतायाचारस्यैव प्राक् प्रयोगो जातः, अतो नेयमुपमा।

26 'एकद्वयत्रयाणाञ्च लोपात् स्यात्लोपिनी त्रिधे'ति चिरन्तनानामुद्भटादीनामयं पक्षः।

यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नधर्मत्वे—

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥४०६॥
मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा [27]प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥४०७॥

---

साधारणधर्मे । अत्र ज्योत्स्नाऽऽदीना प्रत्येकं नयनानन्दनत्वादिः साधारणो धर्मो भिन्नः । नितम्बिनी तु सर्वसाधारणधर्माश्रयेत्येकस्यास्तस्या विस्तरेणोपमितेरियं मालोपमा । तदुक्तं ( रु. का. ८।२५ )—मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम् । उपमीयेतानेकैरुपमानैरेकसामान्यैः ॥ इति ।

अथ रशनोपमामाह यथोत्तरमिति । पूर्ववदिति मालोपमावदियमपि द्विप्रकारा । अत्राभिन्ने साधारणधर्मे ( 176b ) यथा अनवरतेत्यादि । अत्र भणितिमतिचेष्टाकीर्तीनामतिविमलत्वलक्षणः साधारणधर्म एकः । तत्र भणितिमतिप्रभृतीनामुपमेयानामुत्तरमुत्तरं प्रत्युपमानत्वे रशनान्यायेन पश्चाद्वलनया पृथक् पृथगिवशब्दस्य न्यास इतीयं रशनोपमा । भिन्ने साधारणधर्मे यथा अनवरतेत्यादि—अत्र माधुर्यादिः साधारणधर्मः प्रत्येकं भिन्नः । प्रथना च पूर्ववदेव । एवंविधेति समस्तोपमाप्रभृतिर्यथा—अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते । भान्ति लतना इव लता पाणिभिरिव किसलयैरधिकम् ॥ ( रु. का. अ. ८।१३ ) अत्र लतानां ललनानां तथाऽलिवलयादीनामलकादीनाञ्च सादृश्यं प्रतीयत इत्यवयविनामवयवानाञ्च सामस्त्येन वाक्यार्थयोरौपम्यम् । एकदेशोपमा यथा—नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ (अ. स. समासोक्तिप्रकरणम्) अत्र सरःश्रियां नायिकात्वं प्रतीयते । तच्च न समासोक्तिः, विशेषणसाम्याभावात् । नायिका ह्यत्रोपमानत्वेन प्रतीयते न तु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिः । अत्र एकदेशोपमैवात्र बीजम् ( अ. स )। एवमेकेवशब्दिकाऽनेकेवशब्दिकाऽऽदिप्रभेदा द्रष्टव्याः । उत्प्रेक्षोपमा[28] तूत्प्रेक्षेव, अतः साऽत्र नोदाहार्या यथा—किंशुकव्यपदेशेन तरुमारुह्य सर्वतः । दग्धादग्धमरण्यान्याः पश्यतीव विभावसुः ॥ अत्र व्यपदेशपदेन किंशुककुसुमानामग्निसादृश्य-

---

अत्रास्या उपमेति न निर्विशेष विधेयमपि तु तिलोपोपमेयमिति । स च पक्षो मूलकृतामस्वरसत्वेन टीकाकृताऽऽश्रितः ।

27 सनेऽत्र प्रभेति केचित् पठन्ति ।

28 'मध्येशास्या मुक्षधोरिलतमिन्दोर्विकत्थनैः । पद्मेऽपि सा यदस्त्येवेत्यसा-

इत्यादिका दशनोपमा च न लक्षिता, एवंविधवैचित्र्यसहस्रसम्भवादुक्तभेदानतिक्रमाच्च।

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।**

**अनन्वयः**

उपमानान्तरसम्बन्धाभावोऽनन्वयः। उदाहरणम्—

**न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।**
**यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः॥४०८॥**

**विपर्यास उपमेयोपमा तयोः॥९१॥**

**तयोरुपमानोपमेययोः। परिवृत्तिः अर्थात् वाक्यद्वये इतरोपमानव्यवच्छेदपरा। उपमेयेनोपमेत्युपमेयोपमा। उदाहरणम्—**

---

मभिसन्धाय दर्शन-(177a) क्रियोत्प्रेक्ष्यत इत्युपमानार्थस्योत्प्रेक्षायामेवानुप्रवेशः (भा. का. अ. २।८५द्रः)।

उक्तरूपवैपरीत्येन वाक्यार्थवर्ति उपमाप्रपञ्चद्वयं लक्षयति।

यद्यपि यत्र पदार्थानां भेदसादृश्याध्यासितत्वमूर्तित्वं नास्ति तत्रोपमानोपमेयभावो न सम्भवत्येव तथापि यदा कविना यस्य कस्यैव वस्तुनः सदृशमन्यन्नास्तीति तात्पर्येण विरुद्धधर्मसंसर्गः परिकल्प्यते तदाऽनन्वयो नामालङ्कारः। अत एवान्वर्थताऽपि। **न केवल**मित्यादि—अत्र नितान्तकान्तित्वमसाधारणो धर्मः। अत एव कस्यापि वस्तुनो भेदमुपकल्प्य प्रतीयमानसादृश्यमौपम्येनाभिधीयते। एवं तद्विलासानामप्यन्यविलासाः सदृशा न सन्तीति तात्पर्यम्।

**विपर्यास** इति—**तयो**रित्यनेन सन्निकृष्टपरामर्शो न सङ्गच्छत इति व्याचष्टे **उपमानोपमेययो**रिति। विपर्यासशब्दार्थमाह **परिवृत्ति**रिति। उपमेयस्योपमानत्वमुपमानस्योपमेयत्वमित्यर्थः। न चैतावताऽयं परिवृत्त्यलङ्कारः दानप्रतिदानरूपस्य विनिमयस्याभावात्। उपमेयेनोपमानधुराऽधिरूढेन कारणात्मनोपमानस्योपमेयताऽऽपादन उपमेयोपमा नामालङ्कारः।

---

चुतप्रेक्षितोपमा॥' इत्याचार्यदण्डिनिर्दिष्टितोत्प्रेक्षितोपमा त्विवो भिन्नैव। 'मङ्गलीभिरिव केशसञ्चय'मित्याद्युदाहृते कुमारपदे काव्यालङ्कारसूत्रवृत्तौ निदर्शितोत्प्रेक्षाऽवयवस्त्वेतत्प्रायः एव। 'उत्प्रेक्षाया हेतुरलङ्कार उत्प्रेक्षाऽवयवः। अवयवशब्दो ह्यारम्भकं लक्षयती'ति तत्र वृत्तिग्रन्थः। वस्तुतस्तु पूर्वनेविकायां सादृश्यमूलाया उपमाया अध्यवसायमूलयोत्प्रेक्षया संश्लिष्टत्वं वक्तव्यमेव।

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति वत यस्य ॥४०१॥
सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।

---

अनन्वय एकवाक्यार्थवर्ती, अयन्तु वाक्यार्थद्वयवर्तितयैव घटत इत्याह **अर्थादिति**। विपर्ययप्रयोजनमाह—**इतरेति**। **कमलेवेत्यादि**—देदीप्यमानताऽऽदिरत्र साधारणो धर्मः। तत्राद्यवाक्यस्थयोरुपमानोपमेययोः, द्वितीये वाक्ये परि-(177b)वृत्त्या परस्परशब्दस्येनान्योऽन्योत्कर्षस्तृतीयसदृशव्यवच्छेदपरः प्रतिपाद्यते। 'इयञ्च यथा धर्मस्य साधारण्ये तथा वस्तुप्रतिवस्तुनिर्देशे च दृश्यते। यथा—सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः। वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥' (अ. स. उपमेयोपमाप्र०)

एवं मुख्यामुख्यप्रकाराभ्यामुपमां निर्णीयानन्तरं तदाश्रितानलङ्कारान्[29] कथयति—**सम्भावनमथेति**। सम्भावनमभिमान उत्प्रेक्षेत्यनर्थान्तरमेव। पर्यायेण लक्षणं युक्तमित्यलङ्कारबीजतामाह—**प्रकृतस्येति**। प्रकृतगतत्वेनोपमानसम्बन्धहेतुकं सम्भावनमुत्प्रेक्षानामाऽलङ्कारः। नेयं भ्रान्तिज्ञानस्वरूपा, बाधपुरःसरत्वात्। सञ्जातबाधत्वेऽपि कविप्रतिभोत्थाप्यतया सम्भाव्यस्यानुप्रतीतिरबाधितैव प्रतिभातीति चमत्कारविशेषार्थकत्वाद्-स्यान्यालङ्कारवैलक्षण्यम्।[30] अनेन हि कवेः शक्तिव्युत्पत्ती सुतरां प्रकृष्येते, यदाह—'को हि

---

29 अर्थालङ्काराणामुपजीव्यधर्माश्रयेण रुद्रटादिभिः प्रकटितः कक्षाविभागो श्रीधरादिटीकाकृतां मार्गोपदर्शकः। परम् 'अर्थस्यालङ्कारा वास्तवौपम्यमतिशयः श्लेष' इति रुद्रटेन कृतं चातुर्विध्यप्रदर्शनं यथा नैकान्तिकतया शुद्धं तथाऽत्रापि। अन्यच्च भामहदण्डिवामनोद्भटादीनामर्थालङ्कारोपस्थापनक्रमो यथाऽवान्तरतयैव वरीवर्ति मम्मटग्रन्थेऽपि तथा, विशेषतस्तु तत्परिपूरकेऽलङ्कारप्रबन्धेऽमत उपस्थापिते।

30 श्रीविद्याचक्रवर्तिनोऽस्य वैलक्षण्ये युक्तिमित्थमुदाहरन्ति 'यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति। तदोपमैव येनेवशब्दः साधर्म्यवाचकः॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः'॥ इति। अत्र 'कविकल्पित' इत्यस्याप्यनध्यवसायमूलत्व एव तात्पर्यम्। एवमपि प्राचा वामनेन 'यदेवोपमेयमुपमानञ्च प्रसिद्धं तदेव परिगृह्यते नेतरदि'ति वृत्तौ 'गुणबाहुल्यतश्च कल्पिते'ति चोपमालक्षणसूत्रे स्पष्टमुक्तम्। एवमप्यलङ्कारसर्वस्वे उपमालक्षणव्याकरणप्रसङ्गे रुचकेन 'वृत्ताबुपमानोपमेययोरिति प्रतीतोपमानोपमेयनिषेधार्थम्।'

समेनोपमानेन। उदाहरणम्—

> उन्मेषं यो मम न सहते जातिवैरी निशाया-
> मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
> नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
> ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥४१०॥
> लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
> असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥४११॥

(बा. द. १।१६ ; मृ. श. १।३४)

इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्।

---

प्रतीविमानसारे वाक्ये (काव्ये) वस्तुस्थितिं व्याचयेदि'ति (का. मी. १६पृः दः, प. जी. १।११३ः, १।१२३ः)। **जातिवैरी** निरुपधिशत्रुः। **ललिततन्वि**त्यामन्त्रणे। अत्रोपमानोप-मेयभावाचरणयोः पद्मलक्ष्मीसम्बन्धे व्यवस्थिते शत्रुनिराकरणोपजातो हर्षगुण. कविना लोकोत्तरताप्रतिपादनार्थं निमित्तत्वेन सम्भाव्यत इत्येवंरूपेयं सम्भावना। 'मन्ये'-प्रभृतिवदिवशब्दोऽपि[31]। यत्रोपमानोपमेययोः साधारणधर्मो न प्रतीतिपथमवतरति तत्रैतत्-सामग्रीसद्भाव उत्प्रेक्षामेव (178a) व्यनक्ति यथा **लिम्पतीवे**त्यादि। अत्र तमोनभसी कर्तृणी। तद्गतत्वेन प्रकरणादिनोपस्थापितं व्यापनादि **लेपनादिरूपतया** प्रकर्षविवक्षया कविनोत्प्रेक्षितम्। तदिय क्रियोत्प्रेक्षा। जातिद्रव्योत्प्रेक्षेऽपि[32]। तत्र जात्युत्प्रेक्षा यथा—

---

-यद्यपि तदुपरि सञ्जीवन्याधाप्रतीततरभवर्णनीयस्यापि वर्णनीयत्वमिति लक्ष्यसङ्कोच-स्तेनैव साधितस्तथापि कविसमयसिद्धैव सधर्मतोपादेया। उत्प्रेक्षायामादरः प्राचामर्वाचाञ्च 'उत्प्रेक्षा दाक्षिणात्याना'मिति भट्टवाणमन्तव्येनोत्प्रेक्षावल्लभादि-संज्ञितानामर्वाचां कवीनां सन्दर्भसङ्कलनेन च सूच्यते।

31 अत्र 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दै-रिवशब्दोऽपि तादृशः' ॥ इति काव्यादर्शे संग्रहः, यदा नूनं सत्यमित्येवमादी शब्दः साक्षाभिधयोऽस्तीति युक्ता। नैवोत्प्रेक्षा, सा हि सम्भावनायां, सा चापि स्यात् संशयाभावर्थतोऽस्तो'त्यलङ्काररत्नाकरवृतः परिकरश्लोकस्य स्मरणीयो। 'मन्ये' इत्यादिना यन्मतादयालङ्कारसिद्धिः यैश्चित् स्वीकृता तत्र युक्तमित्यग्रेव प्रदर्शयिष्यते।

32 उपमानस्याप्रतीतत्वे नौपम्यं किन्तु सम्भावनमूलमुत्प्रेक्षणमेवेत्यर्थः कुवलयानन्द-

**ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥९२॥**

**भेदोक्तौ यथा—**

**अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः**
**कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।**
***कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं***
**समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥४१२॥**

---

स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः। स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥ (का. अ. सू. वृ. ४।३।९) अत्राङ्कुरशब्दस्य जातिशब्दत्वाज्जातिरुत्प्रेक्ष्यते। द्रव्योत्प्रेक्षा यथा— देहस्थदर्पणे यस्य पश्यति प्रतिमामुमा। अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरात्मकम् ॥ (का.स्व.सू.वृ.)। अत्र प्रतिबिम्बरूपेण दर्पणेऽन्यथाऽवस्थितस्यार्धनारीश्वररूपस्यैकत्वाद् द्रव्यत्वमिति द्रव्यमुत्प्रेक्ष्यते। यथा च भावस्य सम्भावनोत्प्रेक्षा तथाऽभावस्यापि। तदुक्तम्— (का. अ. सा. स. ३।३९-४०) साम्यरूपाविवक्षायां वाच्येवाद्यात्मभिः पदैः। अतद्गुणक्रियायोगादुत्प्रेक्षाऽतिशयान्विता ॥ लोकातिकान्तविषया भावाभावाभिमानतः। सम्भावनेयमिति (उत्प्रेक्षा)। *यथा (का. अ. सा. द. ३।४०७)—कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ। अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥* इति। अत्र कपोलयोः प्रकृतयोः सागतागमनयोगादर्शनहेतुत्वेनाभावरूपं सम्भावितम्। 'लक्षणहेत्वोः क्रियायाः' (पाः ३।२।१२६) इति ह्यत्र शतृप्रत्ययः। मताभिधानस्यालङ्कारस्यान्यैः पृथग्लक्षितस्याप्यत्रैवान्तर्भावो द्रष्टव्यः।[33]

(178b) सम्भावनाऽऽत्मिकोत्प्रेक्षा नोत्कटैककोटिकसंशयरूपेति दर्शयितुमाह— **ससन्देहस्त्विति**। 'तु'शब्दः पूर्वस्माद् व्यतिरेके। एकस्मिन् धर्मिणि विरोधिनानार्थविमर्शः संशयः किमयं किं नाऽयमिति। अयञ्च साधकबाधकप्रमाणाभावादिसामग्रीसहकृतवादि-

---

कारायाः। तन्मतं विचारासहमिति न सर्वैर्गृह्यते। तथात्वे 'सकलकल' पुरमेत'दित्यादौ श्लेषानुप्राणितोपमास्वीकारो दुर्घटः स्यात्।

33 'तन्मतमिति यत्रोक्ता वक्त्राऽन्यमतेन सिद्धमुपमेयम्। अथ गुणादथोपमानं तथा विशिष्टं स्वमतसिद्धम् ॥' इति रुद्रटेन लक्षितं 'शदिरामदभरे'त्यादौ 'मन्येऽहमिन्दुरेष' इत्यादौ च निदर्शितम्। साध्यसाधनतात्ज्ञानाभावान्निश्चिततया प्रतीतिविवक्षाभावाच्चेदमनुमानालङ्कारादर्थाल्लक्षणीयाद्भिन्नम्।

भेदोक्ताविल्यनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः। यथा—

इन्दुः किं क कलङ्कः सरसिजमेतत् किमम्बु कुत्र गतम्।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः॥४१३॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इत्युपेक्षितो भट्टोद्भटेन। तदुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो न पुष्पाकरः।

---

प्रतिभादिविप्रतिपत्तिजन्यादिभेदभिन्नस्त्रिधा। पञ्चधेत्यन्ये ( रुद्रट ८।५९-६६ )। अत्र त्वलङ्कार-प्रस्तावात् सादृश्यहेतुक एव। सोऽपि विच्छित्त्यर्थं कविप्रतिभोत्थापित एवोपादेयो न पुनः स्वरसोत्थापितः 'स्थाणुर्वा स्यात् पुरुषो वे'त्येवंरूपः। ससन्देह इति लक्षणम्।[34] उपमानेन सन्दिह्यमानस्योपमेयत्वप्रतिपत्तिनिरासार्थमुत्तरकाल( त्वे ) भेदः प्रतिपादितः स्यान्न वा, शुद्धस्यैव तस्याविच्छित्त्या प्रतिपादितत्वात्। अयमित्यादि—किमित्यनेन विमर्शात्मा प्रकाश्यते। अत्र यद्यपि प्रतिभटान् प्रति वर्णनीयस्य राज्ञः सूर्यादिक्रियाकारितया स्तुति-प्रतिपादनायायमेव सूर्याद्यात्मको न भवतीति निश्चीयते तथापि स निश्चयः प्रतीयमानो न तूत्तरोदाहरणवद्वाच्य इति संशयोपक्रमो वस्तुतत्त्वानिर्णयाद्विकल्पान् विदधातीति संशयान्तर्थेति निश्चयगर्भोऽयं सन्देहः। तदिह सूर्यादिसदृशोऽयमित्युपमा, लोकोत्तर-तेजस्वितादिगुणाध्यारोपादयमेव सूर्यात्मक इति रूपकम्, असंभवतुरगादिसमन्वयात् सूर्यादिभ्यो व्यतिरेकः, लोकोत्तरतेजस्वितायुतत्वादतिशयोक्तिरित्येतेऽलङ्काराः प्रतीयमाना अपि (179a) वाच्यानुगता एव।

निश्चयान्तो यत्र संशयोपक्रमेऽपि निश्चये पर्यवसानं यथा—इन्दुः किमित्यादि। आश्चर्यमात्रं तु करोतीति नैतावता मुख्यालङ्कारत्वमित्ययं प्रकारो नद्भिर्भट्टेन्दु-प्रभृतिभिरुपेक्षितः।[35] शुद्धो यत्र संशय एव पर्यवसानं यथा—अस्या इत्यादि।

---

34 'स सन्देह' इति केषाञ्चिन्मते पदद्वयम्, स इति च्छेदः। [illegible]
इति मूलकारिकायां यत्पदाध्याहारेणेत्थं समर्थितं तैः। [illegible]
इत्युद्भटकृता संज्ञा, तामेवानुसरति मम्मट इत्युन्नीयते। [illegible]
'संशय' इति रुद्रटस्य संज्ञानिर्देशः।

35 अत्र ग्रन्थकृता रुद्रटमतमेव व्याख्यातम्। [illegible]

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥४१४॥

( वि. उ १।१० )

तद्रूपकमभेदो य उपमानोपमेययोः ।
अतिसाम्यादनपह्नुतभेदयोरभेदः ।
समस्तवस्तुविषयं श्रौत आरोपिता यदा ॥९३॥

अत्र कथमेवंविधं रूपं निर्मातुं यथोक्तः पुराणो मुनिः प्रभवेत्, अतश्चन्द्रादिष्वन्यतमेन प्रजापतिना भवितव्यमित्ययमतत्त्वानुपाती शुद्धः संशयः। यद्यपि 'निर्णयासन्नो वितर्कः' 'वितर्कसहः संशयः' ( न्या. सू. ) इतिसंशयवितर्कयोर्भेदात्'निर्णयान्तरालवर्त्यूहो वितर्क' इति वितर्कालङ्कारस्य कैश्चिल्लक्षणं कृतं तत्र चैतदुदाहृतम् ( स. क. आ. ३।१२२ ) तथापि वितर्कहेतुतया संशयस्य प्रथममेवाभ्युदीयमानत्वात्, तावतैव वैचित्र्यातिशयात् 'किं'-'नु'-प्रभृतीनाञ्च शब्दानां संशयवितर्कयोस्तुल्यरूपत्वात् संशयेन वितर्कं गर्भीकृत इति तस्यात्रैवान्तर्भाव इति ग्रन्थकर्तुरभिप्रायः।[36] एवञ्च ( स. क. आ. ३।१२१ )— मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि। तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणमां ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति॥ अत्रापि तत्त्वानुपातिनः संशयस्यैव प्राधान्यं द्रष्टव्यम्।

भेदानुक्त्युपक्रमे[37] सन्देह उक्त इत्यभेदप्राधान्येन तत्त्वारोपरूपत्वेन साधर्म्यवैधर्म्याभ्यां तदनन्तरं लक्षयति तद्रूपकमिति। अनपह्नुतेति[38]—'अपह्नुतभेदत्वेऽतिशयोक्तेर्भावात्। (179b) आरोप्यमाणरूपेणारोपविषयस्य रूपवतः करणाद्रूपकमित्यन्वर्थं नाम ( अ. सं. ४४पृ: ), अत एव 'खले वाली यूप' (मी. सू. शा. भा. १०।१।६) इति नात्र विषयः। अत्र

इति टीकाकृता तृद्धमतपक्षे युक्तिरुदाहृता।

36 एतां मतसमर्थने शोभाकर एवमाह—अर्धद्वयोल्लेखवती मतिर्या स संशयः केवलवस्तुनिष्ठः। सम्भावना बाधकबाधनीया यत्र स्फुरत्तत्र भवेद्वितर्कः॥ परं मूलकृन्मतमेव समर्थनीयमिति विचारप्रवीणाः।

37 'भेदानुक्तौ पक्षे ससन्देह' इति 'क' पुस्तके पाठः।

38 अत्र सूत्रेऽनपह्नुतस्वस्य निर्देशो नास्तीति वृत्तावुक्ति। परं स एव ग्रन्थकृतपक्ष इत्युपह्नुत्यलङ्कारलक्षणेनायाति। एवं सति ज्योत्स्नाभस्मेत्याद्युदाहरणे लाञ्छनस्य

आरोपविषय इव आरोप्यमाणो यदा शब्दोपात्तस्तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् ।[39] यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥४१५॥

---

केचिच्छब्दारोपपूर्वमर्थारोपं ब्रुवते, अपरे विपर्ययम्, अपरे यौगपद्येनोभयम्। एष एव च युक्तः पक्ष इति ( हे.च.का.अ.वि. २४६ पृः द्रः ) भट्टोद्भटप्रभृतयः ।[40] अस्य च वाक्योक्त-(वक्रोक्ति) समासोक्त्यादिभेदा अत्रानुक्ता अप्युदाहृतेषून्नेयाः । [श्रौत इति] श्रुतिर्निरन्तरार्थ-निष्ठशब्दव्यापारस्तत्प्रतिपादितः । आरोपितस्य यो विषय आश्रयः स यथा **श्रौतस्तद्वदारोप्यमाणोऽ**पि श्रौतः, साधारणधर्मान्वयेन गौणीवृत्तिमाश्रित्य सामानाधिकरण्यं

---

च्छलेनेत्यपह्नुतिस्पर्शः कथञ्चित् समाधेयः ( ४१ टिः द्रष्टव्या )। सारोपलक्षणालक्षणोपरि वृत्तौ 'गतानपह्नुत्यभेदा'विति निर्देशोऽस्यैवार्थस्य ज्ञापकः। अत्र साहित्यचूडामणिग्रन्थो ( २८१ पृ. ) विवेकमतमनुपदत्तीति शब्दतोऽर्थतश्च प्रतिभाति । न केनापि तर्केण तस्य द्वादशशताब्द्याः पूर्वभागेऽवस्थिति-सम्भाव्येतेत्यनुमानं यत्तस्य पर्यायक्रमेण सर्वत्रालङ्कारसर्वस्वसूत्राण्युद्धरतो न सम्भवतीत्यतिरोहितमेव प्राज्ञानाम् । अन्यच्चातोऽलङ्कारसर्वस्वकारश्चिरन्तन इति भट्टगोपालस्य व्याहृतिः श्रीधरेण च 'नवीनाः' इति यः परामृष्टः। यदयम् 'अस्याः सर्गविधा'वित्यादिश्लोकविवरणे ( ३०६ पृः ) 'अत्र पुराणब्रह्मनिर्माणे सम्बन्धेऽप्यसम्बन्ध उक्त इति चिरन्तनाः' इति स्पष्टत एव अलङ्कारसर्वस्वकारं चिरन्तनं वदति ।

39 अत्र कारिकायां ( श्रौत आरोपितो यदा ) वृत्तौ च श्रीधरधृतपाठे प्रथमान्ततैव सम्भवतीति विवेकग्रन्थतोऽनुमीयते। 'आरोपिता इति बहुवचनमविवक्षित'मिति च टीकायां न विवृतमत एवदंशो मूलपाठे नासीदपि च सम्भाव्यते ।

40 आचार्यहेमचन्द्रकृतकाव्यानुशासनविवेक एव 'एव युक्तः पक्ष इत्याहु'रित्यन्तो निर्देशो दृश्यते। श्रीधरस्तु भट्टोद्भटप्रभृतय इति मूलप्रमाणं निर्दिशन्ति। एवमपि स्यात् यदुद्भटकृतकाव्यालङ्कारसारसंग्रहोपरि विवरणे राजानकतिलककृत उद्भटविवेक एवैतन्मन्तव्यमस्तीति ।

अत्र पादत्रये अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्या ।

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।।**

---

भजते तदा समग्रमारोप्यारोपविषयात्मकमुभयं वस्तुविषयं शाब्दं यस्येति **समस्तवस्तुविषयम्** । यथा **ज्योत्स्नाभस्मे**त्यादि । अत्र **पादत्रय** इति—चतुर्थेऽपह्नुतेः सद्भावात् ।[41] निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालो रात्रिः । अत्र किं रात्रिः कापालिकी वेति व्याघ्रादीनामाकृतिगणत्वे 'उपमितं व्याघ्रादिभि'रिति (पा २।१।५६) समासे रूपमित्युपमा, उत रात्रिरेव कापालिकीति मयूरव्यंसकादीनामाकृतिगणत्वात् 'मयूरव्यंसकादयश्चे'ति (पा. २।१।७२) रूपकम् ? अत्राद्ये रात्रेरुत्कटतया प्रतिपत्तिरिति तस्याः प्राधान्यम्, द्वितीये तु तिरोहितरात्रिरूपतया कापालिक्याः । अत एकतरसाधकबाधकप्रमाणाभावादत्र सन्देहसङ्करेण भवितव्यमित्याशङ्क्याह—**आरोपितधर्म एवे**ति तत्र प्रसिद्धतरत्वेनानुकूल्यात् । (१४०३) न ह्यन्तर्धानव्यसनरसिकत्वयोग्यता रात्रेः प्रसिद्धा, तस्माद्रूपकपरिग्रहे साधकम् । अत एव भ्रमतीति क्रियाऽपि मुख्यतयैवोचितेति । यदाहुः—यत्र गुणानां साम्ये सत्युपमानोपमेययोरभिदा । अविवक्षितसामान्यं कल्पितमिति रूपकं प्रथमम् ॥ उपसर्जनोपमेयं कृत्वा तु समासमेतयोरुभयोः । यच्च प्रयुज्यते तद्रूपकमन्यत् समासोक्तम् ॥ इति (रु. का अ. ८।३८, ४०) । एतयोरुपमानोपमेययोः । यत्तु रूपकविषये प्राकरणिकत्वादारोपविषयस्य प्राधान्यमारोप्यमाणानामप्राधान्यमिति भट्टोद्भटादिभिरभिहितं तद्वाक्यवनयानुसारेण, न पुनः शाब्दक्रमानुसारेण । शाब्दे हि क्रमे 'सिंहो माणवक' इत्यादौ सिंहादिरूपाच्छादितो मानवादिरप्रधानभूतः प्रतीयते, समासस्योत्तरपदार्थप्रधानत्वात् । एवञ्च तन्मते[42] भ्रमतीत्यादौ लक्षणैव ।

---

41 उपलभ्यमानासु प्राचीनतमासु काव्यप्रकाशमातृकासुपरि 'समस्तवस्तुविषयस्योदाहरणे पादत्रयं चतुर्थपादे त्वपह्नुति'रिति लिपिकारकृता टिप्पणी । अन्यथात्र पादत्रये इति वृत्तिकृदसूचनात् श्रीधरगृहीतो मूलभूतपाठ एव प्रकृतपाठ इति नास्ति विप्रतिपत्तिः ।

42 तन्मते शाब्दक्रमशैलीशीलिते भट्टोद्भटादिमत इति यावत् । आरोपविषयस्य प्राधान्ये रात्रेरेव प्राधान्यं स्यात् । तस्याश्च 'द्वीपाद्द्वीपं भ्रमती'ति क्रियाया मुख्यतो बाधाल्लक्षणैव भवितुमर्हेत् ।

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेया इत्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति। यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअं।
रससम्मुही वि सहसा परम्मुही होइ रिउसेणा ॥४१६॥

( गा. स. वे. ६८० )

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्, मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसेयमित्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

साङ्गमेतद्

उक्तद्विभेदं सावयवम्।

निरङ्गं तु शुद्धं

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥४१७॥

( ध्व. आ. लो. २११पृः; अ. भा. ३य १४० पृः )

माला तु पूर्ववत् ॥९४॥

---

अथैकदेशविवर्ति लक्षयति श्रौता इति। यस्मिन्निति रूपके। यथा जस्सेति—यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्। रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥ मण्डलाग्रः खड्गः, रसः शृङ्गारः। एकदेशविवर्तिता ग्रन्थकृतैव व्याख्याता। अवसेयं लभ्यम्।

साङ्गमिति—न केवलं यत्र तस्यैव रूपणमपि तु तदङ्गस्यापि। अङ्गधातोपकरणमात्र' न त्वारम्भकमेव लक्ष्याव्याप्तिप्रसङ्गात्। एकदेशविवर्ति रूपकस्य रणान्तःपुरेत्यादि समस्तवस्तुविषयाविनाभावि। समस्तवस्तुविषये तु 'ज्योत्स्नाभस्मे'त्यादौ सावयवे रूपके यद्यप्य-(१४०b)वयवानामपेक्षाऽस्ति तथापि न रूपणं परतन्त्रमिति वदितुं द्वावेतौ भेदौ सावयवौ, अवयवविवक्षाभावात्। अवयवविवक्षाविरहे निरवयवं यथा कुरङ्गीवेत्यादि। सेक्तुं सिञ्चनेनाभिव्याप्तिर्लक्ष्यते। प्रेमलतिकेति रूपकं शुद्धं, तदुपकरणस्याप्यन्यस्यासम्भवात्।

मालोपमायामिवैकस्मिन् बहव आरोपिताः[43]। यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥४१८॥

नियतारोपणोपायः स्यादारोपः परस्य यः।
तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥९५॥

श्लिष्टे यथा—

विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥४१९॥

अत्र मानसमेव मानसं, कमलायाः सङ्कोच एव कमलानामसङ्कोचः,

---

**सौन्दर्यस्येत्यादि—तरङ्गिणी** नदी। **कार्मणं** मुष्टियोगः। **नर्मरहसामिति** रहस्यपरिहासानाम्। **विद्याऽऽत्मज्ञानम्**। अत्र प्रियायामेकस्यामेव बहूनामारोप इति मालारूपकता।

**नियतेति—उपायो** हेतुः, **परस्या**प्रकृतस्य, **परम्परये**दं जातमिति **परम्परितं** श्लिष्टशब्दनिबन्धनम्।

**विद्वदित्यादि—नीललोहितः** परमेश्वरः, **दक्षः** प्रजापतिः, **भीमो** भीमसेनः, विरिञ्चेरिदं **वैरिञ्चम्**, **क्रियाः** करिष्यसि। **अत्र मानसमेव मानसमित्याद्यारोपे** रूपकत्वमेव

---

43 एतच्च सूत्रकृद्वृत्तिकृतोरभेदमनुमापयतीति साम्प्रदायिकाः। यतो वृत्तिग्रन्थ एव मालोपमायाः स्वरूपो निर्णीतो न तु सूत्रग्रन्थे। रुद्रटेन निरवयवरूपकस्य चतुर्विधत्वमुक्तं शुद्धमालारशनापरम्परितभेदैः। अत्र रशनारूपकस्य वैचित्र्यान्तराभावाच्च पृथक् गणनम्। रुद्रटकृतलक्षणे 'सा माले'ति निर्देशमात्रमुपलभ्यते। नमिसाधुटिप्पणे 'सा मालेति यत्रैकं वस्त्वनेकसामान्यम्। उपमीयेतानेकैरुपमानैरेकसामान्यै'रित्येतदुपमालक्षणं (मालोपमालक्षणमिति गतार्थत्वात्) रुद्रटीयं यत्र रूपके तदित्यर्थ इति व्याकृतञ्च। नमिसाधुभङ्गिरेव मालारूपकलक्षणे कारिकायां वृत्तौ च ग्रन्थकृताऽनुसृतेति प्रतिभाति। उपोद्घाते (introduction) चैतद्विवेचितमस्माभिः।

दुर्गाणाममार्गणमेव दुर्गाया मार्गणं, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्याप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमारोपणनिमित्तो हंसादेरारोपः। यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तं वक्ष्यते च,[44] तथापि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्ति हीदमन्यैरभिधीयते।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥४२०॥

( भट्टश्यामलस्य, व्य. वि. ३०२ पृ: )

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्यालानत्वाद्यारोपो युज्यते।

---

हंस इत्याद्यारोप इति श्लिष्टशब्दमालापरम्परितम्। एकदेशविवर्ति हीत्यादि—यदाहुः (का. अ. सा. स १।१३)—समस्तवस्तुविषयं मालारूपकमिष्यते। यच्चैकदेशवृत्ति स्यात् पररूपेण रूपणात्॥ अस्यार्थः—समुच्चयेनास्तानि निक्षिप्तानि वस्तूनि विषयोऽस्येति मालारूपकं समस्तवस्तुविषयं, यच्च परेणार्थान्तरेणारोपो रूपणमर्थात् प्रकृतस्य तेन निमित्तेन यद्रूपणं तस्मादेकदाऽन्यदा देशोऽर्थस्तस्य विशेषेण प्रकृतार्थारोपेण वर्तनादेकदेशविवर्ति परम्परितरूपकमिति। आलानमित्यादि—'जयलक्षणस्य करिणः' इति पाठान्तरम्। अत्र यदा जये कुञ्जरत्वमारोप्यते तदैव तद्भुजस्यालानता घटते। एवं विपदादौ (१८१३) वारिधित्वारोप एव सेतुत्वाद्यारोपे निमित्तम्। यद्यपीति श्लेषमूलमिदं रूपकमिति शब्दार्थयोर्भावाभावानुविधायितया पुनरुक्तवदाभासवदस्योभयालङ्कारत्वात्। उक्तमिति—'शब्दार्थालङ्कार' इत्यादिना षष्ठे, वक्ष्यते चेति नवमप्रकाशे। मालारूपकं

---

44 उक्तमिति प्राचीनैरुद्भटमतानुविधायिभिः। वक्ष्यते चेत्यादिः। 'शब्दार्थालङ्कारोऽयं स्फुटमिति' इति ग्रन्थान्ते तत्सङ्गतौ 'यथा पुनरुक्तवदाभासः शब्दार्थालङ्कारो भयोर्भावाभावानुविधायित्वोभयालङ्कारा'विति ग्रन्थेन। [illegible] ऽयोऽस्य दर्शनं तथाप्यन्वयव्यतिरेकाभ्यां [illegible] मम्मटपक्षोऽयमिति निश्चयः। [illegible] साधितः।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥४२१॥

इति ।

निरवधि च निराश्रयञ्च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥४२२॥

( का. अ. सू. वृ. )

इति च *"मालारूपकमपि परम्परितं द्रष्टव्यम् ।*[45]

किशलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥४२३॥

( रु. का. अ. ८।५० )

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

---

यथा—अलौकिकेत्यादि । महानालोक आत्मज्ञानमित्यर्थः । सद्वंशः—वंशोऽन्वयः, सुशोभनो वेणुश्च । तदिह सद्वंशमुक्तारत्नमित्यस्यारोपस्य श्लिष्टः शब्दो निमित्तं मुक्तारत्नस्य वेणुजत्वात् । निरवधीत्यादि—अत्र भवान् कूर्ममूर्तिरित्युपमा चतुर्दशलोकवल्लिकन्द इति रूपकस्य हेतुः । भामहाभिप्रायेणैतदुपमारूपकाख्यमलङ्कारान्तरमेव, वामनमते तु संसृष्टिः । तथाच संसृष्टौ "तद्भेदावुपमारूपकोत्प्रेक्षावयवौ चे"ति तल्लक्षणम् (का. अ.सू.वृ.) । किशलयेत्यादि—अत्र किशलयकरैः करकमलैः कमलमुखैर्मुखेन्दुभिरिति रशनाक्रमेण शब्दानां न्यासः । रुद्रटोऽप्याह—'निरवयवं शुद्धं माला रशना परम्परितञ्चे'ति (रु. का. अ. ८।४६) । एवमपि यदत्र न कथितं तत्र हेतुमाह न वैचित्र्यवदिति—प्रशंसायां मतुः । अतो वैचित्र्यातिशये सत्यलङ्कारता न तु यथाकथञ्चिद्वैचित्र्यमात्रे । यत्रारोप्यमाणं प्रकरणोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं लभते तत्र रूपकम् । यत्र तु प्रकृतात्मतयाऽऽरोप्यमाणस्याप्युपयोगस्तत्र प्रकृतमारोप्यमाणरूपत्वेन परिणमतीति परिणामाख्योऽलङ्कार इति नवीनाः[46] ( अ. स. ५१ पृः ) । यथा—( 18:b ) "तीर्त्वा

---

45 'इति चामालारूपक'मिति क्वाचित्कः पाठः ।

46 एतच्चालङ्कारसर्वस्वमतग्रहणं टीकामध्ये च परिणामस्यान्तर्भावः श्रीधरकृतं परिणामालङ्कारे विच्छित्तिविशेषस्यानपह्नवीयतापक्षसमर्थनमुररीकृत्य प्रवर्तत इत्यवसेयम् । नवीना इत्यलङ्कारसर्वस्वक्रमनिर्देशटीकाकृतस्ततोऽदूरवर्तित्वमप्यनु-

**प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।**

**उपमेयमसत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते साऽपह्नुतिः[47] ।**

उदाहरणम्—

---

भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीयस्तस्मै सौमित्त्रिमैत्रीमयमुपहृतवानान्तरं नाविकाय । व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥ अत्र सौमित्त्रिमैत्री प्रकृताऽऽरोप्यमाणसमानाधिकरणान्तररूपत्वेन परिणता, आन्तरस्य मैत्रीरूपतया प्रकृत उपयोगात् । तदत्र यथा समासोक्त्यादावारोप्यमाणं प्रकृतोपयोगि तद्व्यारोपविषयात्मतया तत्र स्थितम्, अत एव तत्र तद्व्यवहारसमारोपः, एवमिहापि ज्ञेयम् । केवलं तत्र विषयस्यैव प्रयोगः, विषयिणो गम्यमानत्वात्, इह तु द्वयोरप्यभिधानं तादात्म्यात्तयोः परिणामित्वम्" (अ. स. ५१पृः) । एतच्च रूपकविशेषत्वादवान्तरभङ्गीनामानन्त्याच्च ग्रन्थकृता नोट्टङ्कितम् ।

आरोपप्रस्तावादपह्नववैधर्म्येणाह—प्रकृतमिति ।[48] असत्यं कृत्वेत्यनेन तस्य पारमार्थिकीं सत्यतां दर्शयति । सत्यमसत्यमि[49]'त्यपह्नुत्योपमारूपपर्यालोचनादसत्यार्थविधिरूपाऽपह्नुतिरलङ्कारः । अत एव पूर्वस्माद्व्यतिरेकं सूचयितुं कारिकायां तुशब्दस्योपनिबन्धः ।

---

मापयति । 'वनेचराणां वनितासखाना'मित्यादि कुमारपद्यम 'अपारे संसारे विषमविषयारण्यसरणा'वित्यादि पण्डितराजजगन्नाथपद्यञ्चास्य विशिष्टे उदाहरणे ।

47 एवं प्राचीन-का. प्र. मातृकासु पाठः । श्रीधरोऽपि व्याख्याने 'कारिकायां 'तु'-शब्दस्ये'ति तदनुमोदितपाठं सूचयति । वृत्तावपि 'सा त्वपह्नुति'रित्यर्वाचां पाठः ।

48 अत्र श्रीविद्याचक्रवर्तिन एवमाहुः ( २८८पृः ) "उपमेयमसत्यमित्यादि—अतः प्रकृतनिह्नवादप्रकृतप्रतीतिमात्रेणापह्नुतिः । मुखं न भवति चन्द्र इत्यादावपि प्रसक्तेः । नायं विशेषः सान्धिविग्रहिकेण चेतितः । एवमादिष्वलङ्कारेषु विशेषतः, सामान्यतस्त्वापरिसमाप्तेर्दशमोल्लासे स न प्रमाण"मिति । असत्यं कृत्वेत्यनेन पारमार्थिकीं सत्यतां दर्शयतीत्यादि वदता श्रीधरेण न किमपि ससारमुक्तमिति तु स्फुटमेव । श्रीचक्रवर्तिनामाक्षेपोऽत्र प्रायस्तथ्यमूलक एव । यथा पूर्वार्धविवृतौ विवेको दृश्यस्तथा न सप्तमदशमोल्लासयोर्विवृतौ । अत्रेदमपि ध्येयं यद् दशमोल्लासमूलग्रन्थोऽपि न सर्वथा निरवद्य इति ।

49 'सत्यमसत्यमि'त्यंशः 'घ' पुस्तके नास्ति ।

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥४२४॥

इत्थं वा—

बत[50]सखि ! कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥४२५॥

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः ।

एवं वा—

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥४२६॥

अत्र न रोमावलिः, अपि तु धूमशिखेति प्रतीतिः । एवमियं भङ्गयन्तरैरप्यूह्या ।

---

उपमालक्षणस्य च व्यङ्ग्यस्यात्र वाच्यानुयायित्वं बालस्यापि प्रसिद्धम् । अवाप्त इत्यादि— रजनिरित्यनेनैव सौन्दर्यप्रक्रमनिर्वाहे प्राप्ते रमणीति पदमलौकिकप्रेमास्पदताप्रतिपादनार्थम् । अत्र चन्द्रकलङ्कमुपमेयमसत्यं कृत्वा रजनिरमणीशयनमुपमानं सत्यतया व्यवस्थापितम् । तदयमपह्नवपूर्वक आरोपः । अत्र च वाक्यभेद-(1822)वा । एतच्च क्वचिच्छलच्छद्मादि-शब्दैरसत्यत्वप्रतिपादकैरपह्नवः, क्वचित् पुनरसत्यत्वं वस्त्वन्तररूपताविधायिशब्दनिबन्धन-मित्येवम्प्रकारतयाऽस्यालङ्कारस्य बहुविधा बन्धच्छायेत्याह—इत्थं वेत्यादि । यथा बतेत्यादि—अत्र नेकवाक्यत्वम् । अमुष्मिन्नित्यादि—शर्वप्लुष्टः परमेश्वरदग्धः, प्रशमपिशुना उपशमसूचिका, [ रोमावलीवपुः ] रोमावलिशरीरम् । अत्रापि वाक्यभेदः ।

---

50 बतायशब्दोऽस्य श्लोको न हृद्य. । 'बत' 'खलु' प्रभृतिभि. पदैः श्लोकस्य तदर्धस्य वाऽऽरम्भणमालङ्कारिकसमयगर्हितमिति सप्तमोल्लासटीकायां सूचितम् । 'तथाहि'ति श्लोकार्धान्त्यपदश्चापि न मनोज्ञम् ।

**श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ॥९६॥**

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः। उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥४५७॥

अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्कभूपौ वाच्यौ।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः**

---

**एवमि**ति चारोपपूर्वकोऽपह्नवो[51] यथा **ज्योत्स्नाभस्मे**त्यादि ( ४०७ श्लो ) यथा वा 'विकसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधःकृतानी'त्यादि ( हेम. का. अ. ६८ पृः ; अ. स. ६४ पृः )। यथा चोक्तम् 'इदं भोः केनोक्तं कथय कमलातङ्कवदने'त्यादि ( २६१ श्लोक )।

अधुना विशेषणविच्छित्त्याश्रयेणालङ्कारद्वयं कथयति। अपह्नुतावुपमेयस्यासत्य-त्वेनोपमानस्य सत्यताप्रतिलम्भः, इह तु द्वयोरपीत्याह **श्लेष** इति। यत्र वाक्यमविशिष्टविशेषणमेकस्मादर्थादर्थान्तरं गमयति तत्रैकवृन्तगतफलद्वयन्यायेनार्थयोः श्लिष्टत्वादर्थश्लेषः। उदयमित्यादि—बत बतेत्याश्चर्यातिशयः। न चायं ध्वनेर्विषयः, प्रकरणादिना वाक्यार्थनियमेऽर्थान्तरावगतौ तस्य सद्भावादित्याह—**अत्रे**ति।

**परोक्ति**रिति—परोक्तिरिति स्वरूपं[52] **भेदकैः श्लिष्टै**रिति हेतुः, **समासोक्ति**रिति

---

51 अत्र भट्टगोपालेन 'आरोपपूर्वोऽपह्नवो यथोदाह्रियते कैश्चित् विकसदि'त्यलङ्कार-सर्वस्वकारश्रीधरादीनां मतं परामृष्टम्। तन्मतेनानारोपोत्तरकालेऽपह्नवः। 'न'कारश्रवणान्निषेधस्य मुख्यत्वमिति नायमपह्नुतेरेव विषयः। अलङ्कारसर्वस्व-ग्रन्थात् प्राग्भूते हेमचन्द्रकृते काव्यानुशासनेऽस्योदाहरणस्यैतत्प्रसङ्गे प्रदर्शन-मेतस्य प्राचीनमूलत्वं सूचयति।

52 परस्याप्रकृतस्यार्थस्योक्तिरभिधानमभिधामुखेन प्रतिपादनम्। अनेनास्य शब्दशक्ति-मूलात् ध्वनेर्वैलक्षण्यं सूचितम्। 'श्लिष्टैर्भेदकै'रिति श्लिष्टविशेषणयोगाद्दर्शितं यदिह प्रकृतात् शब्दादप्रकृतार्थस्यावगमः। नवीनमतप्रतिष्ठापयितॄणामानन्द-वर्धनाचार्याणां मते व्यवहारसमारोप एव वैचित्र्यबीजम्। स न ग्रन्थे न मूले न च

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात्, न तु विशेष्यसामर्थ्यादपि, यदप्रकृतस्यार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः। उदाहरणम्—

---

नाम। नन्वेवं श्लेषता प्राप्तेत्याह—न तु विशेष्येति। विशेषणसाम्यवशाचात्र प्रतीयमान-(182b)मप्रस्तुतं प्रस्तुतावच्छेदकत्वेन प्रतीयते। अवच्छेदकत्वाच व्यवहारसमारोपो न रूपसमारोपः। रूपसमारोपेऽवच्छेदितत्वेन प्रकृतस्य तद्रूपत्वाद्रूपकमेव। अन्वर्थतामस्य दर्शयति "समासेनेत्यादि।

---

वृत्तावाघोषितः। परं ग्रन्थकृत्सम्मत एवेत्यत्र नास्ति विप्रतिपत्तिः। आलङ्कारिकमूर्धन्ययोरुद्भटरुद्रटयोर्लक्षणे अनुसृत्यैवेयं सरणिः श्रिता। लक्षणतात्पर्यकथनन्तु रूढ्यैव न योगेन। पदव्युत्पादनसाधुत्वदर्शनादरः प्राचीनानुसारी। यदाहुः-यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते। स्वरसंस्कारसिद्ध्यर्थो तत्र व्याकरणस्मृतिरिति। एतदप्यूहनीयं श्लिष्टविशेषणविन्यास एवास्य विनिगमने मुख्यः प्रयोजक इति मम्मटपक्षः।

53 प्राचीनाना समासोक्तिलक्षणेष्वप्यन्वर्थता संज्ञायाः प्रकटा। 'सा समासोक्तिरुद्दिष्टा सङ्क्षिप्तार्थतया मते'ति भामहलक्षणे 'उक्तिः संक्षेपरूपत्वात् सा समासोक्ति'रिति दण्डिलक्षणे चैतत् स्पष्टमेव। केषाञ्चिन्नवीनाना हेमचन्द्रादीनामपि तत्प्रदर्शने तात्पर्यं वरीवर्ति यथा श्लेषवद्भिरुपगेयविशेषणैरौपमानस्य प्रतीतिः सा समासेन सङ्क्षेपेणार्थकथनात् समासोक्तिरिति। मूलकृता लक्षणे 'श्लिष्टै'रिति पदं प्राचीनाना भामहदण्डिउद्भटवामनरुद्रटप्रभृतीनां लक्षणेऽस्पष्टमनुपलभ्यमानं 'समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरात्मानं प्रालभत' इति लोचनकृन्मन्तव्यमनुसृत्य प्रवर्तितमित्यनुमीयते। कुन्तकस्तु 'समासोक्तिः सहोक्तिश्च नालङ्कारतया मता। अलङ्कारान्तरत्वेन शोभाशून्यतया तथे'ति मन्यते। अस्य भामहप्रदर्शितोदाहरणस्य दूषणेनापलापमेव करोति च। एषैव तस्य सरणिः स्वभावोक्तिविशेषोक्तिरसवदादीनां केषाञ्चिन्मुख्यालङ्काराणां प्रतिवस्तूपमानिदर्शनातुल्ययोगितापरिवृत्तिप्रभृतीनाममुख्यानाञ्च विषये। परन्तु कस्मिन्नपि कालखण्डे केषाञ्चिदपि कवीनामत्रालङ्कारे प्रचुरतराऽऽस्था सर्गबन्धादिकाव्येषु तस्य प्रयोगमहिम्नाऽनुमीयते।

**लहिऊण तुज्झ बाहुप्फंसं जीए स को वि उल्लासो।**
**जअलच्छी तुह विरहे ण हु ज्जिउ दुब्बला णं सा ॥४२८॥**

(गा स. पे. ४२८)

**अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।**

---

"लब्धा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः। जयलक्ष्मीस्तव विरहे न भवतु सा दुर्बला[54] ननु ? सा मा॥ 'मा'शब्दस्तत्र दौर्बल्यस्य विप्रतिपत्तिं व्यनक्ति।" (रु.स. ६३पृः)। भवतीत्यपेक्षणीयम्। अत्र विशेष्यपदं केवलं, प्रस्तुतार्थाभिधायि विशेषणन्तु जयलक्ष्म्याः कान्तायाश्च साधारणमिति जयलक्ष्म्याः कान्ताव्यवहारप्रतीतिः। तत्र च कान्तैकगतदौर्बल्यादिधर्मसमारोपः कारणम्, अन्यथा विशेषणसाम्यमात्रेण नियतस्य कान्ताव्यवहारस्य प्रतीतेः। दौर्बल्यञ्च प्रकृत उपचरितं ज्ञेयम्। विशेषणसाम्यञ्च यथा साधारण्येन तथा क्वचिदौपम्यगर्भत्वेन श्लिष्टतया च सम्भवति। तत्रौपम्यगर्भत्वेन यथा—दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुभगा हरिणेक्षणा॥ (अ. स. ११० पृः)। अत्र दन्तप्रभाः पुष्पाणीवेत्युपमागर्भे समासे कृते[55] दन्तप्रभावद्धवलैः पुष्पैश्चितेति, पाणिपल्लवशोभिनीति पाणयः पल्लवानीति समासान्तराश्रयणेन समानविशेषणत्वभावादपि समानविशेषणमाहात्म्याल्लताव्यवहारप्रतीतिरितीयमुपमाऽनुप्राणिता समासोक्तिरिति व्याख्यानमसत्। श्लिष्टतया यथा—उपोढ-(183a)रागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्। यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥ (जाम्ब. वि.; ध्व. आ १।४) रागः सन्ध्याऽरुणिमा प्रेम च। तारका नेत्रविभागोऽपि। मुखं प्रारम्भवक्त्रयोः। तयेति रात्रिपक्षे करणपदं नायिकापक्षे तु कर्तृपदम्। गलितं पतितक्षीणयोः। पुरः पूर्वस्यां दिशि, अग्रे च। रागाद्रक्तत्वात् सन्ध्याकृतादनन्तरं प्रेमरूपाच्च हेतोः। तदिह श्लिष्टविशेषणमहिम्ना निशाशशिनोर्नायकव्यवहारप्रतीतिः, अपरित्यक्तस्वरूपयोर्निशाशशिनोर्नायकताऽऽरोपविशिष्ट-

---

54 अत्र 'ण होज्जउ सा ण दुब्बले'ति पाठः स्यात्। अस्मत्सम्पादिते काव्यप्रकाशसङ्केते (६३पृ.) टिप्पनी द्रष्टव्या। केचित् 'विरहेण' इत्येकं पदं कृत्वा विरहेण हेतुनेति विवृण्वन्ति। तदा ननु दुर्बला सेत्यनेनानुनयपूर्वकः स्वीकारः समर्थितः। अत्र मूले किं 'णं मा' इति पाठं रुचकव्याख्यानमनुमापयतीत्यपि विमृश्यम्।

55 दन्तप्रभा एव पुष्पाणि तैश्चितेति रूपकगर्भत्वेन समासान्तराश्रयेणेत्यादि 'क' पुस्तके पाठः।

## निदर्शना ।

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥९७॥**

निदर्शनं दृष्टान्तकरणम् । उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥४२१॥ ( र. वं. १।२ )

अत्रोडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवसानम् ।
यथा वा

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥४६०॥
( शि. व. ४।२० )

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

---

धर्मविशिष्टयोः प्रतीतेः । अत एवात्र निशाशशिनोर्वर्णनारूपस्य वाच्यस्यैव प्राधान्यम्, नायककेलिलक्षणस्त्वर्थः प्रतीयमानोऽप्यस्याङ्गमिति न ध्वनिव्यवहारः । "एवम्—अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥ इत्यत्रापि न ध्वनित्वम् । भामहाभिप्रायेणेयं समासोक्तिः । वामनाभिप्रायेण त्वाक्षेपः । नायिकानायकयोरुपमानभूतयोराक्षेपतः प्रतिपत्तेः" ( ध्व.आ.लो. ११४ ) ।

असम्भवद्वस्तुसम्बन्धादौपम्यपर्यवसायित्वेन संक्षिप्तार्थत्वेन च श्लेषसमासोक्तिभ्यां साम्याद् यथाक्रमं निदर्शनाप्रकारद्वयं दर्शयति निदर्शनेति—इयमसम्भवता सम्भवता च वस्तुसम्बन्धेन भवतीति द्विधा । तत्राद्यमाह—अभवन्निति । एवं गौरवः पुरुषो हस्तीत्यादावतिप्रसङ्ग इत्यत आह—उपमेति । अन्वर्थनामाह—निदर्शनमिति । एषा च वाक्यार्थ-(१४३b) पदार्थवृत्तिभेदाद् द्विधा । तत्र वाक्यार्थवृत्तिर्यथा क्व सूर्येत्यादि । उडुपकरणेन तरणेन सागरस्यान्वयोऽयोग्यत्वादनुपपद्यमान इत्युपमायां पर्यवस्यति । एवञ्च यत्र निरपेक्षयोर्वाक्यार्थयोर्बिम्बप्रतिबिम्बभावस्तत्र दृष्टान्तालङ्कारः । यत्र तु प्रकृतवाक्यार्थे वाक्यान्तरमारोप्यते सामानाधिकरण्येन तत्र सम्बन्धानुपपत्तिमूला निदर्शनैवेत्याहुः । यथा ( अ. स. १८ पृः ) त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ इति । एवञ्च—शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य । दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ ( अभि. श. १।१५ ) इत्यत्रापि दृष्टान्तबुद्धिर्न कार्या, उक्तन्यायेन निदर्शनाप्राप्तेः । पदार्थवृत्तिर्यथा उदयतीत्यादि । अत्र वारणेन्द्रसम्बन्धिन्या

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेव देव ! यस्ते गुणान् गदितुमुद्यममादधाति ॥४३१॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ।

स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।

क्रिययैव स्वरूपस्वकारणयोः सम्बन्धो यदवगम्यते साऽपरा निदर्शना ।

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ध्रुवम् ।[56]
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥४३२॥

अत्र पातक्रियया पतनस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य तु सम्बन्धः ख्याप्यते ।

अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥९८॥

---

लीलया वस्त्वन्तरभूतेन गिरिणा वहनमसम्भवल्लीलासदृशीं लीलामेव गमयतीत्युपमायां पर्यवसानम् । न च भिन्नयोर्लीलयोरैक्यमध्यवसितमिति भेदे त्वभेद इत्येवमात्मिकाऽतिशयोक्तिः, लीलाख्यगुण एको न तु स्वरूपभिन्नः । सम्बन्धिभेदात्तु भिद्यते । स्वरूपभिन्नयोरेवातिशयोक्तिः । यथा—स्निग्धश्यामलकान्तिलिप्तवियतो विद्युद्बलाका घना मेघाः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः । कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥ (ध्व. आ. २।१ वृ: ) इत्यत्र व्याप्तिलेपनयोः स्वरूपभेदे ऐक्यमध्यवसितम् । इयत्र कचिन्मालयाऽपि भवन्ती दृश्यते । यथा **दोर्भ्यामि**त्यादि । **तरङ्गवतीभुजङ्गः** समुद्रः । द्वितीयां लक्षयति (184a) **स्वस्वे**त्यादि । क्रिययैव शुद्धया फलभूतया स्वस्यात्मनः स्वकारणस्य सान्वयः सम्बन्धो यत् ख्याप्यते तत् संवलितहेतुदृष्टान्तभावं निदर्शना । तदुक्तम्—क्रिया यैव तदर्थस्य विशिष्टस्योपदर्शनात् । ज्ञेया निदर्शना नाम यथेववतिभिर्विना ॥ ( भा. का. अ. ३।३२ ) इति । **उन्नतमि**त्यादि । शेखरं शृङ्गम् । चारुमारुतेति—चारुताऽत्र स्पृहणीयता । अत्र पततीति क्रिया, तस्याः स्वरूपं पतनम् । तत्र हेतुर्लघुत्वे सत्युन्नतपदावाप्तिः । यो लघुः समुन्नतं पदमवाप्य पतेदित्यनयोरन्वयस्तस्योक्तिर्ध्रुवमिति । तदिह दृषत्कणस्य पातसंबन्ध उपपद्यते । स समेव लघोरन्यस्याप्युन्नतपदावाप्तिः पतनायेत्युपमां कल्पयति ।

---

56 'ध्रुवमिति' प्रामादिकः पाठः । न च निदर्शनाऽलङ्कारसमर्पने प्रयोजकान्तरमिति मन्तव्यम् ।

अप्राकरणिकस्यार्थस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा।
सा च

कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥९९॥

तदन्यस्य कारणादेः। क्रमेणोदाहरणम्—

याताः किं न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्त्वया सूचितः ॥४३३॥ (अ. श.)

अत्र प्रस्थानात् किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम्।

राजन्! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥४३४॥ (उ. वि. ?)

---

अप्रस्तुतकार्यकारणोपन्यासः सुतरां निदर्शनातोऽपि लघीयानिति सङ्गत्याऽप्रस्तुतप्रशंसामाह—अप्रस्तुतप्रशंसेति। अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसानामाऽलङ्कारः। अप्रस्तुतवर्णनश्च स्वतन्त्रमयुक्तमप्रस्तुतत्वादिति प्रस्तुताश्रयेति। सूत्रभागं व्याचष्टे प्राकरणिकस्याक्षेप इति। स चाक्षेपस्त्रिभिः प्रकारैर्भवति कार्यकारणभावात् धूमाग्निवत्, सामान्यविशेषभावाद्वृक्षत्वशिंशपात्ववत्, सारूप्याच्च। तत्राद्ये द्वयी गतिः—कदाचित् कारणमप्रस्तुतं यदभिधीयमानं प्रस्तुतं कार्यमाक्षिपति, कदाचित्तु कार्यमप्रस्तुतं वर्ण्यमानं सत् प्रस्तुतं कारणं व्यनक्तीति। एवमेव सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्याक्षेपे द्विप्रकारता, सारूप्ये त्वेको भेद इतीयं पञ्चधेति। सूत्रं कार्ये (184b) इत्यादि। तदिह प्रस्तुतनिष्ठं गम्यत्वं, समासोक्तौ त्वप्रस्तुतनिष्ठम्। अत एवात्र विशेषेण सामान्यं गम्यमानं समर्थ्यत इत्येकस्यानुपादानादुभयोरुपादानमूलादर्थान्तरन्यासादप्यस्य भेदः। तत्र कारणात् कार्यप्रतीतौ यथा याता इत्यादि। निपतत् पीतमश्रु येन। अत्र प्रस्थानात् केन कार्येण निवृत्तोऽसीति इति कार्ये प्रस्तुते निवृत्तिकारणमभिहितम्। तत्र कार्यस्य प्राधान्ये सति कारणस्यापि प्राधान्यम्, निमित्ताभावे नैमित्तिकस्याप्यनुपलम्भात्। अतोऽत्राप्रस्तुतप्रस्तुतयोरभिधीयमानप्रतीयमानयोः सम प्राधान्यम्। कार्यकारणप्रतीतौ यथा राजनि-

**अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वद्रय' पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम्।**

---

त्यादि। **राजशुकः** कश्चिदेनोत्कृष्टजातिशाली शुक। **कुमारसचिवैरित्यत्र** तनयैरिति पाठान्तरम्[57]।

ननु कार्यात् कारणे गम्यमाने यद्यप्रस्तुतप्रशंसा तदा "येन लम्बालक साम्र कराघातारुणस्तन। अकारि भग्नवलयो गजासुरवधूजन॥" (अ स), 'चक्राभिघातप्रसभाज्ञयैव चकारो यो राहुवधूजनस्य। आलिङ्गनोद्दामविलासवन्ध्य रतोत्सव चुम्बनमात्रशेषम्॥' (ध्व आ २।२०) इत्यादौ सुप्रसिद्धे पर्यायोक्तालङ्कारविषयेऽप्रस्तुतप्रशंसाप्रसङ्ग। तत्र हि गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवध प्रतीयते, तथा राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेद कारणभूतोऽवगम्यते। एवमन्यत्रापि पर्यायोक्तविषये ज्ञेयम्। ततश्चास्याप्रस्तुतप्रशंसयाऽऽघ्रातत्वात् पर्यायोक्तस्य निर्विषयत्वप्रसङ्ग। (185a) नैष दोष। इह यत्र कार्यात् कारणं प्रतीयते तत्र कार्यं प्रस्तुतमप्रस्तुत चेति द्वयी गति। यत्र प्रस्तुतत्व कार्यस्य कारणवत्तस्यापि वर्णनीयत्वात्तत्र कार्यमुखेन कारण पर्यायेणोक्तमिति पर्यायोक्तनामाऽलङ्कार। तत्र हि कारणापेक्षया कार्यस्यातिशयेन सौन्दर्यमिति तदेव वर्णित यथोक्तोदाहरणद्वये। अत्र हि गजासुरवधूवृत्तान्तोऽपि भगवत्प्रभावजन्यत्वात् प्रस्तुत एव। एव राहुवधूवृत्तान्तोऽपि ज्ञेय। ततश्च नायमप्रस्तुतप्रशंसाया विषय। अत्र च भर्तृव्यापादनलक्षणस्य व्यङ्ग्यस्य न प्राधान्यम् अलकोन्मूलनरोदनास्तादनवलयभङ्गैरेवोक्तत्वात्। ततश्च न ध्वनिव्यपदेश इति। यत्र पुन कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुत वर्ण्यते तत्र स्पष्टैवाप्रस्तुतप्रशंसा यथोदाहृतम्। यथा वा—इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमरुचि श्यामेव हेमप्रभा। कार्कश्य कलया मे कोकिलवधूकण्ठेष्विव प्रस्तुत सीताया पुरतश्च हन्त शिखिना बर्हा सगर्हा इव॥ (बा रा १।४२) इत्यत्र सम्भाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभि कार्यरूपैरप्रस्तुतैर्लोकोत्तरो वदनादिगत सौन्दर्यविशेष कारणरूप प्रस्तुत प्रतीयते (अ म १२४ पृ)। इन्द्वादयश्चामी स्फुटमेवाप्राकरणिकास्तत्प्रतिच्छन्दभूतानां मुखादीनां प्राकरणिकत्वात्। तेनात्रेन्द्वादिगतेनाञ्जनलिप्तत्वादिनाऽप्रस्तुतेन कार्येण प्रस्तुत मुखादिगत सौन्दर्यं सहृदयहृदयहारि गम्यत इत्यप्रस्तुतप्रशंसा। एव

---

57 तत् न सङ्गतम्। कुमारपरिचारकाभ्यर्चैरित्यर्थ। तेषां नियोग कार्योदिक्ष्व मानसोल्लासादिषु प्रपञ्चित।

> पतत्तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
> यन्मुक्तामणिरित्यमस्त स जड॰ शृण्वन् यदस्मादपि ।
> अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै
> कुत्रोड्डीय गतो ममेत्यनुदिन निद्राति नान्त शुचा[58] ॥४३५॥

(ध्व आ लो ४२ पृ )

अत्रास्थाने जडाना ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेष कथित॰ ।

---

च यत्र वाच्योऽर्थोऽर्थान्तर (185b) तादृशमेव स्वोपस्कारकत्वेनावगूरयति तत्र पर्यायोक्तम् । यत्र पुन स्वात्मानमेव वाच्योऽर्थोऽप्रस्तुतत्वात् प्रस्तुतमर्थान्तर प्रति समर्पयति तत्राप्रस्तुत-प्रशसेति निर्णय॰ ( अ स १३५-३६ पृ ) । एवञ्च 'राजन् राजसुते त्यादौ पर्यायोक्तमेव बोद्धव्यमिति केचिदाहु । तत्र [59]प्रस्थानोद्यतमित्यादिना कारणरूपस्यार्थस्य प्रस्तुतत्वात् कार्यरूपोऽर्थोऽप्रस्तुत एव राजशुकवृत्तान्तस्याप्यप्रस्तुतत्वात् प्रकृतार्थ प्रति स्वात्मान-मर्पयतीत्यप्रस्तुतप्रशसैव न्याय्या न तु पर्यायोक्तमिति वर्णयन्ति । अन्ये तु 'येन लम्बालक' इत्यादावप्यप्रस्तुतप्रशसारूपत्वादप्रस्तुतप्रशसैवेत्याहु । यत्र हि गम्यमानोऽर्थ पर्यायेण भङ्ग्यन्तरेणाभिधीयते तत्र पर्यायोक्तता । [60]एतत् पर्यायोक्तालङ्कारप्रस्तावे वक्ष्यते । विशेषात् सामान्यप्रतीतौ यथा **पतत्तस्य मुखादि**त्यादि । "लोकप्रसिद्धयाऽत्र मुखमाकृति,

---

58 नार्त शुचेति क्वाचित्क पाठ ।

59 दण्डयात्रोद्यतमिति 'क पुस्तके पाठ ।

60 अत्राद्ये प्रघट्टके केचिदित्यनेनाभिमते च 'अन्ये' इत्यनेनालङ्कारसर्वस्वकारमत-मुद्दिष्टम् । तत्रत्यो ग्रन्थश्च सम्पूर्णत एवोद्धृत । एवमादिषु स्थलेषु बहुश श्रीधरेण मम्मटरुचकयोर्मतवैमत्यमेव प्रदर्शित न त्वेकपक्षसमर्थिनी युक्तिरिति नाय तर्काचार्यश्रीधरोचित पन्था । अत एव यत् "काव्यप्रकाशसूत्राणा व्याख्या-मुद्धृपा विरोधिन । लिखिता रुचकपन्था॰ सान्धिविग्रहिकेण धि"गिति सोत्प्रासमाक्षिप्त थाविद्याचक्रवर्तिणा । एव तदुदाहरणनिदर्शनस्थलेऽपि न सर्वथा निर्मूलम् । अत्र रुचकोदाहृते 'इन्दुर्लिप्त' इति राजशेखरपद्ये प्रति वस्तूपमासंस्पर्श स्फुट । केचित्तु मम्मटमतानुयायिनोऽत्रातिशयोक्तिरेव नाप्रस्तुत-प्रशसा वस्त्वसम्भाविनोऽतिशयस्य प्रतिपिपादयिषितत्वादिति तन्मूलैव विच्छित्ति-रत प्राधान्येन व्यपदेशो भवती"ति तद्व्यपदेश एव ज्यायानिति मन्यन्ते ।

सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः।
स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य स भाजनं श्रियः ॥४३६॥

( उ. वि. ? )

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं शमयिष्यसि तत् त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुदितम्।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः। श्लेषच्छाया समासोक्तिः सादृश्यमात्रं वा तुल्यातुल्यान्तरस्याक्षेपे हेतुः। क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद् यदि प्रणयनेन महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥४३७॥

( भ. श. ७१ )

येनास्यभ्युदितेन चन्द्र! गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥४३८॥

---

अपेक्षितक्रियथैवदपादानं जाख्यावेदकम् एतच्छरीरादन्यदितराजज्ञातमित्यर्थः" ( रु. स. ६३ पृ: )। "अत्र जडानामस्थान एवोयम इति सामान्ये प्रस्तुते जलबिन्दौ मणित्व-सम्भावनारूपोऽप्रस्तुतो विशेषोऽभिहितः।" ( अ. स. १३३ पृ: ) सामान्याद्विशेषप्रतीतौ यथा सुहृदित्यादि। प्रतियातनं संशोधनम्, मित्रं नरकासुरः।

तुल्ये प्रस्तुते तुल्यस्याभिधाने श्लेष इति विशेष्यपदस्यापि श्लिष्टता। समासोक्तिरिति समानविशेषणं विशेष्यपदन्त्वश्लिष्टं सादृश्यमात्रमिति प्रतीयमानेनापि केनचिद्धर्मेणानुगुण्यम्। "पुंस्त्वं पुरुषस्य (1863) भावः, तस्यैव चारत्वञ्च। अधः पाताले निकृष्टा गतिश्च। प्रणयनं याच्ञानिमित्तम्। न महानप्यत्पोऽपि। पुरुषोत्तमो विष्णुः, सत्पुरुषश्च। एष न शब्दश्लेषः, अभिधाया एकत्र [ नियन्त्र- ] णियन्त्रितत्वात्। नापि विशेष्यपदस्य श्लिष्टत्वे शब्दशक्तिमूलो ध्वनिः, [illegible] स्यात्र वाच्यत्वात्तस्य चाप्रस्तुतत्वात्। प्रस्तुतार्थमुखेन यत्राप्रस्तुतार्थो [illegible] वगम्यते स तस्य ध्वनेर्विषय इत्युक्तं, सत्पुरुषचरितमेवात्र वाच्यं [illegible]। तन्मुखेन चेतरार्थप्रतिपत्तिस्तत्वथार्थशक्त्युद्भव एवायमिति चेत्, तत्र [illegible]। न खुत्कृष्टस्यापि पुरुषस्य सत्वत एव सम्भवति शक्तिविरामपुरुषत्वं, [illegible]

आदाय वारि परितः सरितां मुखेभ्यः
किं नाम साधितमनेन दुरर्णवेन।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितञ्च ॥४३९॥

(भट्टेन्दुराजस्य, औ वि च १३६ पृ)

इयं च काचिद् वाच्येन प्रतीयमानाऽर्थानध्यारोपेणैव भवति। यथा—

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः
पोतोपायादिह हि यदयो लङ्घनेऽपि क्रमन्ते।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥४४०॥

काचित्त्वध्यारोपेणैव। यथा—

कस्त्वं भो कथयामि दैवहतकं मां विद्धि शाकोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं श्रूयताम्।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न छायाऽपि परोपकारकरणी मार्गस्थितस्यापि मे ॥४४१॥

(ध्व आ. वृ ३।४१)

क्वचिदंशेष्वध्यारोपेणैव। यथा—

---

तु तस्य तुल्यत्वाद्वर्णनमविरुद्धमङ्गभूतत्वादित्यप्रस्तुतप्रशंसैवेयं।' (रु स ६४ पृ)। येनासीत्यादि पादा रश्मयः, पादौ चरणौ। जडधामता शीतलतेजस्त्वं, मूर्खास्पदता च' (रु स ६४ पृ) इति विशेषणसाम्यम्। आदायेत्यादि—अत्र दुरर्णवसदृशः कश्चिद्दुरधीश्वरः प्रतीयते। सारूप्यहेतुके भेदे तु वाच्यस्य सम्भवासम्भवोभयरूपतास्त्रिप्रकारा इति यथाक्रममाह—इयञ्चेति। इयमप्रस्तुतप्रशंसा तुल्ये प्रस्तुते तुल्याभिधानोत्था। तत्र प्रतीयमानस्यार्थस्यानध्यारोपेण यथा अब्धेरम्भ इत्यादि। आहो इति यद्यर्थे। अवटो गर्तः। कल्पः प्राढिः। वाच्यस्यासम्भवे प्रतीयमानाध्यारोपेणैव यथा कस्त्वं भो इत्यादि। दैवहतकमिति विषाऽऽदि-(186b) योग्यतयोचितस्याप्राप्तौ दैवोपालम्भनम्। अत्राचेतनेन सह प्रश्नोत्तरिकाऽनुपपन्नेति वाच्यस्यासम्भव एव।

प्रस्तुतं प्रति तात्पर्यात् प्रमुखत एव तदध्यारोपेण प्रतीतेर्युज्यत एतत्—क्वचिदं-

सोऽपूर्वो रसनाविपर्ययविधिस्तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सम्यङ् निश्चितवानार्य भ्रमर हे । यद्वारणोऽप्यासा-
वन्त शून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ॥४४२॥

(भ श १८)

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः । कर्णचापलं तु हेतुः । मदः प्रत्युत सेवने निमित्तम् ।

निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१००॥

---

दोषिष्विति । **सोऽपूर्वे** इत्यादि—हे इति सम्बोधनद्योतक पुर स्थित चिन्त्यम् । **रसनाविपर्ययो** जिह्वावैपरीत्य हस्तिन, असत्यभाषित्वमपि । **कर्णयोश्चापलम**धीतव्यश्रवणमपि । **मदो** गर्वोऽपि । **वारणो** निवारकोऽपि । **शून्यकरत्व**मदातृत्वमपि । तदिह वाच्येऽर्थे केषाञ्चिद्धेतुत्व सम्भवि केषाञ्चिदसम्भवीत्युभयरूपत्वम् । सारूप्यहेतुके च भेदे साधर्म्यवैधर्म्याभ्यां द्वैविध्यमित्याहु । साधर्म्यमुदाहृतेष्वेवोदाहरणेषु । "वैधर्म्येण तु यथा—(अ स १३७ पृ:) धन्या खलु वने वाता कह्लारस्पर्शशीतला । राममिन्दीवरश्याम ये स्पृशन्त्यनिवारिता ॥ अत्र वाता धन्या इत्यप्रस्तुतार्थादहमधन्य इति वैधर्म्येण प्रस्तुतोऽर्थ प्रतीयते । तदिह कार्यकारणभावेन सामान्यविशेषत्वेन सारूप्येण च भेदपञ्चकमुद्दिष्टम् ।" (अ स. १३७ पृ ) । तत्र कार्यकारणयो सामान्यविशेषयोश्च यदा वाच्यत्व भवति तदाऽर्थान्तरन्यासाविशेष । सरूपयोस्तु वाच्यत्वे दृष्टान्तः, अप्रस्तुतस्य वाच्यत्वेऽप्रस्तुतप्रशंसा, गम्यत्वे सवनाप्रस्तुतप्रशंसेति सारूप्यादिभावो यदा विवक्ष्यते तदा तद्रूपाया अप्रस्तुतप्रशंसाया ध्वनावन्तर्भाव । यथा—किञ्चित्कुञ्चितचञ्चुचुम्बितमुखे स्फारीभवल्लोचना स्वप्रेमोचितचाटु (168a) चाटुकरणे रत्यै रटन्ती मुहु । कूजन्ती विततेस्पक्षतिपुटेनालिङ्ग्य लीलाऽलसं धन्य कान्तमुपान्तवर्तिनमम् पारावता सेवते" (ता. वत्स ३।१३) ॥ अत्र तापसवत्सराजे प्रियाविप्रयुक्तस्य राज्ञः स्वर्गमाखात्मपूर्वोपस्थास्वरूपपारावतद्वन्द्ववर्णनमप्रस्तुतम्, आत्मनः दुष्कर्मजनाद्वन्द्व ... पातस्व प्रियतमाप्रीतिवियोगविह्वलहृदयत्वादीनि प्रस्तुतानि प्राधान्येन व्यञ्जयन्ति ।

अप्रस्तुतप्रशंसाया भेद दर्शयितुमाह—**निगीर्ये**त्यादि । अध्यवसान सर्व

---

6a 'वर्तिनमिव पारवती चुम्बति इति क्वचित् पाठ ।

कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।

विज्ञेयाऽतिशयोक्तिः सा

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका ।

यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।

सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥४४३॥ (ध्व वि ३३ ए)

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम् ।

यच्च तदेवान्यत्वेनाध्यवसीयते साऽपरा । यथा—

अण्ण लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।

सामा सामण्णपआवइणो रेह च्चिअ ण होइ ॥४४४॥

(गा स १ वे ६९६, व ल. ३१५)

---

सम्भवति स्वरूप विषयो विषयी च । तत्र विषयस्य विषयिणोऽत्यन्त निगीर्णत्वेऽध्यवसानस्वरूपोत्थानम् । यत्र तु भ्रान्त्या मृगतृष्णायां तोयं शुक्तिकायां वा रजतमध्यारोप्य तच्छब्दप्रयोगस्तत्र प्रतिपाद्यप्रतिपादकयोर्मुख्याध्यवसानरूपेणैव तोयादि प्रतीतेस्तद्भावापत्तिर्मुख्यत्वमपि न लाक्षणिकत्वम् । किञ्चिदध्यवसानादिकं निमित्तमवलम्ब्य यदलौकिकं वचनं तदतिशयार्थमुक्तिरतिशयोक्तिः । तेनास्य चत्वारः प्रकाराः—भेदेऽभेदाध्यवसाय, अभेदे भेद, यद्यर्थेन सम्भाव्यस्य सधर्मस्य यदि-प्रभृतिभिः शब्दैः कल्पन, कार्यकारणपौर्वापर्यविपर्ययश्चेति[62] । तदेतद् यथाक्रममाह—कमलमित्यादि । प्राणिनां शुभाशुभसूचक प्रकृतेरन्यत्वमुत्पात । तदिह सयुक्तवियुक्तविषयतया

---

62 उद्भटमतमनुसृत्यैवेषा भेदसाधना । रुद्रटेनातिशयाख्यार्थालङ्कारसामान्यस्य 'पूर्व'मभिहितो भेदोऽयं दर्शितः । स च टीकाकृता पश्चादुल्लिख्यते । 'चतुर्थी सा कारणस्य गदितुं शीघ्रकारिताम् । या हि कार्यस्य पूर्वोक्त'रिति रुद्रटप्रतिध्वनिकृत केचित् काव्यप्रकाशविवृतिकृतो गौडीया श्रीजीवगोस्वामिभिभक्तिसन्दर्भे स्मृता । अलङ्कारसर्वस्वमतेऽयं पञ्चमो भेदश्चतुर्थभेदस्यासम्बन्धे सम्बन्धत्वेन निर्देशात् । एवमपि त मतानुयायिनो विद्यानाथविश्वनाथप्रभृतय । अलङ्काररत्नाकरकारास्तु कार्यकारणसम्बन्धं सम्बन्धसामान्यत्वेन मन्यमाना इम भेदमसम्बन्धे सम्बन्धरूपेऽन्तर्भाव्य नाङ्गीकुर्वन्ति ।

यदर्थस्य यदिशब्देन चेच्छब्देन वोक्तौ यत् कल्पनमर्थादसम्भविनोऽर्थस्य सा तृतीया। यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥४४५॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी। यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता॥४४६॥ (कु. म. ६६)

---

शुभाशुभफलदातृत्वम्। अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदः, तेन मुखादीनां लोकोत्तरसौन्दर्यादि-(187b) साधारणधर्मसमृद्धिः कविप्रतिभासंरम्भसमुत्थापिता प्रतीयते। अण्णं इति—अन्यल्लटभत्वमन्या काऽपि वर्तनच्छाया। सामाशङ्के [समाशङ्के] यदि वा श्यामा[63] योषित् सामान्यप्रजापते रेखैव न भवति॥ लटभत्वं मनोज्ञत्वम्। रेखा-शब्देन चित्रालेख्यं लक्ष्यते, तेन च विशिष्टं रूपनिर्माणम्। अत्र लटभत्वादीनाम-भेदेऽपि सातिशयत्वेन भेदः। एवञ्च श्रीकण्ठजनपदवर्णने 'यत्तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः संगीतशालेति लासकैरित्यादौ (ह. च. ६७ पृः) तथा—'णाराअणा त्ति परिणअवआहि सिरिवल्लहो त्ति तरुणीहिं। बालाहिं उण कोदूहलेण एमेअ सच्चविओ॥' (अ. सु. ६१ पृः) इत्यादावप्यभेद इति। अत एव 'एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेख' (अ. स. पृः ५८) इत्यलङ्कारान्तरमन्यैः कृतमित्यत्र न लक्षितम्[64]। राकाया-मित्यादि—अत्र शशिनः कलङ्कशून्यत्वमसम्भवच्छब्देदार्थेन कल्पनया सम्भावितम्। यथा वा (कु. स. ११४४) पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्। ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥ नियतपूर्वभावि कारणं नियत-पश्चात्कालभावि कार्यमिति कार्यकारणयोर्लक्षणम्। यदा तु विशेषप्रतिपादनाय तयोरेव तद्रूपविपर्ययः क्रियते तदाऽतिशयोक्तिः। हृदयमित्यादि—अत्र कुसुमबाणाधिष्ठातृत्वं रमणीवल्लभलोचनविषयत्वकार्यमिति तयोरुपपन्नं पौर्वापर्यं शीघ्रकालताप्रतीत्यर्थं (188a) व्यत्ययेन निर्दिष्टम्। कारणकार्ययोः पौर्वापर्यविपर्ययश्च तुल्यकालतयाऽपि भवति यथा—

---

63 एतच्च रुचकमनुसृत्य। शीते सुखोष्णसर्वाङ्गीत्यादि पारिभाषिकं लक्षणं द्वितीय-पक्षे।

64 अत्र तु श्रीधरोऽलङ्कारसर्वस्वग्रन्थमुद्धृत्य तन्मतमुपस्थाप्य च काव्यप्रकाश-कारस्य मतं नायुक्तिमदिति वदति। यद्वाऽर्वाचोऽलङ्कारनिबन्धकाराः शोभाकर-

**प्रतिवस्तूपमा तु सा ॥१०१॥**
**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।**

साधारणो धर्म उपमेयवाक्य उपमानवाक्ये च कथितपदस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा—

---

( र. व. ४ ।४ ) सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥ अत्र राज्याभिषेकरिपुमण्डलाक्रमणयोर्हेतुहेतुमद्भावेन सत्यपि पौर्वापर्ये क्षिप्रकारित्वाद्विवक्षितया तुल्यकालतया कोऽपि प्रभावातिशयः प्रतीयते । द्विरदगामिनेति श्लिष्टं पदम् । एतदेवान्येषां 'पूर्व'मित्यलङ्कारः । तथा च रुद्रटः ( का. अ. ८।९७ )—यत्रातिप्रबलतया विवक्ष्यते पूर्वमेव जन्यस्य । प्रादुर्भावः पश्चाज्जनकस्य तु तद्भवेत् पूर्वम् ॥ यथा च यदि-प्रभृतिभिः कल्पनाया असम्बन्धे सम्बन्धस्तथा सम्बन्धेऽसम्बन्ध इति पञ्चमः प्रकारोऽस्येत्याहुः । यथा(अ. स. ८६ पृ. ; ध्व. आ. वृ ३।१६)—'लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः । एषाऽपि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ अत्र लावण्यद्रविणस्य व्ययासम्बन्धेऽपि सम्बन्धस्तन्वीलावण्यप्रकर्षप्रतिपादनार्थं निबद्धः । यथा वा—'अस्याः सर्गविधौ'वित्यादौ ( वि. उ. १।१० ) पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्ध उक्तः' ( अ. स. ८६ पृः ) ।

पूर्वस्यवैपरीत्यमेव वाक्यार्थगतमलङ्कारं लक्षयति प्रतिवस्तूपमेति । वाक्यार्थगतत्वेनेवाद्युपादाने साधारणधर्मस्य सकृन्निर्देशो वाक्यार्थोपमा, अतस्तत्रैक एव वाक्यार्थः । अत्र तु नैवमिति ततोऽतिभेदात् 'तु'शब्दोपनिबन्धः । अस्याश्च द्योतकस्येवादेर-( 188b ) विद्यमानतया दीपकादिवदुपमा प्रतीयमाना । अलङ्कारान्तरप्रतीतावपि यत्र वाच्यस्यार्थस्य चारुत्वं प्रतीयमानार्थप्रतिपादनोन्मुखत्वेन प्रकाशते स न ध्वनेर्विषयः, प्रतीयमानस्य वाच्यानुगामित्वादित्युक्तमेव । साधारणधर्मस्तत्र 'नैकं पदं द्विः प्रयोज्यं प्रायशे'ति ( का. अ. सू. वृ. ५।१।१ ) केवलं वाक्यसमयस्थितेर्वाचकभेदेनोपमानोपमेययोरपि समीपे निबध्यते । **सामान्यस्यैकस्य वाक्यद्वये द्विरवस्थितिः** सकृदनिर्देश इत्यर्थः । येनात्र द्वौ वाक्यार्थौ । उपमानोपमेयव्यवस्था

---

जयदेवादयः प्रायशः सर्वे एवैनं स्वीकुर्वन्ति विच्छित्तिविशेषादनपलपनीयत्वमेव तत्र बीजमित्यवधेयम् । सम्भवति विशेषे पृथक् लक्षणं "कस्मान् कार्यं इत्यनेन वक्ष्यतो"ति वचनाद्व्याख्येयमेव ।

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥४४७॥

( का. अ. सू. वृ. ४।३।४ )

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥४४८॥

( भ. नी. श. ? )

इत्यादि मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्राप्यनुसर्तव्यम् ।

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥१०२॥**

एतेषां साधारणधर्मादीनाम् । दृष्टोऽन्तः निश्चयो यत्रेति दृष्टान्तः । यथा—

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥४४९॥

---

च प्राय. प्राकरणिकाप्राकरणिकत्वाभ्यामेव । **देवी**त्यादि—[ **देवीभावं** ] दिव्यत्वं साधारणो धर्म उपमानवाक्ये **दैवतरूपाङ्कित**पदेन निर्दिष्ट. । उपमा च स्फुटैव यथा वाचिकोपमानभावे—चक्षुर्ष एव चतुराश्चन्द्रिकाऽऽचामकर्मणि । आवन्त्य एव निपुणा. सुदृशो रतनर्मणि ॥ (बा. रा. १०।८२) । **एवमन्यत्रे**ति यथा व्यतिरेके—हरवन्न विषमदृष्टिर्हरिवन्न विधुतविततवृष. । रविवन्न चातिदु सहकरतापितभू. कदाचिदपि ॥ इति । अत्र श्लोकस्यैव बहुभ्यो व्यतिरेकमाला, व्यतिरेकतः प्रतिवस्तूपमावदेकत्र प्रतीतस्यापरत्र प्रत्ययः कुत्रापीति[65] ।

तदनन्तरमाह **दृष्टान्त** इति—लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति यदनुमानाङ्गं तस्याभिधानं नालङ्कारो भिन्नवृत्तिविशेषस्यानिष्यमाणत्वात् । **एतेषा**मिति—साधारणधर्मोपमानोपमेयानाम् । साधारणधर्मादीनां प्रतिबिम्बितत्वेन नियतनिष्ठतया कथं साधारणधर्मतेति चेन्, (189a) वस्तुतो हि तेषां धर्माणामभेद इति साधारणता । शब्दान्तरेण प्रतिपादितत्वात् प्रतिबिम्बनमिति नास्ति कश्चिद्विरोधः । अत्र यद्यपि दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते तथापि बिम्बप्रतिबिम्बभावेनोपन्यासेन तु हेतुकथनमित्यस्मात् पृथक्कथनप्रस्थान एवार्थान्तरन्यास. । अयञ्च साधर्म्यवैधर्म्याभ्यां द्विधेति यथाक्रममुदाहरति—त्वयि दृष्ट एवेत्यादि । अत्र दयितदर्शनप्रभवस्य तस्या मनोनिर्वाणस्य प्राकरणिकस्य

65 एतच्च कुत्रापि व्यतिरेकप्रकरणे मूल एव पठितम् । श्रीधरेण रुचकानुवर्तिना तु न तत् स्वीकृतं यथा तत्प्रकरणे स्फुटीभविष्यति ।

एष साधर्म्येण। वैधर्म्येण तु—

तवाहवे साहसकर्मवर्मणः करं कृपाणान्तिकमानिनीषतः।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥४५०॥

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१०३॥

प्राकरणिकाप्राकरणिकानाम् अर्थादुपमानोपमेयानां धर्मः क्रियादिरेकवारमेव यदुपादीयते तदेकस्थस्यैव समस्तवाक्यदीपनाद् दीपकम्। यथा—

किवणाण धणं णाआण फणमणी केसराइ सीहाणं।
कुलवालिआण थणआ कत्तो घेप्पन्ति अमुआणं ॥४५१॥

( गा. श. वे ६७६ )

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम्। यथा—

---

हिमांशुदर्शनतः कुमुद्वत्याः कुमुदविकाशो बिम्बप्रतिबिम्बत्वेन प्रतिबिम्बतया निबद्धः। तवाहव इत्यादि—अत्र प्रतिपक्षभटा विशरारुतामस्थिरतामगुरिति तेषामस्थिरतायाः स्थिरताऽऽदिवैधर्म्येण पांशुषु प्रतिबिम्बनम्।

एवं साधारणधर्मस्यासकृन्निर्देशेऽलङ्कारद्वयमुक्त्वा सकृन्निर्देशे द्वावलङ्कारावाह सकृद्वृत्तिस्त्विति। यथा दीप एकस्थोऽनेकेषां प्रकाशकस्तथोपमानोपमेयानां मध्यादेकत्र स्थितः साधारणधर्मक्रियाऽऽदिरूपः। प्रसङ्गेनान्यत्रोपकाराद्दीपनाख्याद्दीपकमित्यन्वर्थं नाम। किवणाणेत्यादि—कृपणानां धनं नागानां फणमणिः केशराः सिंहानाम्। कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥ अत्र कृपणधनादीनामप्राकरणिकत्वं कुलबालिकास्तनस्य च प्राकरणिकत्वम्। तदिह ज्ञातामुख्यभावानां खलु वाक्यानां[66] परस्परस्यौपम्यं व्यञ्ज्यमपि भृत्यवद्वाच्या-(149b)न्यथ्यैव चारुत्वस्य वाच्यपरत्वेन व्यवस्थापनात्। स्पृश्यन्त इति क्रियया चान्तस्थयैव तेषामुपकारः क्रियत इत्यन्तदीपकमिदम्। एवमादिमध्यदीपके अपि द्रष्टव्ये। तत्रादिक्रियं यथा—( अ. सं ६२ पृः ) रेहइ मिहिरेण णहं रसेण कव्वं सरेण जोव्वणअं। अमएण धुणिधवओ[67] तुमए णरणाह भुवणमिणं॥ अत्र शोभत इति क्रियाऽऽदिपदस्था सर्ववाक्योपकारिणी। मध्यक्रियं यथा—सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्। प्रचक्रमे

---

66 न ख्यातव्यापारयानामिति 'क' पुस्तके पाठः।
67 नदीपतिः समुद्र इति यावत्।

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥४५२॥

मालादीपकमाद्यं चेद् यथोत्तरगुणावहम् ।

पूर्वेण पूर्वेण वस्तुनोत्तरोत्तरं चेदुपक्रियते तन्मालादीपकम् । यथा—

सङ्ग्राङ्गणमागतेन भवता चापे समारोपिते
सम्प्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं नृपते ! त्वया सितयशस्तेनापि लोकत्रयम् ॥२३१॥

( स. क. भ्रा. ३।११५, ४।२०६ ; वा. द. गद्ये ४३ पृ. )

नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥१०४॥

नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा । क्रमेणोदाहरणम्—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥(१२२ श्लो)॥

---

पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ (र. वं २।१५) इति । अनेकक्रियागतैककारक-मन्तदीपकं यथा **स्विद्यतीत्यादि** । **कूणति** सङ्कोचतीत्यर्थः । अनिश्चिणिजन्ता-धूरादय इति । एवमादिमध्ययोरपि । तत्रादौ यथा—निद्राऽपहरति जागरमुपशमयति मदनदहनसन्तापम् । जनयति कान्तासङ्गसुखञ्च कोऽन्यस्ततो बन्धुः ॥ इति । मध्यकारकं यथा ( अ. स. ६३ पृः ) साधूनामुपकर्तुं लक्ष्मीं धर्तुं विहायसा गन्तुम् । न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम् ॥ **मालादीपकमिति—गुणावहत्वमुत्कर्ष-हेतुत्वम्** । पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षनिबन्धनत्वे सत्यमिति । **संग्रामेत्यादि—**अत्र भवदादिभिः क्रमेण साम्मुख्यादीनामुत्कर्षो विहितः, आसादनलक्षणक्रियानिबन्धनञ्च दीपनं दीपनविषयाणामुत्तरोत्तरोत्तम्भितत्वेन कृतम् ।

प्राकरणिकाप्राकरणिकयोः समस्त-(1901)त्वे दीपकं प्रतिपाद्य व्यस्तत्वे तुल्ययोगितामाह **नियतानामिति—**अनेकेषां, **धर्मः** साधारणक्रियागुणरूपः । तस्यासकृन्निर्देशे **तुल्ययोगिता** । औपम्यञ्चात्र गर्भितम्, तथाच—"उपमानोपमेयोक्तिशून्यैरप्रस्तुतैर्वचः । साम्याभिधायि प्रस्ताव-भाग्भिर्वा तुल्ययोगिता" ॥ ( का. अ. सा. सं. ५।५८ ) इत्युद्भटं लक्षणम् । अन्ये त्वाहुः 'औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगितेति' (अ स ८६ पृः) । **पाण्डु क्षाममित्यादि** । **सरसं** स्निग्धं, **हृदन्तः** हृदय-

कुमुदकमलनीलनीरजालिललितविलासजुषोर्दृशोः पुरः का।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे त्वदाननस्य ॥४५३॥

उपमानाद् यदन्यस्य व्यतिरेकः स एव सः।

---

स्यान्तः, क्षेत्रियः परलोके चिकित्स्यः[68]। अत्र विरहिण्या वर्णनीयत्वाद्वदनादीनां प्राकरणिकत्वं रागावेदकम्। क्रिया यथा (अ. स. ८६ पृः) मन्दातपत्रप्रकराचितानि समुद्वहन्ति स्फुटपाटलत्वम्। विकस्वराण्यर्ककरप्रभावाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ अत्र ऋतुवर्णनस्य प्रकान्तत्वाद्दिनानां पद्मानाञ्च प्रकृतत्वाद्वृद्धिगमनं साधारणो धर्मः। कुमुदेत्यादि—'एकदे'-मिति च पाठान्तरम्। अत्र नायिकाया वर्णनीयत्वात् कुमुदादीनामप्रस्तुतानां यथाक्रममधिक्षेपप्रतिपाद्या तत्क्रिया। एवं गुणेऽपि यथा—योगपट्टो जटाजूटं तारवी त्वङ्मृगाजिनम्। उचितानि तवाङ्गेषु यद्यमूनि तदुच्यताम् ॥ (का. अ. सा. स. ६० पृः)। अत्र योगपट्टादीना प्रस्तुतानामीशस्पर्शानौचित्यलक्षणः साधारणो गुणः। अप्राकरणिकानां यथा—त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते। मालतीशशभृल्लेखाकदलीनां कठोरता ॥ (का. अ. सा. स. ६० पृः)। अत्र मालत्यादीनामप्राकरणिकाना सा-(190b)धारणधर्मः कठोरत्वं गुणः। न्यूनस्यापि विशेषेण गुणस्यान्यविवक्षया। तुल्यकालक्रियायोग इत्युक्ता तुल्ययोगिता ॥ (भा.का.अ. ३।२६) इत्येका। विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित्। कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ (का. आ. २।३२८) इत्यपरा। यथा—यमः कुबेरो वरुणः सहस्राक्षो भवानपि। बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥ (का. आ. २।३२९)। अत्रानुक्तमपि स्तुत्यर्थमेषां सादृश्यं प्रतीयते। निन्दार्थं यथा—सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च। क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ (का. आ. २।३३०)। अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि। स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वं तुल्ययोगिताम् ॥ (स.क.आ. ४।५५)। स्तुत्यर्थं यथा—आहूतस्याभिषेकाय वनार्थं प्रस्तुतस्य च। न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥ (द. रू. ३७, ४२ पृः)। निन्दार्थं यथा—यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥ (वा. प. २।३१६)। 'अत्र यः परशुना छिनत्ति यो मधुसर्पिषा सिञ्चति यो गन्धमाल्याभ्यामर्चति तं प्रति तुल्यमेव निम्बस्य कटुत्वमिति समासोक्त्या[69] तदुपमेयस्य निन्दा प्रतीयते'। (स. क. आ. ४०७ पृ.)।

---

68 अत्र श्लेषः, रसो पारदस्नेहौ। क्षेत्रियरोगः क्षयरोगो जारश्च।

69 समासोक्त्या संक्षेपेण साम्यसूचनेन न तु तदाख्ययाऽलङ्कृत्या।

शान्यस्योपमेयस्य। व्यतिरेक आधिक्यम्।

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम्।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु ॥४५४॥

(द. का. अ. ७।६०)

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत् केनचिदुक्तं तदयुक्तम्। अत्र यौवनगतास्थैर्यस्याधिक्यं हि विवक्षितम्।

हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते।
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत् ॥१०५॥

व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम्, उपमानगतं निकर्षकारणञ्च तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वाऽनुक्तिरित्यनुक्तित्रयम्। एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते। अर्थेन क्रमेणोक्तौ चत्वार एव भेदाः। आक्षिप्ते चौपम्ये तावन्त एव। एवं द्वादश। एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः।

क्रमेणोदाहरणम्—

---

तुल्ययोगितावैधर्म्यादाह—उपमानादिति—एतेन मेरुसर्षपयोर्व्यतिरेकाभिधाने नायमलङ्कारः किन्त्वद्भुतचमत्कारिसादृश्यवैधर्म्याभिधानं व्यतिरेक इति। एवकारोऽन्वर्थतां द्योतयति। इह क्षीण इत्यादौ यौवनापेक्षया चन्द्रस्योपमानस्याधिकगुणत्वम्, पुनः पुनरपि वृद्धेः, यौवनस्य तु गतस्य तद्विपर्ययान्न्यूनगुणत्वम्, अतो न्यूनगुणत्वे व्यतिरेकः, तथाचान्येषां लक्षणम् 'उपमानादुपमेयस्य न्यूनगुणत्वे (१९।a) व्यतिरेक' इति। अतोऽस्य लक्षणस्यास्मिन्न परिजिहीर्षुराह वृत्तिकारः—यौवनगतेति। तुल्येऽप्यस्थिरत्वे चन्द्रगतमस्थैर्यं पुनरागमनाभिकृष्टम्। यौवनगतन्तु पुनरनावृत्तेरुत्कृष्टमित्युपमेयस्याप्याधिक्यं न तु न्यूनगुणत्वमिति।

व्यतिरेकभेदानाह हेत्वोरित्यादि। 'उपमेयोत्कर्षोपमाननिकर्षरूपव्यतिरेकनिमित्तयोरभिधान एकम्, उत्कर्षनिकर्षोभयहेतूनां पर्यायेणानुक्तौ त्रिधेति प्रथमं चतुर्भेदः। अयञ्च प्रत्येकं शाब्द आर्थोऽर्थाक्षेपलभ्यश्चेति द्वादश भेदाः। एषाञ्च न केवलमुपादीयमानो गम्यमानो वा साधारणो धर्म उपमामूलं यावच्छ्लेषेणापि स्थित इत्याह एते च श्लेषेऽपीति। यद्यपि श्लेषोपकृतत्वे व्यतिरेकस्याभिभावसंक्रान्तत्वं तथापीह विषये श्लेषव्यतिरेक इत्येषा प्रसिद्धिर्न तु सङ्कर इति। ततस्तदनुसरणार्थमेवैष प्रभेदो व्यतिरेकप्रकारतया व्यवस्थाप्यते।' (इ.प्र. ६५पृ:)

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥४५५॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यद् भेदत्रयम्। एवमन्येष्वपि द्रष्टव्यम्। अत्र 'इव' शब्दस्य सद्भावाच्छाब्दमौपम्यम्।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं धृतेर्निधिः ॥

तुल्यार्थेऽत्र वतिरित्यार्थमौपम्यम् ।

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥४५६॥

अत्रेवादितुल्यादिपदविरहेणाक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥४५७॥

अत्रेवार्थे वतिः । गुणशब्दः श्लिष्टः ।

---

तत्रोभयोपादाने यथा—असिमात्रेत्यादि । स्मयो गर्वः । तुच्छेत्युपमानापकर्षनिमित्तं महाधृतेरित्युपमेयोत्कर्षनिमित्तम्, तदिह्याप्युपमानधर्मस्योपमेयेऽविगमाद्वैधर्म्येण दृष्टान्त 'इव'-शब्दप्रतिपादितः। इदमेव हि 'सधृतेरन्यथा स्मय' इति पाठे निकर्षहेत्वनुपादाने, 'अन्यस्येवास्य न स्मय' इति पाठे उभयानुपादाने। एवमिति-अन्येष्वन्यर्थर्थादिषु। तत्रार्थे यथा—अत्र 'अन्यतुच्छव'दिति वतिप्रत्ययोपादानसामर्थ्यादौपम्यं शब्दस्पृष्टम । 'तेन तुल्य'मित्यादिना (पा. ५।१।११५) विहितत्वान्न (191b) श्रौतम्, तद्वदित्यादिना 'तत्र तस्येवे'-(पा.५।१।११६) सूत्रेन विहितेन वतिना च भवतीत्युक्तमेव। अत्र पूर्ववदुत्कर्षादिनिमित्तानुपादानाद्भेदत्रयं द्रष्टव्यम्। आक्षेपादावौपम्यं यथा—इयं सुनयनेति। दासीकृततामरसश्रियेत्यनेन विशेषणम्। अत्रेन्दुरुपमानमाननमुपमेयं जयतीति व्यतिरेकाभिधानं कलङ्कित्व'[70] निकर्षनिमित्तं शाब्दम्। अकलङ्कत्वमुत्कर्षनिमित्तम्। औपम्यं त्विवादिशब्दानुपादानान्न शाब्दं, नापि तुल्यादिपदानामश्रुतेरार्थं किन्त्वाक्षेपलब्धमित्याह आक्षिप्तैवोपमेति। अत्राप्युत्कर्षाद्यनुपादानाद्भेदत्रयम्। अथ श्लिष्टेऽपीत्याह जितेत्यादि। अब्जवदिति—अत्रेवार्थे वतिरिति

---

70 अत्र 'कलङ्कित्वात्। अयं श्लेषो न तु शब्दशक्तिमूलो ध्वनिः। नवमः श्लेषप्रकारो यथा—भद्द इत्यादि'इति नवमोल्लासीयो ग्रन्थो गर्भीकृतो लिपिकारानवधानवशात्।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥४५८॥

अत्र तुल्यार्थे वतिः । कलाशब्दः श्लिष्टः ।

नित्योदितप्रतापेन त्रियामामिलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेव विनिर्जितः ॥४५९॥

अत्राक्षिप्तैवोपमा । भास्वतेति श्लिष्टः । "एवञ्जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः सम्भवन्ति । तेऽनयैव दिशा द्रष्टव्याः ।

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ १०६॥

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्याशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विविध आक्षेपः ।

---

शब्दम् । गुणशब्द औदार्यादौ तन्तुषु च श्लिष्ट इति । "अतःपर' 'अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः । न निशाकरवज्जातु कलावैकल्यमागतः ॥ अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्ट' इति पाठः । ततो 'नित्योदितप्रतापेन त्रियामामिलितप्रभः । भास्वताऽनेन भूपेन भास्वानेव विनिर्जितः ॥ अत्र ह्याक्षिप्तैवोपमा, भास्वतेति श्लिष्ट' इति पाठः, तस्य च श्लिष्टत्वं भास्वरत्वस्य समारोपात् रवित्वस्य प्रतिपादनात्" ( ह. सं. १५ पृः ) ।

व्यतिरेको निषेधरूपस्तत्तदनन्तरं निषेध्यतारूपमाक्षेपं लक्षयति निषेध इति । विवक्षितस्य निषेधः कर्तुं न युज्यते, स कुतो बाधितविषयत्वान्निषेधाभावात इत्याह निषेध इवेति । एतत्प्रकृतिक प्रकृतिगतत्वेन विशेषाभिधानार्थं निषेधाभास एव यथा सूचिता-(192a)भिधेयत्वेन वक्ष्यमाणरूपस्य वा इत्याद्युक्तरूपस्य चेति द्विधाऽयमाक्षेपः । ( भा. का. अ. २।६८ इ. ) अत्र च व्यञ्जनसद्भावेऽपि तदाक्षेपस्य वाच्यस्यैव प्राधान्याच्चारुत्वम् । वाक्यार्थे एतदाक्षिप्तीत्याक्षेप इत्युक्तिसामर्थ्यादेवावगीयते यथा ( भा. का. अ. २।६६ ) अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः । इय पै वाऽस्तित्वोऽन्येन किमुक्तेन प्रियेण ते ॥ इति । अत्र यद्यप्यहं प्रिय इति व्यञ्जनप्रतीतिरस्त्यपि विशेषवचनेच्छयेयं

7[1] अत्र 'यथा वा स्वच्छात्मतै'त्यादिकं पद्यम्, अन्येषामपि अत्रयादीनामप्येत्यादि तत्सप्तविध कुत्राप्यधिके पठ्यते ।

क्रमेणोदाहरणम्—

> ए एहि किं पि कीए वि कए णिक्किव ! भणामि अलमह वा ।
> अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सं ॥४६०॥
> (गा. स. ७१२)
>
> ज्योत्स्नामौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
> कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
> अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
> व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥४६१॥

माऽस्त्वित्यादिशब्दोपात्तः प्रतिषेधरूपोऽयमाक्षेपः । तस्यैव प्राधान्यं सनाम्नोऽन्वर्थत्वात् । एवमुक्तविषये यथा (भा. का. अ. २।७०)—स्वविक्रमाक्रान्तभुवश्चित्रं यन्न तवोन्नतिः । को वा हेतुरलं सिन्धोर्विकारे करणं प्रति ॥ अत्र चाटुके गर्वस्थाने निरहङ्कारत्वं महापुरुषगुण-मुक्त्वा प्रतीयमानगाम्भीर्यातिशयविशेषकथनेच्छया 'को वा हेतु'रित्यादि यः प्रतिषेधरूप आक्षेपस्तस्यैव प्राधान्यं न गाम्भीर्यरूपस्य व्यङ्ग्यस्येति । ए एहीत्यादि[72]—अयेहि किमपि कस्या अपि कृते निष्कृप ! भणामि अलमथवा । अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ सेति सम्बन्धनीयम् । अत्र भणामीति प्रतिज्ञातस्येष्टस्यालमिति निषेधेन तदवस्थाया अशक्यवचनीयत्वादिर्विशेषः प्रतीयते, अत एव हे निष्कृपेति । ज्योत्स्नेत्यादि । अन्तर्मानसं अंतरं, हन्तेति खेदे । अत्र ज्योत्स्नाऽऽदीनां निर्वापित-सकलजीवलोकशीतलत्वमुद्वहतामपि विरहाग्निदह्यमानमानसैर्जनैरनुभूयमानानां सन्तापकारित्व-मतिप्रसिद्धमेवेति (192b) निर्विशेषस्याख्यानाय किमित्यादिना यो निषेधः स आक्षेप इति भामहाभिप्रायेणेदं लक्षणम् । वामनस्य तु 'उपमानाक्षेप आक्षेपः' (का. अ. सू. वृ. ४।३।२७) इति लक्षणम् उपमानस्य चन्द्रादेराक्षेपोऽस्मिन् सति किं त्वया कृतमित्युपहस्तनारूपो यथा— 'तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुने'त्यादि (…४।३।२७)। 'यदि चोपमानस्याक्षेपः स्वसामर्थ्यादाकर्षणमिति तस्यार्थः । यथा—(अ. स. ११७ पृ.) ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानाऽऽर्द्रनखक्षताभम् । प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं करोति ॥

---

[72] गङ्गाधरविवृतपूर्वार्धपाठस्तु 'ता सुहअ विलम्बसु खणं भणामि कीए वि कएण अलमहवा' । विलम्बस्वेति परप्राणरक्षणपुण्यार्थं क्षणं विलम्बमेव सहस्वेति पूज्यामन्त्रणेन 'निजसौन्दर्यमूलकसौभाग्येनैव तव सोऽयं गर्वः' इति च तत्र व्याख्यानम् ।

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥१०७॥**

**हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना ।**

अत्र शरद्वेश्येव, इन्दुर्नायक इव, रवेरीर्ष्याकलुषितस्य नायकान्तरस्येवेत्युपमानान्याक्षिप्तानि प्रतीयन्ते'। (का. सू. वृ. ४।३।२७)। अत्राद्यो वक्ष्यमाणेन प्रतीपेनोपगृहीतः, द्वितीयस्तु 'आर्द्रनखाभमैन्द्रं धनुर्दधानेत्यसाधारणविशेषणादुपमानत्वे' नायिकाया नायकस्य च प्रतीतेरेकदेशविवर्तिन्योपमया। अथाऽत्र नोपमानत्वेन नायकः प्रतीयते किं तर्हि रविशशिनोरेव नायकव्यवहारप्रतीतिः, तयोरेव नायकत्वादित्युच्यते, तर्हि 'आर्द्रनखक्षताभ'मित्यत्र स्थितमप्युपमानत्वं वस्तुपर्यालोचनयैन्द्रे धनुषि सञ्चारणीयम्, इन्द्रचापाभं नखक्षतं दधानेति प्रतीतेः। यथा'दध्ना जुहोती'त्यादौ दध्नि सञ्चार्यते विधिः, तत्र औपम्यानुप्राणितया समासोक्त्याऽयमुपगृहीतः।' (अ. स. ११७-११८ पृः)। इत्यास्तामेतत्।

निषेधप्रस्तावादाह क्रियाया इति। क्रियाग्रहणमपनीय सामान्येन कारणग्रहणमत्रान्यैः कृतम् (अ. स. १४७ पृ.)। इतरथा 'अलक्तकताम्रा-(193a)ग्रामोष्ठमुद्राञ्च बिभ्रती'त्यादावव्याप्तेः। सत्यं, किन्तुत्रापि ताम्रोष्ठस्यालक्तकयोजनं निषिद्धम्, न तु तत्स्वरूपम्, अतोऽत्रालक्तकशब्दो योजनावृत्तिरिति क्रियाया एव निषेधः। एवञ्च 'कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे' (कु. सं. १।३१) इत्यत्र 'यद्यपि द्वितीये पादे मदस्य प्रसिद्धं सदासवाख्यं करणं तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धनं कृतं तथापि तत्परावृत्तिस्तस्य द्रष्टव्या। तत्र च मदस्य द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या। सा चास्यामव्यभिचारिणीति न तद्बाधेनास्या उत्थानम्, अपि तु तदनुप्राणितत्वेन' (अ. स. १५८-५६ पृः)। अत एव क्रियाफलमेव कार्यमिति वैयाकरणानामाम्नायः। क्रियाग्रहणं वा करणत्वेनोपलक्षणत्वेन व्याख्येयम्। तस्य व्यक्तिः प्रकाशनं कविना प्रतिपादनं न तु भावनं, कारणमन्तरेण कार्योत्पत्तेरसम्भवात्। प्रसिद्धतरहेतुभूतक्रियाऽनुपलब्धेस्तत्कार्योत्पत्तिरिहाहेतुकेति निबध्यते, तावन्मात्रलक्षणत्वाद्विभावनायाः। विशिष्टतया कार्यस्य भावना विभावना यतोऽत एव प्रकृतस्य विरोधस्य परिहारः। एवञ्च विरोधाभासत्वेऽप्यस्य न विरोधालङ्कारपरत्वम्, तत्र द्वयोरपि परस्परं बाधात्। अत्र तु कार्योत्पत्तिरेव कारणप्रतिषेधेन बाध्यमाना प्रतिभाति, न तु विपर्ययेणापि बाधः कारणप्रतिषेधस्य। न बाध्यमानः प्रतिभाति बाधः, प्रतिभासमानोऽपि शुष्त्यपेक्षः। इसिद्धोत्पत्त्यपेक्षया दवीयसीं विभावनां प्रयोजयति। भवतु (193b) वाऽत्रापि सामान्येन परस्परं बाधः, तथापि न विरोधरूपत्वहेतुफलभावं विशेषमाश्रित्य प्रवर्तनात्, अस्यास्तद्-

यथा—

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥४६॥
विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।

पवादकत्वात्' ( र. स. ६६ पृ. ) । 'एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम्, येन ताऽपि विरोधाद्भिन्ना स्यात्' ( अ. स. १५७-५८ पृ. ) । विभावना च शुद्धादिभेदात्त्रिधाऽन्यैः कैश्चित् समुद्दिष्टा । तत्र यत्रैकं कार्यमुद्दिश्य प्रत्येकं प्रसिद्धो हेतुर्व्यावर्त्यते, अप्रसिद्धन्तु कारणान्तरं स्वाभाविकत्वं वा विभाव्यते सा शुद्धा यथा—कुसुमितेति । कुसुमितलताभिरहताया रमण्या नलिन्या रुजो हेतुः कविसम्प्रदायसिद्धः । *अप्रसिद्धस्तु हेत्वन्तरं प्रस्तावौचित्यादिना हेमन्तप्रभावो गम्यमानः ।* 'इयमपि विशेषोक्तिवदुक्तनिमित्तोदाहृता यथा वा—अक्तलेखामकारगोरसमालम्भनपिञ्जराम् । अनलक्तकताम्राभामोष्ठलेखां च बिभ्रतीम् ॥ (का. अ. सा. सं. २।४२ ) अत्र स्वाभाविकत्वं निमित्तं गम्यमानम् । उक्तनिमित्ता यथा—'असंभृतं मण्डन'-मित्यादि (कु. स. १।३१) । अनेनैव मालारूपताऽस्य दर्शिता । 'असम्भृतं मण्डन'मित्यादि 'कामस्य पुष्पव्यतिरिक्तमस्त्र'मित्यन्तम् । अत्र च विवदन्ते—इयमेव विभावनेति केचित्, असम्भरणस्य पुष्पाणो मण्डनमस्त्रं प्रत्यकारणत्ववर्णनात् । ( अ. स. १५६ पृ: ) । 'एकगुणहानौ साम्यदार्ढ्यं विशेषोक्ति'रिति तु वामनः । ( का. अ. सू. वृ. ४।३।२३ ) । यत्र तु विभावनायां विभावनयाऽलङ्कारान्तरेण वा विशेषः कश्चिदुच्यते सा विचित्रा (स. क. आ. ३।११) यथा—वक्त्रं निसर्गसुरभि (१९४२) वपुरव्याजसुन्दरम् । अकारणरिपुश्चन्द्रो निर्निमित्तसुहृद्वयः ॥'[73] (भा.का.अ. २।२०३) । तस्या वक्त्रं वपुर्वाऽकारणरिपुर्निर्निमित्तसुहृच्चेत्यन्वयः । अत्रोत्तरयोर्विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्याम् यथासंख्येन तद्गतो विशेष उक्तः । यदाहु- ( स. क. आ. ३।१०,११ ) 'शुद्धा यत्रैकमुद्दिश्य *हेतुरेको निवर्तते । अनेको यत्र सा चित्रा विचित्रा यत्र तौ प्रति ॥ उक्ताऽन्यथा वा* गीर्भङ्ग्या विशेषः कश्चिदुच्यत' इति ।

विभावनाविपर्ययात्मकत्वाल्लक्षयति विशेषोक्तिरिति । मिलितानि कारणानि कार्यं जनयन्तीति प्रसिद्धम्, अन्यथा कारणमेलकमेवाभावप्रसङ्गात् । तेष्वपि सत्सु

73 'निर्निमित्तसुहृत् स्मर' इति प्रायिकः पाठः ।

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिरनुक्तनिमित्तोक्तनिमित्ताऽचिन्त्यनिमित्ता च। क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।
श्लथीकृताश्लेषरसे[74] भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥४६३॥

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥४६४॥ (भा. श. ३।११)

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥४६५॥ (भा. का. अ. ३।३१)

यत्र न कार्यस्य सम्भवः स कश्चिद्विशेषमभिवक्तुं प्रयुज्यमानो विशेषोक्तिः। सा च द्विधोक्तनिमित्ताऽनुक्तनिमित्ता च। अनिमित्ताऽनुक्तनिमित्तैव, अनुक्तस्य चिन्त्याचिन्त्यत्वेन द्वैविध्यात्। निद्रेत्यादि—पदं स्थानम्। अत्र निद्रानिवृत्त्यादयः आलिङ्गनचलनहेतवः। तत्र तेष्वपि सत्सु तस्यानुत्पत्तौ निमित्तं मन्मथोन्माथः, तच्च नोक्तम्। यथा वा—आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि। गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥ (ध्व. आ. वृ. १।४)। 'अत्राह्वानादयः संकोचशिथिलीकारहेतव इति तेषु सत्स्वपि तस्यानुत्पत्तौ प्रियतमास्वप्नसमागमादि निमित्तमनुक्तम्। अस्य च व्यञ्जकस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रं न तु तत्कृता काचिच्चारुत्वनिष्पत्तिरित्यस्य न प्राधा-(194b) न्यम्। अत एव न ध्वनिव्यवहारः' (ध्व. आ. लो. १।४)। कर्पूर इवेत्यादि—अत्र सत्यपि दाहलक्षणेऽनिष्टे कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः शक्तिस्वरूपेण विरुद्धेन धर्मेणोपनिबद्धा। अवार्यवीर्यत्वं[75] निमित्तमुक्तम्, अतोऽत्र वस्तुस्वभावमात्रे पर्यवसानम्। स एक इत्यादि—अत्र तनुहरणकारणे सत्यपि बलहरणस्य कार्यस्यानुत्पत्तौ निमित्तमनुक्तमप्यचिन्त्यमेव, प्रतीत्यगोचरत्वात्। अत्रापि न व्यञ्जकस्य सद्भावः। कार्यानुत्पत्तिश्चात्र क्वचित् कार्यविरुद्धोपपत्त्या निबध्यते। एवं विभावनायामपि कारणाभावः क्वचित् कारणानामविरुद्धत्वमुखेन प्रतिपाद्यत इति 'यः कौमारहरः' (श्लो. १) इत्यादावुक्तमेव। 'भवन्ति यत्नौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः।' (कु. स. १।१०)। 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्य'मित्यादि (मृ. श. २अ.) तु रूपकं (का. अ. सू. वृ ४।३।२३)

74 'श्लथीकृताश्लेषरस' इति क्वाचित्कः पाठः।
75 'नमः शृङ्गारबीजाय तस्मै कुसुमधन्वने' इति मूलग्रन्थे पाठः। स च गर्भाङ्कीचितायाः कोहलावतारितायाः द्वादशपदाया नान्द्याः सामञ्जस्येन तत्र साधीयान्।

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥१०८॥

यथा—

> एकस्त्रिधा वससि चेतसि चित्रमत्र
> देव ! द्विषां च विदुषां च मृगीदृशां च ।
> तापञ्च सम्मदरसञ्च रतिञ्च पुष्ण-
> ञ्छौर्योष्मणा च विनयेन च लीलया च ॥४६६॥
> ( सु. र. को. १४३८ )

प्रायेण पृथक् विशेषोक्तिलक्षणं प्रयोजयति। तथाच वामनः—'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्ति'रिति। 'रूपकञ्चेदं प्रायेणे'ति ( का. अ. सू. वृ. ४।३।२३ ) पुनस्तेनैवोक्तम्।

कार्याभावस्य क्रमसम्बन्धो विशेषोक्तावस्तीति सङ्गत्यैतल्लक्षणमाह यथासंख्य-मिति। क्रमिकाः क्रमवन्त उद्देशिनोऽनुद्देशिन इत्यर्थः। क्रमेणैवेति—येनैव क्रमेणैवामी क्रमवन्तस्तेनैवेत्यर्थः। 'यथासंख्यन्तु द्वेधा शाब्दमार्थञ्च। तत्र शाब्दं यत्रासमस्तानां पदा-नामसमस्तैः पदैरर्थद्वारकः संबन्धः, तत्र क्रमसम्बन्धस्यातिरोहितस्य प्रत्येयत्वात्। आर्थं तु यत्र समासः क्रियते तत्र समुदायेन समुदयसम्बन्धस्य शाब्दत्वा-(195a)दर्थानुगम-पर्यालोचनया त्ववयवगतः क्रमसंबन्धः प्रतीयते। तेनात्र यथासंख्य आर्थत्वम्' ( अ.स. १७८ पृः )। इदञ्च यथासंख्यं द्विगुणत्रिगुणादिभेदादन्यत्वमासादयति ( रु. का. अ. ७।३४ वृः )। तत्र द्विगुणं यथा—लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा। इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो वृथैव किममी सृष्टाः कुलक्ष्माभृतः॥ इति ( अ. स. १८८ पृः )। त्रिगुणं यथा—एक इत्यादि। अत्र रिपुप्रभृतीनां तापादिभिस्तेषाञ्च शौर्योष्मप्रभृतिभिः कारणैः क्रम-संबन्धस्याव्यवहितत्वेन प्रतीतेः शाब्दं यथासंख्यम्। आर्थन्तु यथा—(रु. का. अ. ७।३६) कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः। जलनिधिगिरिकमलस्था हरिहरचतुराननाः ददतु॥ 'अत्र कज्जलादीनां सुपर्णादिभिः संबद्धानां जलनिध्यादिभिः संबन्धो हरिप्रभृतिभिः सम्बन्धश्चत्या समुदायनिष्ठः प्रतीयते। अर्थानुगमानुसारेण त्ववयवानां क्रमसम्बन्धावगति-रित्यार्थं यथासंख्यम्' ( अ. स. १८८ पृ. )। द्वयोस्तु बहुशो यथा—( रु. का. अ. ७।३७ ) दुग्धोदधिशैलस्थौ सुपर्णवृषवाहनौ घनेन्दुरुचौ। मधुमकरध्वजमथनौ पातां वः शार्ङ्गशूलधरौ॥ वामनस्तूपमेयोपमानानां क्रमसंबन्धः क्रमः ( का. अ. सू. वृ. ४।३।१७ ) इत्युपमासद्भाव-

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥१०९॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः ।

क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥४६७॥

वैचित्र्यातिशयं मन्वानः क्रमाभिधानमिममलङ्कारमाचष्टे यथा—मृणालहंसपद्मानि बाहुचंक्रमणाननैः । निर्जयन्त्याऽनया व्यक्तं नलिन्यः सकला जिताः ॥ ( भा. का. अ. ३।३८ ) इति । उपमाप्रपञ्चवादिनां (195b) मतमपहायौपम्याभावेऽपि यथासंख्यमात्रेण चारुत्वनिष्पत्तावपीदमिति भट्टोद्भटरुद्रटादयः । एतदेवाभिसन्धाय ग्रन्थकृता सामान्येनैव लक्षणं कृतम् ।

यथासंख्ये क्रमेणान्वयः समर्थ्यत इति समर्थनप्रस्तावात्तदनन्तरमाह **सामान्यं वेति** । अनुपपद्यमानतया सम्भाव्यमानस्यार्थस्योपपादनार्थमर्थान्तरस्य यन्न्यसनं सोऽर्थान्तरन्यासः । तत्र सामान्यस्य विशेषः, विशेषस्य वा सामान्यं समर्थकमिति द्वौ भेदौ । अत्र प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदान्तरसम्भवेऽपि तद्गणना न कृता सहृदयहारिणो वैचित्र्यस्याभावात् । यद्यपि 'प्रीणितप्रणयि स्वादु काले परिणतं बहु । विना पुरुषकारेण फलं पश्यत शाखिनाम् ॥' ( भा. का. अ. ३।२६ ) इत्यप्रस्तुतप्रशंसायां विशेषेण शाखिवृत्तान्तेन वाच्येन सर्वं जगच्चेष्टितं दैवप्रधानमिति सामान्यं गम्यमानं समर्थ्यते तथा दृष्टान्ते 'त्वयि दृष्ट एवे'त्यादौ (श्लो. ४४४) दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते तथाऽप्यप्रस्तुतप्रशंसायामेकस्यानुपादानमेव, दृष्टान्ते तु बिम्बप्रतिबिम्बभावेनोपन्यासो न तु कथनम्[76] । अत्र तु विशेषस्य सामान्येन सामान्यस्य वा विशेषेण सामर्थ्ये समर्थस्य तथाभूतनिमित्तमुच्यते यत् प्रतिपन्नं सत् समर्थ्यस्यानुपपद्यमानतां निरस्यतीति ताभ्यां पृथग्भावोऽस्य स्फुट एव । तत्र सामान्यस्य विशेषो यथा—निजेत्यादि । अत्र स्वभावादुपनेतसामतिसुन्दरस्यान्यथादर्शनं सामान्यं तस्य च पित्तदोषतः प्रसक्तशशिशुभ्रशङ्खविषयः पीतत्वविशेषः साधर्म्येण (196a)

76 प्राचीनैर्दण्ड्यादिभिरर्थान्तरन्यासलक्षणायामेव विशेषो विशेषेण सामान्यं वा सामान्येन दृढीक्रियते तद्द्वयमन्तर्भुक्तं यथा—'विश्वव्यापी विशेषस्य' इत्यादि 'जगदानन्दयत्येष' इत्याद्युदाहृतञ्च ।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ६३.श्लो.॥
गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥४६८॥

( म. क. आ. ४।१२५ )

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदां पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥४६९॥
विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।
वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।
जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥११०॥

समर्थकः ।"‸ विशेषस्य सामान्यं यथा—**सुसिते**त्यादि । अत्र चन्द्रहाससमयेऽपि निःशङ्कायाः प्रियगृहगमनं विशेषरूपं समर्थ्यते । तत्र कीर्त्यमानं निमित्तमुक्तम् **मुक्ताशङ्का** इति । **क्व नासि शुभप्रद** इति सामान्यं चन्द्रकीर्तिसाधर्म्येण समर्थकम् । वैधर्म्येण द्विधा । तत्र सामान्यस्य विशेषेण यथा—**गुणाना**मित्यादि । -अत्र सिद्धेऽपि हेतुना नियोगे सहेतुकेऽसौ न सिद्ध इति तत्सिद्धयेऽर्थान्तरन्यासः । **स्वपिति** जीवति । **गडिः** कर्मण्य-कुशलोऽत्यन्तमलसः । विशेषस्य सामान्येन यथा **अहो ही**त्यादि—हि-शब्दः स्फुटार्थः । क्षयं दिवम् निहतार्थत्वं ग्राम्यत्वं चात्र चिन्त्यम् । अत्रायुःकर्तृकमपराद्धत्वाचितस्याधन्यत्व-स्यायुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वविरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तमिति वैधर्म्येण समर्थनम् ।

समर्थ्यसमर्थकभावो विरोधमूल इति सङ्गत्या प्रस्तौति **विरोध** इति । ययोर्गोऽश्वेत्या-दिवत् परस्परधर्मिपरिहारेणैवावस्थानमुपलभ्यते तयोरेव परस्पराभावाव्यभिचारिणोर्विरोधो नान्यथेति स्थितिः, अत आह **अविरोधेऽपी**ति—इतरथा हि दुष्टतैव स्यात् । एतेन विरोधाभिधानायामुख एव तथाऽऽभासनाद्विरोधाभासो विरोधः । स च जात्यादीनां चतुर्णां पदार्थानां प्रत्येकं तन्मध्य एव सजातीयाभ्यां विरोधिभ्यां सम्बन्धे भवति । एवंविषये चायमिष्यते, भिन्नाधारत्वेऽसङ्गतिप्रभृतीनामेतदपवादकानां वक्ष्यमाणत्वात् । विरोध-प्रकारश्च सर्वे एव वाच्यः प्रतीयमानश्चेति द्विविधः, (1966) शब्दोपादाने वाच्य इतरथा

क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग ! कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥४७०॥
गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वम्भराऽप्यतिलघुर्नरनाथ ! तवान्तिके नियतम् ॥४७१॥
येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराऽऽप्नोति च ।
तेषां सङ्गररङ्गरक्तमनसां[77] राज्ञां त्वया भूपते !
पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥४७२॥
सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥४७३॥
सततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते !
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥४७४॥
पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥४७५॥

---

प्रतीयमान इति। अभिनवेत्यादि—पविर्वज्रम्, वियोग एव पविपात इति रूपकम्। अत्राभिनवनलिन्यादिजात्या दावानलजातेर्विरोधस्तद्वियोगजन्यसन्तापप्रकर्षेण परिहियत इति विरोधाभासत्वम्। गुणेन यथा—गिरयोऽपीत्यादि। मरुत् जनः सैन्यश्च। अत्र पर्वतादिजातिविरुद्धोऽनुन्नतत्वादिगुणयोगो वर्णनीयप्रकर्षविवक्षया समर्थित इति विरुद्ध इव। क्रियया यथा—येषामित्यादि। धाराधरः खड्गः। अनुरज्यत इति—अनुरागः शोणितकृतं शोणत्वमपि। स्नेहो रुधिरार्द्रत्वमपि। अत्र पांशुपटलैः प्रसाधनविधानं विरुद्धम्। द्रव्येन यथा सृजतीत्यादि—जनार्दनोऽपि शफरो मत्स्य इति जाते-र्जात्यादिभिः सह विरोधश्चतुर्धा। सततमित्यादि—सति भवतीति त्वयि सतीत्यर्थः। अत्र कठिनसुकुमारयोर्गुणयोर्विरोधो वर्णनीयदानप्रकर्षेणापसार्यते[78]। पेशलमपीत्यादि—

---

77 'सङ्गरसङ्गसक्तमनसा'मिति पाठान्तरम्।

78 त्वयि दातरि सतीति परामर्शाद् भवद्दानवशाद् द्विजपत्नीनां गृहव्यापारनिवृत्त्या कठिनाः कराः सुकुमारा भवन्तीत्याकूतमिति वा।

कौञ्चाद्रिरुद्दामदृषद्दृढोऽयं यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥४७६॥

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०८श्लो॥

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिनिकरमापास्यति मुनिः ॥४७७॥
(भ. श. १०८)

समदमतङ्गजमदजलनिष्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक ! त्वयि तटजुषि शङ्करचूडाऽऽपगाऽपि कालिन्दी ॥४७८॥

---

पेशलस्य दाहकत्वं परुषस्य तु प्रमोदनिमित्तत्वमिति विरुद्धं खलतासौजन्याभ्यां परिहृतम् । **कौञ्चाद्रिरित्यादि**—**शातं** वज्रं तीक्ष्णं वा । उद्दामप्रस्तरदृढस्य क्रौञ्चादेर्नवाम्भोजदलाभिजातत्वं विरुद्धं भार्गवस्य लोकोत्तरपौरुषेणाभासतां प्रापितमिति गुणस्य गुणादिभिः सह विरोधस्त्रिधा । **परीत्यादि**—**जडयति** शीतलयति तापयति चेति । अत्र जडीकरणताप-क्रिययोर्विरोधो वस्तुसौन्दर्येण प्राप्तिपर्यवसानेन परिह्रियते । **अयमित्यादि**—**तृष्णा** पिपासा (1972) लोभश्च । **जानीत** इति—अनुपसर्गाद् ज्ञः (पा. १।३।७६) इति फलवति कर्तर्यात्मनेपदम् । अत्र जलनिधिः पीत इति द्रव्यक्रिययोर्विरोधो मुनिगतेन महाप्रभाववत्त्वेन समाधीयत इति क्रियायाः क्रियाद्रव्याभ्यां विरोधः । **समदेत्यादि**—**त्वयि तटजुषि** तटप्रदेशमध्यासिते । अत्र गङ्गा कालिन्दी भवतीति तयोर्विरोधस्त्वदीयमत्तमातङ्गमदजनितनदीसम्बन्धेन समर्थ्यत इति द्रव्यस्य द्रव्येन विरोधः । कश्चिदिह भेदः श्लेषवशादेव समासादितस्वभाव इति विरोधप्रतिभोत्पत्तिहेतुः श्लेषात्मक एव । ततः श्लेषेण सहास्य सङ्करत्वशङ्का न कार्या भेदाभावात् । एवमन्यत्रापि परीक्ष्यम् । "तदेतदुद्भटादीनां मतम् । दर्शनान्तरे तु सङ्करालङ्कारः । यथा 'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' ( ह. च. २७ पृः ) इत्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वे । एकस्य तु श्लिष्टत्वे 'कुपतिमपि कलत्रवल्लभ'-(का. १६ पृः) मित्यादौ" । ( अ. स. १८४ पृ. )

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥१११॥**
**स्वयोस्तदेकाश्रययोः रूपं वर्णः संस्थानं च ।**

उदाहरणम्—

**पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-**
**रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।**
**घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो**
**मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥४७९॥**

( ह. न. ३।५ )

---

**स्वभावोक्तिरिति**—वस्तुस्वभावस्फुटत्वा निरोधानन्तरमस्य लक्षणम् । **डिम्भो** बाल । बालादिवस्तुस्वभाववर्णनमात्र नालङ्कार सर्वस्मिन्नेव काव्ये तस्य विद्यमानत्वादित्याह **स्वयोरित्यादि** । शरीरावयवसन्निवेश **संस्थानम्** । तेन बालादे क्रियास्वरूपसंस्थानाना सूक्ष्मतरत्वेन लौकिकविकल्पविषयाणा कविप्रतिभामात्रप्रकाशनीयाना यदन्यातिरिक्त वर्णनाऽऽत्मिका जाति सा स्वभावोक्तिरलङ्कार इति । तत्र बालविषया यथा—(रु. का अ- ७।३२) धूलिधूसरतनवो राज्यस्थितिरचनकल्पनैकरूपा । कृतमुखवाद्यविकारा क्रीडन्ति सुनिर्भरं डिम्भा ॥[79] मुग्ध-(197b)युवतीविषया यथा—( रु का. अ ७।३३ ) हरति रुचिर गाढाश्लेषे यदङ्गकमाकुला स्थगयति तथा यत्पाणिभ्या मुख परिचुम्बने । यदपि बहुश पृष्टा किञ्चिद्वदीत्यपरिस्फुट रमयतितरा तेनैवासो मनोऽभिनवा वधू ॥ तिर्यग्विषया यथा **पश्चादङ्घ्री** इत्यादि—**द्राघयित्वा** दीर्घीकृत्य 'प्रियस्थिरे'त्यादिना ( पा ६।४।१५७ ) द्राघादेश । आसज्य अवलम्ब्य, स्कन्धकेश **सटा**, **प्रोथोऽ**श्वस्य मुखाग्र, **तुण्ड** मुखम् । यथेद सुप्तोत्थितस्याश्वस्य सस्थान न तथाऽन्यस्यापीति सुप्तोत्थिताश्व-स्वरूपभणनादिय स्वभावोक्ति ।

---

79 एव श्रीविद्याचक्रवर्तिन —अत्र स्वक्रियारूपेति स्वशब्दार्थमचेतयमानेन साभि-विप्रहिकेण 'धूलिधूसरे'त्यादि समारोपितक्रियारूपतया प्रत्युदाहरणत्वेन वोदाहरण त्वेन यद्दर्शित तदुपहासमपि नार्हतीति । परं चण्डीदासोऽपि डिम्भाना क्रिया-स्वरूपवर्णनेनात्र स्वभावोक्ति स्वीकरोति । स्वशब्दस्य क्रियारूपशब्दाभ्यां प्रत्येकमन्वय इत्यभिप्रेत्याह स्वयोरित्यादि च व्याकरोति । क्रियापदेनावस्थोचितायाश्चेष्टायाः परिग्रहे नासामञ्जस्यम् । श्रीधरस्त्वत्र रुचकमनुसृत्य रुद्रटनिदर्शितजात्या ख्यालङ्कारस्योदाहरण परिगृह्णाति । रुद्रटोक्तिस्तु'सा ( जाति ) बालावस्थोचित-

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।**

**व्याजरूपा व्याजेन वा स्तुतिः ।** क्रमेणोदाहरणम्—

**हित्वा त्वामुपरोधबन्ध्यमनसां मन्ये न मौलिः परो**
**लज्जावर्जनमन्तरेण न रमामन्यत्र सन्दृश्यते ।**
**यस्त्यागं तनुतेतरां मुखशतैरेत्य श्रितायाः श्रियः**
**प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥४८०॥**

**हे हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे !**
**नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।**

---

**व्याजस्तुतिरिति** स्वभाववैपरीत्यादस्य कथनम् । **व्याजरूपेत्यादि** समासद्वयेनै-तदन्वर्थं नाम । तेन यत्र निन्दाऽभिधीयमानाऽपि प्रमाणान्तराद्बाधितस्वरूपा स्तुतौ पर्यवस्यति तत्र **व्याजेन** निन्दामुखेन निन्दारूपा स्तुतिरित्यनुगमेन तावदेका व्याजस्तुतिः । यत्रापि स्तुतिः शब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा निन्दायां पर्य-वसिता भवति सा द्वितीया व्याजस्तुतिरस्त्या **व्याजरूपा** स्तुतिरिति कृत्वा । निन्दास्तुति-रूपत्वस्य विच्छित्तिविशेषस्य सद्भावादप्रस्तुतप्रशंसातो भेदः । तत्र मुखे निन्दा स्तुतिपर्यवसिता यथा **हित्वेत्यादि** । **रमां** लक्ष्मीमन्तरेण **लज्जावर्जनमन्यत्र** न सन्दृश्यते, अपि तु तत्रैव विश्रान्तमित्यर्थः । तदिह निरुपरोधत्वं वर्णनीयस्य राज्ञो निर्लज्जत्वं लक्ष्म्याऽभिधीयमानमित्थं मुखे निन्दा लोकोत्तरदातृत्वे लक्ष्म्यैकनिवासत्वे च वर्णनीयस्य स्तुतौ पर्यवस्यति । 'किं वृत्तान्तैः परगृहगतैः किं नु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो (१५४३) दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥ इत्यत्र प्रक्रान्ताऽपि स्तुतिपर्यवसायिनी निन्दा 'हन्त कीर्ति'रिति भणित्योन्मूलितेति न प्ररोहं गमितेति क्लिष्टमेतदुदाहरणम्' (ध्व.आ लो. ४४ पृ., अ.स. १४४पृ.) । अत एव नात्युपर्यवसायित्यादस्य

---

चेष्टासु विशेषतो रम्ये'ति सर्वं परिष्करोति । 'स्वभावोक्तिश्च जातिश्चे'त्याचार्यदण्डि-स्मरणादस्यालङ्कारस्य जातिरिति प्राक्तनाना सञ्ज्ञा । वर्ण इति—अत्र टीका-कृताऽऽदिपदेन रुद्रटमनुसरता मुग्धयुवतीतिर्यगादि गृहीतमुदाहृतञ्च । तत्र च न केवलमेतेषां स्वरूपं परमवयवसंस्थानमपि घटकं विशेषतो युवतीवर्णने यथा-ऽऽलोचितं रुचकेण सहृदयलीलायाम्—'अवयवानां रेखास्पाष्ट्यं रूप'मिति निर्देशेन । वर्णपदेनापाततो धूलीधूसरतनव इति रुद्रटोदाहरणस्यानुसृतिः स्मारिता स्यात् । सा च कारिकास्थरूपपदेनैवायाति ।

तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥४८१॥

( व. जी. ५६ पृ. ; वा. प. टी. २।२४६ )

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥११२॥**

**एकार्थाभिधायकमपि सहार्थबलाद् यदुभयस्यावगमकं सा सहोक्तिः।**

**यथा—सह दिअहणिसाहिँ दीहरा सासदण्डा**
**सह मणिवलएहिँ बाहधारा गलन्ति।**
**तुह सुहअ! विओए तीअ उव्विग्गिरीए**
**सह अ तणुलदाए दुब्बला जीविदासा ॥४८२॥** ( क. म. ३।६ )

**श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्। दिवसनिशाऽऽदिगतं तु सहार्थ-सामर्थ्यात् प्रतिपद्यते।**

---

प्रेयोऽलङ्कारगर्भता। **हे हेलेत्यादि**—अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः।

व्याजस्तुताविवार्थद्वयप्रतीतिसाम्यादाह **सा सहोक्तिरिति**। **एकार्थाभिधायकमपीति** कर्त्राद्येककारकगतैकरूपेण क्रियाऽभिधायकमपीत्यर्थः। **उभयस्यावगमकं** न तु वाचक-मित्यर्थः।[80] अलङ्कारप्रस्तावाच्चैतमेतौ सह पठत इत्यादिप्रयोगवैलक्षण्येन "यत्रैव कविः प्रबन्धापेक्षया सहृदयहृदयाह्लादनसमुत्पादनदिशा च तुल्यप्राधान्यावबोधेऽपि च शब्द-वृत्तौचित्यगत्या तृतीयान्तेऽप्राधान्यमनुरुध्यते ( स. क. आ. ) तत्रैवेयमलङ्कृतिः। इयञ्च द्विविधा सादृश्यवत्यसादृश्या च। यथा **सह दिअहेत्यादि** सह 'दिवसनिशाभि-र्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति। तव सुभग वियोगे तस्या उद्वेगिन्या उद्वेजनशीलायाः सह च तनुलतया दुर्बला जीविताशा॥ अत्र दीर्घा इति कर्तृगतस्य दीर्घगुणत्वस्य सहभवनं प्रदर्शितं "गुणसमावेशेन गुणिनोः साम्यमिवाप्र-प्रयोगेऽपि प्रतीयते। तदिह द्वयोः प्राकरणिकत्वात्तुल्यकक्षत्वेऽपि तृतीयान्तस्य गुणभावादुप-मानत्वम्, अर्थाच्च परिशिष्टस्य प्रधानत्वादुपमेयत्वम्। (198b) एतद्विरहेऽपि चायं यथा—अत्रैव गलन्तीति परस्परनैरपेक्ष्येण द्वयोरवस्थानात् सादृश्यं न गम्यते। दुर्बलेति गुणस्यैवातिशयोक्तिश्चास्य मूलम्। अभेदाध्यवसायरूपोदाहृतेव, कार्यकारणपौर्वापर्य-

---

80 अत्र वृत्तिग्रन्थः कारिकाग्रन्थमन्यथा विधत्त इति न चोदनीयम्। एवमुद्देश-शैथिल्यमूलत्वे प्राचोद्भटरुद्रटयोर्लक्षणे कथ्येते इति प्रत्येकं निर्देशोऽनुसन्धेयः।

**विनोक्ति॰ सा विनाऽन्येन यत्रान्य॰ सन्न नेतर॰ ।**

**क्वचिदशोभन , क्वचिच्छोभन॰ । क्रमेणोदाहरणम्—**

**अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तम॰ ।**
**उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनो॰ ॥४८३॥**

**मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भ॰ ।**
**अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥४८४॥**

---

विपर्ययरूपा यथा—भवदपराधै सार्धं सन्तापो वर्धतेतरामस्या ( रु का अ ७।१६ ) । अत्रापराधाना सन्ताप प्रति हेतुत्वेऽपि तुल्यकालत्वेनोपनिबन्ध ।' (अ. स १०३-४ पृ ) । तदेतानि कर्तृसाहित्योदाहरणानि । कर्मसाहित्ये यथा—(का अ सा स ५।८३ , अ स॰ १०५पृ ) द्युजनो मृत्युना सार्धं यस्याजो तारकामये । चक्रे चक्राभिधानेन प्रेष्येणाप्तमनोरथ ॥ द्युजनो देवलोक , तारकस्य दैत्यविशेषस्यामयो रोग , प्रेष्य आज्ञाकारी । अत्र करोति-क्रियाऽपेक्षया द्युजनस्य मृत्योश्च कर्मत्वम् । तदित्थ प्रागुपदर्शितेतिकर्तव्यतापरिहारेण सहोक्तिमात्र नालङ्कारो यथा—( र व ६।५७ ) अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु" 'सह श्रिया तिष्ठ समा सहस्र' मित्यादि ।

सहोक्तिप्रतिपक्षतया लक्षयति **विनोक्तिरित्यादि** । न सन्निसशोभन , **नेतरो** नासन्निति शोभन । 'ते द्वे सत्त्वासत्त्वे यत्र कस्यचिदसन्निधा-नान्निबध्यते सा द्विधा विनोक्ति । अत्र सन्न सन्निति वक्तव्ये निषेध-मुखेनाभिधानम-न्यनिवृत्तिप्रयुक्ता तन्निवृत्तिरिति ख्यापनार्थम् । एवञ्च तदन्यनिवृत्तौ विधिरेव प्रकाशितो भवति । ( अ स १०६पृ ) । तत्राद्या यथा **अरुचिरित्यादि** । अत्र निशाऽसन्निधिप्रयुक्त रुचिविरहाद्यभिधानमुखेनाशोभनत्वाभाव शोभनकार्यमुक्तम् । (१११a) द्वितीया यथा—**मृगेत्यादि** । तेनेति दुष्टेन पापकर्मणि प्रवृत्तेन । अत्र शोभनत्वाभाव शोभनपदार्थप्रक्षेपभङ्ग्योक्त । इयञ्च परस्परविनोक्तिभङ्ग्या चमत्कारातिशयकृत् यथा प्रागुदाहृते । क्वचि द्विना'शब्दमन्तरेणापि विनाऽर्थविवक्षा यथाकथञ्चिदपि निमित्ती-भवति । यथा सहोक्ता 'सह शब्दाप्रयोगेऽपि सहार्थो गम्यत इति वृद्धो यूना' ( पा १।२ ६५ ) इत्यनेन ज्ञापितमेव । ( चो का ख क आ २५४ पृ , अ स १०७पृ ) निरर्थकं जन्म गत नलिन्या यथा न दृष्ट तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥ इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शन विना नलिनीजन्मनोऽशोभनत्व-प्रतीते ।

परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः ॥११३॥

परिवृत्तिरलङ्कारः। उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम्।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥४८५॥

अत्र प्रथमेऽर्धे समेन समस्य। द्वितीय उत्तमेन न्यूनस्य।

नानाविधप्रहरणैर्नृप। संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान्।
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

॥४८६॥

अत्र न्यूनेनोत्तमस्य विनिमयः।

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।
तद् भाविकं

भूताश्च भाविनश्चेति द्वन्द्वः। भावः कवेरभिप्रायोऽत्रास्तीति भाविकम्।

---

परिवृत्तिरिति परस्परं निष्क्रयसाम्यादियं कथ्यते। "अलङ्कार इत्यनेन परिवृत्तिशब्दोऽत्र क्रियामात्रमभिधत्त इत्याशङ्कां निराकरोति" (रु. सं. ६७पृः)। किञ्चित्यक्त्वा कस्यचिदादानं विनिमयः। स च समेन स्यादसमेन वा। असमं तु द्विविधमधिक-न्यून-गुणत्वेन द्वैविध्यात्। तत्र समेन तुल्यगुणेन त्यज्यमानेन समस्य तादृशस्यैव ग्रहणं प्रसज्य-प्रतिषेधेनैकार्थीभावरूपं, तथाऽधिकगुणेन न्यूनगुणस्यादानं (न्यूनस्य गुणहीनस्य ग्रहणं) धर्मेन्यूनभूत-( ? )न्यायेनोत्तरपदार्थप्रतिपत्तरूपानर्थकत्वभावम्। एवं न्यूनगुणेनाधिक-गुणस्य ग्रहणैरर्थभावमिति। लतानामित्यादि—मतं लास्यमभिमतं सुकुमारं नृत्यं श्रयति गृहीतवानिति तात्पर्यम्। अत्यादिकर्मणि क्तः। मुदितत्वेन दर्पो लक्ष्यते। लतास्त्वित्यादि। अनर्थस्वभावं परिवर्तनम्। (199b) नानेत्यादि। विप्रलम्भो भ्रान्तिरपायो वा।

परिरम्भस्यामन्योन्यधर्माध्यासः, इह त्वेकस्यवैकस्मिन्नध्यवसाय इति सङ्गतिः। प्रत्यक्षा इवेति। भूतभाविनः प्रध्वंसाभावप्रागभावावच्छिन्ना अपि भावा यत् पुरः प्रस्फुरन्त इव दृश्यमाना बोध्यन्ते तद्भाविकम्। अन्वर्थतामाह भाव इत्यादि। 'न चेदं भ्रान्तिमान्, भूतभाविनां भूतभावितयैव प्रकाशनात्।' (अ.स. २२४पृ.) भूतभाविशब्दस्य परोक्षोपलक्षणत्वे परोक्षाणां स्फुरद्रूपवर्णनमिति व्याख्याने स्वभावोक्तेर्न भिद्यते। किञ्च लौकिके वस्तुगते

उदाहरणम्—

> आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
> भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥४८७॥

अत्राद्येऽर्धे भूतस्य द्वितीये भाविनो दर्शनम् ।

---

सूक्ष्मवर्णने स्वभावोक्ति, इदन्तु लोकोत्तरत्वेनाद्भुताना वस्तूनां वर्णनेन । यत्र तु लौकिकानामपि स्फुटत्वेन प्रतीतिस्तत्र भाविकत्वस्वभावोक्त्यो समावेश स्यादेव । अत इह द्वयी गतिः—क्वचिद्वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्व, क्वचित्तु प्रत्यक्षायमाणस्यैव वर्णनम् । तत्राद्यप्रकारविषय एवायमलङ्कारो न द्वितीयप्रकारविषय इत्यन्ये । यथा च प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविन । अत्यद्भुता स्यात्तद्वाचामनाकुल्येन भाविकमित्यौद्भटे । (का अ. सा स ७६ का: ) । शब्दानाकुलता चेति भाविक तत् प्रचक्षत इति भामहीये लक्षणे ( का अ ३।५,६ ) । व्यस्तसम्बन्धरहितशब्दसन्दर्भसमर्पितत्व प्रत्यक्षायमाणत्व प्रतिपादकप्रयोजनेनोक्त कविसमर्पितानामेव धर्माणामलङ्कारत्वात्, वस्तुसन्निवेशिना हिमांशुलावण्यादीनामिव । यदि हि वस्तुसन्निवेशिधर्मगतत्वेनापि भाविक स्यात्तदा शब्दानाकुलता चेति विशेषोपादानमन-(2001)र्थकं भवेद् । एवञ्च यत्र वर्णनीयस्य वर्णनावशाद् प्रत्यक्षायमाणत्व तत्रैवायमलङ्कारो यत्र तु प्रत्यक्षायमाणधर्मस्य वर्णनं यथा—( अ. स. २२६ पृ ) अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृत । अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥ इत्यादौ तत्र नायमलङ्कार इति । ग्रन्थकर्तुस्तु सामान्येनैव लक्षण कुर्वतो यदा वास्तवमपि सौन्दर्यं कविनिबद्ध कविनिबद्धवक्तृनिबद्ध वा सकलवक्तृगोचरीभूत स्वभावोक्तिवदलङ्कारतया वर्ण्यते तदाऽयमलङ्कार इति भाव- । आसीदित्यादि—" अत्रेति द्वि(कवि)वचनयोरित्यर्थ । भूषण ताटङ्कवलयादि, तवाकृतिमेवविधा भूतप्राया पश्यामि ।

---

8। एवमादौ "काव्यप्रकाशवृत्ताणा व्याख्याबुद्धया विरोधिन । लिखिता रुचकग्रन्था सान्धिविग्रहिकेन धिगि"ति ( ३४८पृ T. S. S )। इत्यत्र श्रीधराक्षेप सम्प्रदायप्रकाशिन्यां स्थितो विचारस्तदर्हति, रुचकेनोदाहरणमाद्यालङ्कारस्यस्तो गृहीतत्वात् । वस्तुतस्तु कालक्रमेण स्फुरत्तत्त्वानां शैवमतविमर्शकानां दर्शने प्राचीनानां भामहोद्भटादीनां भाविकलक्षणमलङ्कारान्तरविषय इव परिवर्तित ( vide *The Saiva Darsana and Alankara Proper*, J. O. R I Baroda Vol V. ) मासीदित्यस्याभिरितरत्रा-लोचितम् । यच्च रुचकेन तयो ( भामहोद्भटयो- )रेव वर्त्मानुसरता ग्रन्थ-

काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥११४॥

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे ! नैवास्मि क्षणमपि भवन्तं प्रणतवान् ।
नमन् मुक्तः सम्प्रत्यतनुरहमग्रेऽप्यनतिभाङ्
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥४८८॥

( मुक्तक ; सु. र. को. ३६ )

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥४८९॥ (मा. मा. ५।३१)

---

इदानीं हेतुगर्भालङ्कारं लक्षयति काव्यलिङ्गमिति । वाक्यपदार्थेति—वाक्यार्थता पदार्थता चेति । तदयमर्थः—"यत्र हेतुः कारणरूपो वाक्यार्थगत्या विशेषणद्वारेण वा पदार्थगत्या निबद्धत्वेन निबध्यते तत्काव्यलिङ्गं नामालङ्कार इति । व्याप्ति-धर्मतोपसंहारादियुक्ततर्कलिङ्गवैलक्षण्यार्थं काव्यग्रहणम् । वाक्यार्थगत्या च निबध्यमानो हेतुत्वेनैवोपनिबद्धव्यो नोपनिबद्धस्य हेतुत्वम् । अन्यथाऽर्थान्तरन्यासादस्य भेदो भवेत्" (अ. स. १८१ पृ.) । यथा वपुःप्रादुर्भावादित्यादि । अत्रापराधद्वये पादत्रयोपनीतमननमनद्वयं हेतुः । तदिदमित्यनेनानमनस्यापराधरूपतयाऽध्यवसानेऽपि वास्तवं हेतुत्वमवगम्यत इत्युदा-

---

कुन्मतमप्यासूत्रितमिति श्रीविद्याचक्रवर्तिमन्तव्यं, न तत् सम्यक् । भाविका-लङ्कारस्य प्रबन्धविषयत्वपक्षः प्राचीनैर्भामहदण्डिप्रभृतिभिरुपक्षिप्त एव समीचीनो यथा भामहलक्षणे 'प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः' इति । अत्र मम्मटाव्यवहितोत्तरकालभाविनो विचारचतुरस्याचार्यहेमचन्द्रस्योक्तिः "भाविकन्तु भूतभाविपदार्थप्रत्यक्षीकारात्मकमभिनयप्रबन्ध एव भाति । यद्यपि मुक्तकादावपि दृश्यते तथापि न तद् स्वदते" इति । वृत्तिग्रन्थस्थलस्थो विवेकश्च 'आसीदञ्जन'मित्यादि मम्मटग्रन्थोदाहरणालोचनपरश्च द्रष्टव्यः । भूतभाविशब्दयोः परोक्षोपलक्षणपरत्वे परोक्षाणां पुरःस्फुरद्रूपत्वहेतुवर्णनमिति तु व्याख्याने स्वभावोक्तेर्भिद्यत इति च विवेकमन्तव्यं विवेचनीयम् ।

एकपदार्थता यथा

> भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभं
> हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् !
> अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
> लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥४९०॥

एष्वपराधद्वये पूर्वापरजन्मनोरनमन, भुजपाते शस्त्रोपक्षेपो, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

**पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।**

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रतिपादनं तत् पर्यायेण भङ्ग्यन्तरेण भणनात् पर्यायोक्तम् ।

---

हरणता । एतदेवाभिसन्धायाह—**अपराधद्वये** (200b) **पूर्वापरजन्मनोरनमनं हेतुरिति** । 'यद्यप्यत्रानुमानसद्भावस्तथापि न तेन सह वाक्यार्थीभूतस्य हेतोः सङ्कीर्णव्यवहारः, उभयोरपि भिन्नदेशत्वाभावात् । अनुमानं तु हेतोर्व्यापकतयोपकारकमिति भवत्यत्राङ्गिसङ्करः । किन्तु लक्षणमत्रास्तीत्येतावदेवाभिसन्धाय हेतोरिदमुदाहृतम्' (उ स ६७ पृ )। **प्रणयिन्य** आश्रवा, ललितानि मृदूनि । **यद्वपुस्ताम्यति** क्षियते तत्र **शस्त्रं** निपातयितव्यमित्यत्र **शिरस्यव** सलङ्गो **भुजः पतत्विति** वाक्यार्थविच्छेदाभावाद् भुजपाते सामानाधिकरण्य-व्यधिकरण्याभ्यामुपात्तविशेषविशिष्टशस्त्रोपक्षेपो न वाक्यार्थतां प्रतिलभत इति हेतोरनेक-पदार्थता । यथा वा—आलोअन्ति दिसाउ ससन्त जम्भन्त गान्त रोअन्त । मुज्झन्त पडन्त हसन्त पहिअ किं ते पउत्थेण ॥ (स क आ ५।२६७) इति । **भस्मेत्यादि**—**भस्मोद्धूलनेति** सम्बोधनम् । **कान्तालयालङ्कृतिं सोपानपरम्पराविशेषणम्** । हा योगाद्द्वितीया । **निधीयामहे** निक्षिप्ताः स्म । अत्र **महामोहे** इत्यत्र **सपर्यासुखालोकोच्छेदिनीति** विशेषणद्वारेण पदार्थरूपो हेतुर्निर्दिष्टः । यथा वा—'*यद्विस्मयस्तिमितमस्तमितान्यभाव*' मित्यादौ (मा मा १२२)। अत्रास्तमितान्यभावमित्यत्र विस्मयस्तिमितविशेषणद्वारेण पदार्थरूपो हेतुर्निर्दिष्टः ।

**पर्यायोक्तमित्यादि**—अत्रापि भङ्ग्यन्तरेण हेतुत्वाऽस्तीति काव्यलिङ्गान्तरमस्य लक्षणम् । वाच्यत्वमाकाङ्क्षासन्निधियोग्यतावशात् संसर्गगमकं वाचकत्वमभिधा । आभ्यां विनाऽर्थान्तरमवगमनाभावेन यत् (201a) प्रतिपाद्यते तत्प्रति-पर्यायेणान्येन रूपेणाभिधानमिति पर्यायोक्तम् । 'अवगमनव्यापारस्य व्यङ्ग्यस्य एव

उदाहरणम्—

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥४९१॥ ( ह॰ व )

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते। तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न तथोच्यते। यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चलतीति विकल्पः। यदेव दृष्टं तदेव विकल्पयति न तु यथा दृष्टं तथा। अभिन्नासम्पृक्तत्वेन रूपेण दृष्टं भेदसंसर्गाभ्यां विकल्पयति।

---

कथमभिधानमिति चेत् गम्यापेक्षया प्रकारान्तरेणाभिधानस्याभावात्। न हि तस्यैव तदेव तथैव विच्छित्त्या गम्यत्वं वाच्यत्वं च सम्भवति। अत कार्यादिद्वारेणाभिधान, कार्यादेरपि तत्र प्रस्तुतत्वेन वर्णनाऽर्हत्वात्। अत एवाप्रस्तुतप्रशंसातो भेद। व्यङ्ग्यस्यैवात्र न वाच्यत्व किं तूक्तप्रकारेण पर्यायोक्तं यत् प्राकरणिक वाच्यमलङ्कुरुते" ( अ स १४१-४२ पृ॰ )। अतो न ध्वनिव्यवहारः किन्त्वलङ्कारतेव न्याय्येति। यथा यं प्रेक्ष्येत्यादि। "भामहेन तूदाहृतम्—( का अ ३ ६ ) 'गृहेष्वध्वसु वा नान्न भुञ्ज्महे यदधीतिन। न भुञ्जते द्विजा नो वा यदीच्छन्ते भिषग्वरा' ॥ [82]इति। अत्रापि विषदाननिवृत्तिलक्षणस्य व्यङ्ग्यस्यैव न प्राधान्यम्, गोपितार्थान्तरत्वाद्गाव्ययापि गुणभावेन विवक्षितत्वात्। तत्र सम प्राधान्यमेवात्र वाच्यव्यङ्ग्ययो। एतद्धि भगवतो वासुदेवस्य वचन पर्यायेण विषदान निषेधति यदाह भामह — तच्च रसदाननिवृत्तये' ( भा का अ ३।८ ) इति। गुणीभूतव्यङ्ग्यसद्भावादेव चास्य 'पीनो देवदत्ता दिवा न भुङ्क्ते' इत्यादिर्न विषय इति। तदेवेति—"प्रतीयमानत्वादनुभवस्य तस्योपपत्ते। अभिन्नेति—निर्विकल्पकदशाया निरंशस्य वस्तुनो भेदसंसर्गयोरभावात्। तौ हि विकल्पस्यैव व्यापार [83]। स ह्यभिन्नमपि वस्तु गौं शुक्लश्चल इत्येवं भिनत्ति भिन्नानि पदार्थजातमयं गोरथमपि गौरित्येव संसृजति' ( ह स॰ ६७ पृ॰ )।

---

82 अत्र चतुर्थपाद श्रीधरेणान्येन केनापि वाऽन्यथा कृत। भामहदर्शितश्लोकस्तु भिन्न, लोचनेऽस्यापि च तदुद्धृतौ श्रीधरकृतायान्तथा दर्शनात्।

83 एतच्च "संसृज्यन्ते न भिद्यन्ते स्वतोऽर्था पारमार्थिका। रूपमेकमनेकञ्च तेषु बुद्धेरुपप्लव ॥" इति धर्मकीर्तिकृतप्रमाणवार्तिकमतस्यानुवादि। काश्मीरीयशैवदर्शनेऽप्येतं स्वीकृतिरस्तीत्यतिरोहितमेतन्मन्तव्यम्। ग्रन्थसम्पादकस्य *The Buddhistic Nucleus in the Alankara Sastra* ( Asiatic Society

एव एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथक् लक्ष्यते। तथाहि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः॥४९५॥ (स क आ ५।३६८)

---

न पृथगिति—रुद्रटो हि ( का- अ ७।१ ) यत्रैकत्रानेकं वस्तु परं स्यात् सुखावहाद्येव ज्ञेयं। समुच्चयोऽसौ द्वेधाऽन्यः सदसतोर्योगः॥ इति सद्योगेनासद्योगेन सदसद्योगेन च रूपेण पृथगलक्षयत्। तत्र सतः शोभनस्य सता समुच्चीयमानेन योगो यथा कुलमित्यादि। श्रुति-

कौतुकम्। उद्भटादीनां प्राचीनानां दृष्टिभेदभङ्गीतो ग्रहणमेतेषामिति सुवचमेव, परं नव्यमतेऽप्येषामवसरो वरीवर्ति। एते च रसवदादयोऽलङ्कारा इति पञ्चमोल्लासग्रन्थो नाकाङ्क्षापूरक इति मन्तव्यम्। अत्र भीमसेन-दीक्षितप्रभृतीनां समाधानं न प्रेक्षावत्प्रवृत्तिमूलतामाश्रयतीत्यस्माभिरन्यत्र विवेचितम्। (vide *The Rasabhasa in Alankara Literature*, Calcutta Oriental Journal, 1935) 'अलङ्कारो न रसवत् परस्याप्रति-भासनात्। स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपी'ति वक्रोक्तिजीवितकार-कारिका 'स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पद'मिति भरतनयनिपुण-मानमत्वेन कटाक्षितानामुद्भटादीनां मततिरस्कारसूचिकेतरान् प्रेयः-प्रभृतीनपि प्रतिक्षिपतीति मन्यमानेन ग्रन्थपरिपूरकेनालकेनैते उपेक्षिताः स्युरिति वितर्कमात्रम्। उदात्तमहोक्तिविनोक्तिप्रभृतयो बहवोऽलङ्काराः कुन्तकेन न स्वीकृताः परं ते काव्यप्रकाशग्रन्थे स्वीक्रियन्त इत्यस्माभि- प्रागावेदितञ्च। 'ते च गुणीभूतव्यङ्ग्याभिधान उदाहरिष्यन्त' इत्यनेनैव विषयपरिसमाप्ति-स्वीकारो लक्षणनिर्देशपरो न विचारपथमर्हति। प्रामाणिका रुचकादयो गुणीभूतव्यङ्ग्यचित्रयोरलङ्काराश्रयत्वं स्वीकुर्वाणा अप्येतेषामन्येषामिव समासोक्त्यादीनां लक्षणादीनि कुर्वन्तो दृश्यन्ते। एषैव सरणिर्विद्यानाथविश्वनाथ-प्रभृतिभिरनुसृता। विद्यानाथेन रसप्रकरण एतान् लक्षयित्वा "एतदलङ्कार-सर्वस्वे प्रपञ्चेनोक्तम्। एतेषामुदाहरणमलङ्कारप्रकरणे भविष्यती"ति निश्चयार्थ-मुक्तम्। विश्वनाथेन त्वभिनवगुप्तपादानुयायिनाऽलङ्कारप्रकरण एवैषां समुद्देशः कृतः।

**अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।**

> **शशी दिवसधूसरो गलितयौवना कामिनी**
> **सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।**
> **प्रभुर्धनपरायणः सततदुर्गतः सज्जनो**
> **नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥४२६॥ (नी श )**

**अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोर्योगः ।**

---

**शालिनी** श्रुतिसम्पन्ना । "अत्रामालिन्येन शोभनस्य कुलस्य भव्यत्वादिविशिष्टमूर्त्यादिभिः समुच्चयः । एतेऽपि दर्पहेतुतायोग्याः सन्तः स्पर्धया निबद्धाः"-( अ स १०३ पृ ) मिति सतां योगः । यद्यपि च नववधूस्तनादीनां स्वतः शोभनत्वं तथापि सप्तानामप्यशोभनत्व-कथनं विरहिविषयत्वेन ज्ञेयम्, अशोभनत्वेनैव विरहिणा भावितत्वात् । अतोऽत्र क्वचित् समुच्चीयमानं शोभनं परस्त्वशोभनं इति सदसद्योगोऽत्र न व्याख्येय । (202b) **शशीत्यादि** । अत्रेति—अत्र शशिनः शोभनत्वं प्रकृतिसौन्दर्यात् । अशोभनत्वं धूसरत्वोपादानात् । एवञ्चास्य सदसद्रूपस्य तादृशैरेव कामिनीप्रभृतिभिर्योगादिह सदसद्योगः । **शशिनि धूसरे** इति शोभनाशोभनत्वमुपदर्शितम् । **शल्ये शल्यान्तराणीति** शोभना-शोभनास्यैव तादृशेनैव योगः । यद्यपि **नृपाङ्गनगतः** खल इति नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वं तथाऽप्यत्र श्लोके विशेष्यस्य शोभनत्वं प्रक्रान्तं विशेषणस्याशोभनत्वम् । इदन्त्वन्यथेति चेत्, सत्यमेतत्, अत एव 'नृपाङ्गनगत' इत्यस्य विशेष्यत्वं 'खल'पदस्य तु विशेषणत्वमिति केचिद्व्याचक्षते । अपरे तु विपर्ययेणापि शोभनाशोभनत्वमुपदर्शयितुमित्थं निबद्धमित्याहुः । 'दुर्वारा' इत्यत्र यद्यपि स्मरमार्गणादयः सामान्यतः शोभनास्तथापि विरहिविषयतया तेषामशोभनानामेव सतां दुर्वारत्वादिभिरशोभनत्वादिधर्मैर्योगो विवक्षितः । इह तु शोभनस्य सतोऽशोभनत्वं व्यथाऽतिशयनिष्पादकम्, अत एवोपसंहरति **मनसि सप्त शल्यानी**ति सुन्दरत्वेनान्तः-प्रविष्टानामपि व्यथाहेतुत्वात्, अपरत्र तु कथं सोढव्य इति दुःसहत्वाभिप्रायेण । तस्मादस्त्यनयोर्भिन्नविषयत्वमिति सर्वमिदमुपपन्नम्" (अ स २०५पृ) । "कमलवनेषु तुषारो रूपविलासातिशायिनीषु जरा । रमणीष्वपि दुश्चरितं धातुर्लङ्घमीव नीचेषु ॥ (रु का अ ७।२६) इत्यत्रापि कमलवनस्य तुषारस्य सदसतोस्तादृशत्वेन तरुणीजरयोः समुच्चयः, न तु कमलवनानां सतामसता तुषारेण तेषां तुल्यकक्षत्वाविरहात् । ( रु स ६७-६८ पृ ) ।

स त्वन्यो युगपद् या गुणक्रियाः ॥११६॥

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः। क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च।
प्रखलमुखानि नराधिप! मलिनानि च तानि जातानि ॥४९७॥
(रु. का. अ. ७।२८)

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपार्धरम्यैः[86] ॥४९८॥
(वि. उ. ४।१०)

कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥४९९॥

'धुनोति चासिं तनुते च कीर्तिम्' (५००) इत्यादेः, 'कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये' (५०१) इत्यादेश्च दर्शनाद् 'व्यधिकरण' इत्येकस्मिन् देश' इति च न वाच्यम्।

स त्वन्य इति समुच्चयः। गुणक्रिया (२०३a) इति बहुवचनम्। समुच्चयप्रयोजकतया व्याचष्टे गुणौ च क्रिये च गुणक्रिये च। तत्र भिन्नाश्रययोर्गुणयोरेककालमेकत्र देशे समुत्पत्त्या समुच्चयो यथा विदलितेत्यादि—अत्र मालिन्यामालिन्ययोर्यौगपद्यं चकारेण द्योत्यते। एवञ्च क्रिययोर्यथा अयमित्यादि। उर्वशीविप्रयुक्तस्य पुरूरवस इयमुक्तिः। तत्र 'उपनत'श्च 'भवितव्यञ्चे'ति क्रियासमुच्चयेन विप्रलम्भः पारम्यशोऽभिव्यज्यते। तदेतद्द्विभिन्नविषयत्वेनोदाहरणद्वयम्। अत्र गुणस्य क्रियायाश्च युगपदुपपत्तिमुदाहर्तुं पठनीयम्।[87] कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसुन्दरश्रि चक्षुः। पतितञ्च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥ कटाक्षः शुभ्रो रक्तः कृष्णश्च। न वाच्यमिति रुद्रटेन ह्युक्तम्। (रु. का. ७।२७)।

86 "निरातपरत्नरम्यै' रिति पादपूरणकल्पोऽमनोज्ञः पाठः क्वचित्। अर्धरम्यैरिति शाकुन्तले 'दिवस इवार्धश्यामस्तपात्यये जीवलोकस्ये'ति श्लोकार्धस्य तुलना वहति।

87 एवं रुचककृते सङ्केते। अनेन वचनेन श्लोकोऽयं मूलग्रन्थे रुचकात् प्राचीनैः कैश्चिन्न पठित इति प्रतिभाति। रुचकसङ्केतसंस्करणेऽस्मत्टिप्पण्यत्र द्रष्टव्या। एवमत्र प्रकरणे बहून्येव पद्यानि रुचकानुसारिणा श्रीधरेण मूलेऽन्तर्भावसमर्थनकल्पे प्रयोजकत्वेन टीकायां पूर्णत्वेनोद्धृतानि। रुचकमाणिक्यचन्द्रश्रीधरसरस्वतीतीर्थ-

**एकं क्रमेणानेकस्मिन् पर्यायः**

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स **पर्यायः**।

क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट ! केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः
खलानाम् ॥५०२॥ (भ श. ४७)

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत।
अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥५०३॥ (न. सा. च. ६।६०)

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम्।

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥५०४॥ (बा भा. १।२८)

---

व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन्। उपजायेते देशे समुच्चयः स्यात्तदन्योऽसाविति ॥ एकाधिकरणत्वेन **धुनोत्यादि**, भिन्नदेशतया **कृपाणपाणिश्चेत्यादि**।

**पर्याय** इति यौगपद्यवैपरीत्यात् समुच्चयानन्तरमस्य लक्षणम्। अयञ्च द्विधा "तत्रैकमनेकस्मिन्नाधारे यद्भवति क्रियते वा स एकः पर्यायः। नन्वेकमनेकगोचरमिति विशेषालङ्कारोऽस्त तत् किमर्थमिदमुच्यत इत्याशङ्क्योक्तं **क्रमेणेति** इह क्रमप्रतिपादनात्तत्र यौगपद्यप्रतीतेरस्य ततो विभिन्नविषयत्वम्। क्रमाश्रयणादेव पर्याय इत्यन्वर्थाभिधानम्। विनिमयाभावाच्च परिवृत्तेर्वैलक्षण्यम्।" (अ. स. १८६-९० पृ)। **नन्वित्यादि**—अत्र कालकूट-(203b)मेकमनेकस्मिन्नसहृदये समुद्रहृदयादौ क्रमेण स्थितिमभिबद्धम्। **बिम्बोष्ठ एवेत्यादि**। *"क्रमेणेति प्रतीकानन्तरम्—श्रोणीबन्ध-*

---

प्रभृतिभिर्मूलमध्ये स्वीकृतोऽप्ययं श्लोकः, दाक्षिणात्यैरप्पयदीक्षितपण्डितराजादिभिः काव्यप्रकाशोदाहृत इति स्वीकृतोऽपि गोविन्दठक्कुरभीमसेनदीक्षितप्रभृतीनामर्वाचां ग्रन्थेष्वश्रुतत्वादाधुनिकैर्ग्रन्थसम्पादकैर्मूलमध्ये न दर्शित इति महदिदं धाष्ट्यम्। 'प्रयोजनाभावात् प्रदीपाद्यनुसरणमेव श्रेय' इति तेषामुद्धृतं शंसनमतीव कौतुकावहम्।

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥५०५॥ (वि. बा. ली.)

**अन्यस्ततोऽन्यथा ।**

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा तत् सोऽन्यः ।

क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुरन्तर्गतमिव हालहलं विषं तदेव ॥५०६॥

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥५०७॥

(ध्व. आ. ३।१६ वृ.)

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः ।

---

त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयश्च वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेनेति पाठः । आर्यार्धमेव श्लोकस्योदाहरणम् ।" (उ. सं. ६८ पृ.) । एकस्थानस्थितस्य वस्तुनः स्थानान्तरप्राप्तिमात्रमत्र विनिमयपदेन विवक्षितम् ।

तं ताणेत्यादि—तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ तेषामसुराणां श्रीसहोदररत्नं कौस्तुभः । निवेशितं चुम्बनैकसक्तं कृतमिति वाच्यं प्रतीतावनुरणनतया । कान्ताऽऽधरकौस्तुभयोः कान्तादिसाम्यादुपमाऽत्र प्रतीयमाना । अन्य इत्यादि—एकस्मिन्नाधारेऽनेकमाधेयं यत् स द्वितीयः पर्यायः । समुच्चयालङ्काररूपत्वं निराकर्तुं क्रमेणेति योजयति । "अत एव समुच्चयलक्षणे युगपद्ग्रहणम् । अत्रापि "क्रमेणेत्यादि प्रतीकात् परम्—मधुरिमरुचिरं वचः खलानामृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुरन्तर्गतमिव हालहलं विषं तदेव ॥ तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः सा धेनुर्जरती नदन्ति करिणामेताः घनाभा घटाः । स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषितामाश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिरिति पाठः ॥" (उ. सं. ६६ पृ.)

अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ॥११७॥

पक्षधर्मान्वयव्यतिरेकेण त्रिरूपो हेतुः साधनम्। धर्मिण्ययोगव्यवच्छेदो व्यापकस्य साध्यत्वम्। यथा—

यत्रैता लहरीचलाञ्चलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥५०८॥

अनुमानमिति सन्दिग्धसाध्यधर्मा धर्मी पक्ष , तद्धर्मवत्त्व तद्वृत्तिता, (२०४२) अन्वय व्यतिरेकवत्त्व व्याप्तत्व—सपक्षे सत्त्व, विपक्षे व्यावृत्तत्वमित्यर्थ । एवञ्च हेतोस्त्रिरूपस्यानु मापकत्व[88] यदाह—( स क आ ३२७ पृ ) अनुमेयेन सम्बद्ध प्रसिद्धञ्च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ अनुमेयेन सबद्धमिति सपक्षेण, तस्यैव साध्यवत्तयाऽनुमेयत्वात्। यदाह—स एव चोभयात्माऽय गम्यो गमक इष्यते। असिद्धे-नैकदेशेन गम्य सिद्धेन बोधक ॥[89] धर्मिणीति सिषाधयिषितधर्मविशिष्टे पक्ष इत्यर्थ । व्यापकस्य लिङ्गिन । अयोगव्यवच्छेद ससर्गाभावव्यावृत्ति ससर्गनियम इति यावत्। 'विच्छित्तिविशेषश्चार्थादन्वेषणीय । अन्यथा तर्कानुमानात् कि वैलक्षण्यमिति ?' ( अ स १८४ पृ )। एतच्च शुद्धमपि चमत्कारास्पदमिति शुद्धमलङ्कारान्तराश्रयेण विरहेणानुमानमुदाहरति यत्रैता इत्यादि। अञ्चित आकृष्ट प्रेङ्खत्कर सुन्दरकर । "अत्र योषिता भ्रूव्यापारेण मार्गणपतन स्मरपुरोगामित्वे साध्ये साधनमित्यनुमान

88 एतच्च काव्यानुमान न तर्कशास्त्रसम्मतमनुमानमिति बोद्धव्यम्। अत्रावेदित विशेषणास्तर्के नातिव्याप्तिरिति प्राञ्च । साध्यसाधनाभ्यामभिधानमित्यर्थोऽतो नातिव्याप्तिरिति मिश्रा इति मैथिलपण्डितराज । यत्र शब्देन पक्षधर्मान्वय-व्यतिरेकवत् साधन साध्यप्रतीतये निर्दिश्यते सोऽनुमानालङ्कार । तर्कानु मानसमकक्षमेवास्य लक्षणमिति कविकर्मण एवालङ्कारनिबन्धनत्वेनोक्तत्वादिति च तत्र जयरथ । यत्र तु 'जाने' 'नून मित्यादिपदप्रयोगमहिम्ना स्वप्रतिपत्ति-निश्चयत्वात्तानुमानमिति शोभाकरकृत लक्षणम्। नात्र लिङ्गलिङ्गिनो कार्य कारणयो समर्थनकल्प किञ्चित्।

89 एतत् सर्व स का आ मूले एव। मुद्रितपुस्तके भ्रान्त्याऽन्तिमार्धटीकारूपेण दर्शित । द्वितीयखण्डोपोद्घात एतद्विषयमनुशीलन द्रष्टव्यम्।

साध्यसाधनयो पौर्वापर्य तथा न वैचित्र्य किञ्चिदिति न तथा दर्शितम्।

---

शुद्धम्। तदिह भ्रुव. स्मरचापदण्ड इत्यादौ रूपकत्वमित्यादि कविप्रौढोक्तिमात्रनिष्पन्नार्थनिष्ठत्वेन च विच्छित्तिविशेषाश्रयणाच्चारुत्वम्" (अ स १८५ पृ)। 'यथा रन्ध्र व्योमस्थलजलदधूम स्थगयति स्फुलिङ्गाना रूप दधति च यथा कीटमणय। यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्न पथिकतरुखण्डे स्मरदव॥ अत्र धूमस्फुलिङ्गकपिलादिभत्त्वानि वह्निलिङ्गानि निरूपलाद्यवशब्दप्रतिपादित वह्नि गमयन्ती"-(अ स १८४ पृ)ति रूपकगर्भीकारेण विच्छित्त्याश्रयणे चमत्कारास्य (204b)दत्वात्। तदनुमानवैलक्षण्य स्फुटमेव। साध्यसाधनयोरिति—यदाहु —त्रिविधमनुमान पूर्ववच्छेषवत् सामान्यतो दृष्टचेति (न्या सू १।१।५)। अत्र पूर्व कारण तद्विद्यते विषयतया यस्य परामर्शज्ञानस्य तत् कार्येण कारणज्ञान पूर्ववत्। कारणस्य प्रागुपयोगादनुपयुक्त कार्य शेष, स विद्यते विषयतया यस्य परामर्शज्ञानस्य तत् कार्येण कारणानुमान शेषवत्। अकार्यकारणभूतेनाविनाभाविना लिङ्गेन यदनुमान तत् सामान्यतो दृष्टम्। रुद्रटोऽप्याह—(रु का अ ७।५६) वस्तु परोक्ष यस्मिन् साध्यमुपन्यस्य साधक तस्य। पुनरन्यदुप यस्येद्विपरीत चैतदनुमानम्॥ इति। यथा—मानु(न)ज्ञमागमिष्यन्नून पतितोऽसि पादयोस्तस्या। कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्॥ (रु का अ ७।५८)। अत्र यावकरसतिलकपङ्क्ते कार्यभूताया कारणभूत पादपतनमनुमीयते। यदि वा व्यतिरेकात् पूर्व प्रतीयत इति पूर्वोन्वय, स एव शुद्धोऽस्यास्तीति पूर्ववत्। केवलान्वयि विवक्षिततज्जातीयोपपत्तौ विपक्षहीनम्, यथाऽभिधेयो विशेष प्रमेयत्वात्, यत् प्रमेय तदभिधेय यथा सामान्य, तथा च विशेषस्तस्मादभिधेय। न ह्यनभिधेयमप्रमेय वा किञ्चिदस्ति यो विपक्ष स्यात्। पश्चात् प्रतीयमानत्वाच्छेषो व्यतिरेक, स एव शुद्धोऽस्यास्तीति शेषवत्, केवलव्यतिरेकी, पक्षव्यापकत्वे सपक्षाभावे विपक्षावृत्ति, यथा—जीवच्छरीर (205a) सात्मक प्राणादिमत्त्वात्, यत् सात्मक न भवति तत्र प्राणादिमत् यथा घट। न च जीवच्छरीर न प्राणादिमत्, तस्मात् [न तथा] सात्मकम्। यत्तु सामान्येनान्वयव्यतिरेकाभ्यां द्वाभ्यामपि तत् सामान्यतो दृष्टम्। (त भा ३६ पृ)। अन्वयव्यतिरेके यथा पर्वतोऽग्निमान् धूमवत्त्वात्, यो धूमवान् सोऽग्निमान्, यथा महानसम्, तथैवाय तस्मात्तथा। अनुमानवदर्थापत्त्यादिप्रमाणान्यप्यलङ्काररचनान्ये परिगणयन्ति[१०]। तत्रैषा मतेऽर्थापत्तेस्तावत् प्रामाण्य नाङ्गीक्रियते। यथाहि प्रत्यक्षादिप्रतीतौ

---

१० भोजस्तदनुयायिनो रत्नार्णवकारादयश्च। अर्थापत्तिरनुमानमेवति नैयायिकमतानुयायिनी श्रीधरोक्ति। रत्नार्णवकृताऽर्थापत्ते परेषा जैमिनिप्रमाणानां मध्ये-

योऽर्थः स येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिरित्यार्थापत्तेर्लक्षणम्। तत्रेदं चिन्त्यते। योऽसौ प्रमाणप्रतीतोऽर्थः स यदि परिकल्प्यमानेन परोक्षार्थेन सह कश्चित्तादात्म्य-लक्षणस्तदुत्पत्तिलक्षणो वा प्रतिबद्धोऽस्ति तदा स्वभावलिङ्गजा कार्यलिङ्गजाऽसौ प्रतिपत्तिरित्यर्थापत्तिरित्यनुमानमेव। अथ नास्ति प्रतिबन्धस्तदानीमर्थापत्तिः प्रमाणमेव न भवति, असम्बन्धात् घटात् पटप्रतीतिवदिति। एवं नैयायिकस्योपमानप्रमाणप्रपञ्चः। तथा हि यः प्रतिपत्ता गां जानाति न गवयं स चादिष्टः स्वामिनाऽरण्यं गत्वा गामानयेति। स च गवयशब्दवाच्यमजानानो वनेचरमन्यं वा तज्ज्ञं पुरुषं पृष्टवान् भ्रातः कीदृशो गवय इति? स चाह यादृग् गौस्तादृगेव गवय इति। तस्यारण्यगतस्य प्रेष्यस्य पुरुषातिदेशवाक्यार्थस्मरणसहकारि गवयसारूप्यज्ञानं कर्तृ अयमसौ गवयशब्दवाच्योऽर्थ इति प्रतिपत्तिं फलरूपां जनयत् प्रमाणम्। एतच्चायुक्तं यतः प्रामाण्यं नाम विषयवत्तया व्याप्तं, (205b) न चास्य निपुणमपि निरूपयन्तो विषयं पश्यामः। तथाहि [यः] समाख्यासम्बन्धस्तस्य विषयो वर्ण्यते। स च परमार्थत्वे नास्ति, दृश्यत्वे तस्यानुपलम्भेन बाधात्, अदृश्यत्वे तस्य सत्तासाधकं प्रमाणं नेष्यते। किञ्च स हि सम्बन्धसम्बन्धिभ्यां भिन्नोऽभिन्नो वा? यदि भिन्नस्तदा तयोः सम्बन्धः केन सम्बन्धेनेति वाच्यम्। सम्बन्धान्तरकल्पनायामनवस्था। अथाभिन्नस्तदा सम्बन्धिनावेव केवलौ न समाख्या नाम सम्बन्धः कश्चित्। अथैवं सम्बन्धबुद्धिजनकत्वं सम्बन्धस्यायुक्तं, यतः सम्बन्धावेताविति बुद्धिस्तुल्यहेतुबलात् सम्बन्धवस्तुद्वयादपि सम्भाव्यमानो न सम्बन्ध-माक्षेप्तुं प्रभवति। एवं मीमांसकोपवर्णितस्यापि प्रमाणं निराकर्तव्यम्। तथा हि सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य तेन विषयो वर्ण्यते। न च सदृशं वस्तुनोऽतिरिक्तं सादृश्यं, स्यात्तदा दृश्यानुपलम्भग्रस्तमेतत्। अथादृश्यं तथापि तत्प्रतिबद्धलिङ्गाभावादनुमानादपि सकाशात् कथं तत्सिद्धिः? सादृश्य-प्रत्ययस्तु स्वहेतुबलात्तथोत्पन्नेन सदृशवस्तुनाऽपि क्रियमाणो घटत इति न तत्प्रत्ययादपि तत्प्रसिद्धिर्युक्ता। उपमानादेव सादृश्यसिद्धिरिति चेत्, न, यतः प्रमाणान्तरात् सिद्धयोरेव सादृश्यपिण्डयोर्यो विशेषणविशेष्यभावस्तस्योपमानविषयत्वं तेन वादिना कल्प्यते। तत्र

---

ऽस्वीकारे किञ्चित् कारणत्वेनोपन्यस्तव्यमिति तद्ग्रन्थमीमांसकैर्मन्तव्यमित्यस्माभि-रन्यत्र निरधारि। (Vide our paper on *the Rasārṇavālakāra* in J.O.I. Baroda vol. viii, no. 4) अत्र विचारसन्न्यसने टीकाकृतस्तर्कचार्य-त्वसंज्ञाया अन्वर्थता सूचिता।

विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः ।

अर्थाद्विशेष्यस्य । उदाहरणम्—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
नसंहतास्तस्य नभिन्नवृत्तय प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥५०४॥

(कि अ १।१९)

यद्यपुष्टार्थस्य दोषताऽभिधानात् तन्निराकरणेन पुष्टार्थस्य स्वीकार कृतः,

---

(206a) कथ सादृश्यभावस्योपमानात् सिद्धिरिति ? अभावस्य तु स्वरूपमेव तावन्नोपलभामहे, कुत एतस्य प्रामाण्य भविष्यति ? तथा हि प्रत्यक्षादिप्रमाणानामनुत्पत्तिरभावाख्य प्रमाण मीमासकैरभिधीयते । तत्र केयमनुत्पत्ति ? किं प्रसज्यवृत्त्या प्रमाणानुत्पत्तिमात्रम्, अथ पर्युदासवृत्त्या वस्त्वन्तरम् ? वस्त्वन्तरमपि जडरूप ज्ञानरूप वा ? ज्ञानमपि किं ज्ञानमात्रमेकज्ञानसंसर्गिवस्तुनो ज्ञान वा ? तत्र न तावत् प्रसज्यरूपोऽभावो युज्यते, तस्य सर्वशक्तिशून्यत्वात् परिच्छेदकत्व ज्ञानजनकत्व वा कथ भवेत् ? अत एव न केनापि तत् प्रतिपाद्यते । यदाह "न ह्यभाव कस्यचित् प्रतिपत्ति, प्रतिपत्तिहेतुर्वा, तस्यापि वा कथं प्रतिपत्तिरिति ।" (न्या कु स्त ) । नापि जडरूप जडस्य परिच्छेदकाभावात् । न हि जडरूप शकटादिक घटादिक परिच्छिनत्तीति क्वापि दृष्ट श्रुत वा । नापि ज्ञानमात्रं देशकालस्वभावविप्रकृष्टस्यापि सुमेरुशङ्खचक्रवर्तिपिशाचादेरपि ज्ञानमात्रादभावप्रमाणादभावप्रसङ्गात् । अथैकज्ञानसंसर्गिभूतलादिवस्तुज्ञानमभावोऽभिधीयते तदा प्रत्यक्षविशेष्यस्यैवाभाव इति नामान्तरकरणम् । प्रत्यक्ष परिदृश्यमाना अपि पदार्था न तथा स्वदन्ते यथा वाग्मिनो वचोभिरावेद्यमाना इति (ध्व आ लो ३।४ ह० ) स्वत सम्भावि मनाक् कटाक्षितम् । शाब्दन्तु प्रमाणमत्रानुपयुक्तमेवेति प्रागेवोक्तम्, अतोऽनुमानमेवोदाहृतवान् ।

विशेषणैरिति—यथा लिङ्गेन लिङ्गिनो ज्ञान तथा विशेषणेन विशेष्यस्येति (206b)सङ्गत्या तदनन्तरमस्य लक्षणम् । आकूतोऽभिप्राय, विशेषणानां साकूतत्वं प्रतीयमानानधीकार । अत एव प्रसन्नगम्भीरत्वान्नाय ध्वनिविशेष, प्रतीयमानाङ्गस्य वाच्योन्मुखत्वात् । परिकर इति सार्थक नाम, कार्यस्योत्पत्त्यनुगुण कारणं सामग्री परिकर इत्युच्यते । विशेषणबलात् प्रतीतिर्विशेष्यस्यैवोपजायत इति व्याचष्टे अर्थाद्विशेष्यस्येति । उक्तिरिति योजनीयम् । विशेष्यन्तु द्रव्यादिभेदाच्चतुर्विधमित्यय चतुर्धेति रुद्रट (रु का अ. ७।७२) । महौजस इत्यादि—तस्य सुयोधनस्य प्राणैरपि प्रियाणि कर्तुमिच्छन्ति तदर्थं प्राणानपि जहतीत्यर्थ । न च ते तत्रासमर्था इत्यभिप्रेत्याह महौजस इति । एव

तथाप्येकनिष्ठत्वेन बहूना विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कार-मध्येऽस्य गणितः।

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥११८॥

निगूढमपि वस्तुनो रूप कथमपि प्रभिन्न केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः। न चैषाऽपह्नुति, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहा-सम्भवात्। उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसण्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्त.पुरमातृमण्डलगणैर्दृष्टोऽवताद्व: शिव. ॥५१०॥

---

**मानधना** इत्यादावपि। हरेषु सहता वित्त भिन्नास्तेऽनुपकारिण्य[91] इति प्रतिपादित-दिशोक्त **नसहता** इत्यादि। ननु (?) चापुष्टार्थता विरहाभावात् पुष्टार्थत्वनिबन्धनमतो-पादेयत्व न पुनरलङ्कारता, वैचित्र्यातिशयाभावात् इत्यत आह **तथापी**त्यादि। अनेन कवे शक्तिव्युत्पत्ती प्रतीयेते यत (?)

**व्याजोक्ति**रिति—पूर्वत्रानुद्भिन्नस्य वस्तुनः प्रकाशनम्, इह तूद्भिन्नस्य निगूहनमिति वैधर्म्यादस्य सङ्गति। **कथमपी**ति केनापि निमित्तेन **प्रभिन्न** प्रकटता प्राप्तम्। **केनापि व्यपदेशेने**ति विशिष्टेनापदेशेन वस्त्वन्तरप्रक्षेपरूपेण व्याजेन यदप-लप्यते सा व्याजस्य वचनाद्व्याजोक्तिरित्यन्वर्थं नाम। **प्रकृताप्रकृते**ति—"क्वचित्प्रकृत-निष्ठ साम्य (२०/१) यथा—(र न ८१५, प जी २०३-२०४ पृ) सदय बुभुजे महाभुज सहसोद्वेगमिय व्रजेदिति। अचिरोपनता स मेदिनीं नवपाणिग्रहणा वधूमिव॥ इति समुच्चितोपमायाम्। क्वचिदप्रकृतनिष्ठ यथा क्याश्चित् तुल्ययोगितायाम्। क्वचित् तदुभयनिष्ठ यथाऽपह्नुत्याम्। तच्चेह न विवक्षित प्रकृतस्यैव सद्भावात्" (उ स ६६ पृ)। **शैलेन्द्रे**-त्यादि—उपगूढमुपगूहनम्। विधिर्होमप्रदक्षिणादि। व्यासङ्गो विरोधस्तत्साङ्गो भयम्।

---

91. तेऽननुकारिण इति 'ख' पुस्तके पाठ। अननुकारिण इति पाठस्य समर्थन "ऊर्ध्व पितुश्च मातुश्च समेत्य भ्रातर सनम्। भजरन् पैतृकं रिक्थमनाशास्ते हि जीवतो" रिति मनुवचनात् 'पितर्यूर्ध्व गते पुत्रा विभजरन् धन क्रमा'दिति नारदवचनात् 'विभजेरन् सुता पित्रोरूर्ध्व रिक्थमृण सम'मिति याज्ञवल्क्य-वचनाच्च न सम्भाव्यते।

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतो शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।

> किञ्चित् पृष्टमपृष्टं च कथितं यत् प्रकल्पते ।
>
> तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥११९॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति सा भवेत् परिसंख्या । अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टं, तथोभयत्र व्यपोह्यमानस्य प्रतीयमानत्वं वाच्यत्वं चेति चत्वारोऽस्या भेदाः ।

क्रमेणोदाहरणम्—

> किमासेव्यं पुंसां ? सविधमनवद्यं द्युसरितः
>
> किमेकान्ते ध्येयं ? चरणयुगलं कौस्तुभभृतः ।
>
> किमाराध्यं ? पुण्यं किमभिलषणीयं च ? करुणा
>
> यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥५११॥

---

ऊचिवान् भगवानेव । मातृमण्डलमध्ये मातरः । सस्मितं शैलान्तःपुरादिभिर्दृष्ट, न तु सस्मितमूचिवानिति योजनीय, तथा सत्युद्भिन्नस्य वस्तुन प्रत्युत स्फुटत्वघटनात् । अत्र रोमाञ्चवेपथुभ्यामुद्भिन्नो रतिभाव शैत्यप्रक्षेपेणापलापित । भट्टोद्भटस्तु यथा सादृश्याय योऽपह्नव साऽपह्नुतिस्तथाऽपह्नवायापि यत् सादृश्य साऽपह्नुतिरित्यपह्नुतिप्रकारत्वान्नेमं पृथक् लक्षयति ( का अ सा स ५।५ द )।

किञ्चिदित्यादि—अवगतमपि प्रतिपाद्येन ज्ञातमपि । 'परिवर्जने' ( पा. १।४।८८ द ) वर्जनार्थं सङ्ख्या कथन परिसङ्ख्या । तादृगन्यव्यपोहायेति व्याचष्टे सदृशवस्त्वन्तरेति । अलङ्कारप्रस्तावाच्च 'विधिरत्यन्तमप्राप्तौ नियम पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या तु कीर्त्यते ॥' इति वाक्यविदां लक्षणमनादृत्य पाक्षिक्यामपि प्राप्तावयमिष्यते । अत एव 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' । 'पञ्च पञ्चनखा भक्ष्या' इति नास्य विषयः । जिज्ञासाऽऽविष्करण प्रश्नः, येन जिज्ञासा विव्रियते तद्वचन प्रश्न इत्यर्थ । तत्पूर्वक (२०७६) कथन, वर्जनीयस्य प्रतीयमानत्ववाच्यत्वाभ्यामर्थाद् द्विधा । किमासेव्यमित्यादि । अत्रालौकिकं वस्तु गृह्यमाण तत्सदृशसरिदन्तरादिवस्त्वन्तरपरिच्छेदे पर्यवस्यति, व्यवच्छेद्यञ्च प्रतीयमानं सरिदन्तरसविधसेवन युगपन्न

किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥५१२॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥५१३॥ ( रु. का. अ. ७।८१ )

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥५१४॥

यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता।
तदा कारणमाला स्यात्

उत्तरमुत्तरं प्रति यथोत्तरम्। उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥५१५॥

'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' ( रु. का. अ. ७।८२ ) इति हेत्वलङ्कारोऽत्र न लक्षितः। 'आयुर्घृत'मित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात्।

---

सम्भवतीति पाक्षिकीयं प्राप्तिः। **किं भूषणमित्यादि—आर्यचरितमिति** शिष्टैरनुष्ठितम्। **धिषणा** प्रज्ञा। अत्र **न रत्नमित्यादिक** शाब्दं वर्जनीयम्, न च पौनरुक्त्यं विशेषपरत्वात्। प्रश्नं विना पूर्ववदेव द्विधा। **कौटिल्यमित्यादि**—*अन्यत्र* **रागो** नास्तीति शेषः। अत्र रागपदेन रोषो विवक्षितः[92]। अत्र कौटिल्यादीनामन्यत्र व्यवच्छेदः प्रतीयमानः। युवतय एव कामस्यास्त्रमायुधम्। अत्र **न विभव** इत्यादि व्यवच्छेद्यं शाब्दम्।

**यथोत्तर**मित्यादि—यदा पूर्वपूर्वं क्रमेणोत्तरोत्तरं प्रति हेतुतां भजते तदा कारणमालाऽऽख्योऽलङ्कारः। वीप्सालक्षण'यथा'र्थेऽव्ययीभाव इत्याह—**उत्तरमुत्तरं प्रती**ति। **जितेन्द्रियत्व**मित्यादि—अत्र कार्यकारणक्रम एव चारुताहेतुः "हेतुमता सह हेतोरभिधानमभेदकृद्भवेधत्र। सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूत" इति हेतुरलङ्कारो भट्टोद्भट-

92 एवमपि 'अवलेपविस्मृतजन्माना दोषासङ्जेव रागावेशेन बाध्यमाना' इति कादम्बर्यां शुकनासोपदेशप्रसङ्गे 'कुपिता बुद्धिर्नातमरागदोषं पश्यती'ति 'आदाविन्द्रियाणि रागः समास्कन्दती'ति च सरस्वत्यै दुर्वासःशापप्रसङ्गे भट्टबाणस्य प्रयोगाः।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥५१६॥

( रु. का. अ. ७।८३ )

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न तु हेत्वलङ्कार-कल्पनयेति पूर्वोक्तोऽलङ्कारः काव्यलिङ्गमेव न हेतुः ।

**क्रियया तु परस्परम् ॥१२०॥**

**वस्तुनोर्जनने‌ऽन्योन्यम्**

अर्थयोरेकक्रियामुखेन परस्परकारणत्वे सति अन्योन्यनामाऽलङ्कारः ।

उदाहरणम्—

हंसाण सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिअ एए अप्पाणं णवर गरुअन्ति ॥५१७॥

( गा. स. वे. ६५३ ),

अत्रोभयेषामपि परस्परजनकता मिथः श्रीसारतासम्पादनद्वारेण ।

---

रुद्रटादिभिः[93] पृथग् लक्षित उदाहृतश्च । **अविरलेत्यादि**—एवमप्यत्र यत्र पृथग् लक्ष्यते तत्र हेतुमाह **वैचित्र्याभावादिति** । 'गौणे ह्युपचारे सादृश्यसम्बन्धयाद्वैचित्र्यम्, न तु 'आयुर्घृत'मित्या'दौ ( रु का अ टी. ७।८३ ) तद्विपर्ययात् । तर्हि उदाहृते कथं काव्यता निरलङ्कारत्वादित्यत आह **कोमलानुप्रासमहिम्नैवेति** । "यद्यप्यव्यभिचरितत्तयैव(२८४a)विकाशादीनां नैरन्तर्येण जननमिहोपमानप्रयोजनं व्यङ्ग्यं तदसुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति तु प्राक् प्रतिपादितमेव, तथाप्यलङ्कारचिन्तायाः प्रक्रान्तत्वात्तदपहृत्यैवावधारणगर्भमिदमभिहितम् । अत एव तटस्थतयैवोक्तम् **समाम्नासिषुरिति**—उद्भटादयः (?) प्रत्यपादयन्निति ह्यत्रार्थे ।" ( इ. स ६६ पृ. )

परम्परायाः कारणत्वेऽलङ्कारं लक्षयित्वा परस्परकारणत्वे लक्षयति—**क्रियया त्विति**—क्रियाद्वारकं परस्परोपपादकत्वं न तु स्वरूपनिबन्धनं, स्वरूपस्य यथार्थोक्तौ विरोधात् । अतः परस्परोपकारकत्वमत्रान्योन्यकारणत्वेन विवक्षितम् । उपकारश्च विशेषाधानरूपः । यदाहुः—( रु. का. अ. ७।९१ ) यत्र परस्परमेकः कारकभावोऽभिधेययोः क्रियया ।

---

93 अत्र रुद्रटादिभिरित्येव रुचकश्रीधरग्रन्थयोः पाठः सङ्गतः । स च तदुद्धृतलक्षणेनैवावगम्यते । लिपिकाराणामनवधानादेवंविध पाठो दृश्यते । ग्रन्थसम्पादकस्योपोद्घातीयमन्तव्यमत्रावधानीयम् ।

उत्तरश्रुतिमात्रतः ।

प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥१२१॥

असकृद् यदसम्भाव्यमुत्तरं स्यात् तदुत्तरम् ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र परिकल्प्यते, तदेकं तावदुत्तरम् । उदाहरणम्—

वाणिअअ ! हत्थिदन्ता कत्तो अह्माण वग्घकित्ती अ ।

जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥५१८॥

( ध्व. आ. ३।१७ वृ: )

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, मूल्येन ताः प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते । न चैतत् काव्यलिङ्गम्, उत्तरस्य तादूप्यानुपपत्तेः । न हि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम्, एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः ।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसम्भाव्यरूपं प्रतिवचनं स्यात् तदपरमुत्तरम् । अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् ।

---

सजायते स्फारिततत्त्वविशेषस्तदन्योन्यम् ॥ इति । विशेषस्तु नानारूपस्तत्र वाक्यार्थीभूतरसाद्यनुगामितया तत्र तत्र प्रतीयते । न त्वियं परिवृत्तिर्विनिमयाभावात् । हसाना सरोभिः श्रीः सार्यते सारीक्रियते अथ सरसा हंसैः । अन्योन्यमेवैते आत्मानं केवल गरयन्ति गुरु कुर्वन्ति ॥

**उत्तरश्रुतीति**—यत्रानुपनिबध्यमानोऽपि प्रश्न उपनिबद्धादुत्तरादुन्नीयते तदेकमुत्तरम्, 'यत्र च प्रश्नपूर्वकं लोकोत्तरविषयत्वादसम्भावनीयमुक्तं तच्च न सकृत् तावन्मात्रेण चारुत्वाप्रतीतेः, अतश्चासकृन्निबध्यते तद्द्वितीयमुत्तरम्' । ( अ स. २३६ पृ. ) तत्राद्यं यथा **वाणिअअ** इत्यादि । वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्र-(208b)कृत्तयश्च । यावद्विलुलितालकमुखी गृहे परिष्वक्कते विलसति स्नुषा ॥ उत्तरेणात्र प्रश्न उन्नीयते न तु जन्यते, प्रश्नेऽपि सति कचिदुत्तरस्यादर्शनात् । ननु वह्निर्यथा धूमं जनयत्येवेति नियमः, धूमस्तु वह्निजन्य एव, तथाऽत्राप्युत्तरं प्रश्नजन्यमेवेति नियमादायातमनुमानत्वमस्येत्यत आह—**नापीति** । अत्र हेतुः एकस्मिन् धर्मिणीति । प्रश्नोत्तरयोरत्र साध्यसाधनत्वेनोपकल्पितयोः क्रेतृविक्रेतृगतत्वेन वैयधिकरण्यात् । नापीदं वाक्यं प्रश्नपूर्वकमुत्तरत्वात् सम्प्रतिपन्नवदिति युक्तं साध्यविशेषात् । प्रश्नपूर्वकमेवोत्तरं यतः । अलङ्कारान्तरमेव **साधीयोऽतिशयेन** साधु श्रेष्ठम् ।

उदाहरणम्—

का विसमा देव्वगई किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुग्गाहिअं खलो लोओ ॥५१९॥

(गा. स. वे ९७५)

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्य एव विश्रान्ति-रित्यनयोर्विवेकः ।

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ॥१२२॥

कुतोऽप्याकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः ।

उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥५२०॥

---

द्वितीयमुत्तरं यथा **का विसमे**त्यादि—का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही । किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥ किं लद्धव्वमित्यत्र को लाहो इति पाठः सुन्दरः ।[94] अत्र दैवगत्यादि निगूढत्वाद्यसम्भाव्यमसकृत्प्रश्नपूर्वकमुत्तरं निबद्धम् । न चेयं प्रश्नपूर्विका परिसंख्या व्यवच्छेद्यव्यवच्छेदकपरत्वाभावादित्याह— **प्रश्नपरिसंख्याया-मि**ति । **अन्यव्यपोह एवे**ति न तु नं वाच्यं, 'पञ्च पञ्चनखा भक्ष्या' इत्यादिन्यायेन वाक्यस्यातत्परत्वात् ।

**कुतोऽपी**ति—आभ्यन्तरोन्नयनप्रस्तावादस्य सङ्गतिः । 'इह सूक्ष्मस्थूलमतिभिरसंलक्ष्यो योऽर्थः स यदा कुशाग्रीयमतिभिराकारादिङ्गिताद्वा संलक्ष्यते तदा तस्य संलक्षितस्य विदग्धं प्रति प्रकाशनं सूक्ष्मं नामालङ्कारः ।' (अ. स. २१७ पृ.) अभिप्रायानुसारेण (209a) स्वयमाविर्भूतो रूपादेरन्यथाभावः **आकारः** । अन्यत् कुर्वाणस्य शरीरतदवयव-व्यापारस्थानत्यागभ्रूक्षेपादिलक्षण**मिङ्गितम्** । तत्राकारात् यथा **वक्त्रस्यन्दी**त्यादि ।

---

94 अत्र 'किं लद्ध ज जनो' इति क्वाचित्को मूलपाठः । तस्य किं लब्धमिति च्छाया । सैव च्चक्रवर्त्तसङ्केते दृश्यते । यत्तु लब्धव्यमित्यत्र श्रीधरधृताऽन्यैः वैरपि च प्रदर्शिता छाया साऽमूलत्वाद्धेया । एवं स्थिते 'को लाहो' इति पाठः सुन्दर इति श्रीधरमन्तव्यमप्रयोजनमेव । छायायां लब्धमित्यत्र भावे निष्ठा ।

अत्राकृतिमालोक्य कयाऽपि वितर्कितं पुरुषायितं मिलता लेखनेन वैदग्ध्या-दभिव्यक्तिमुपनीतं, पुंसामेव कृपाणस्य पाणियोग्यत्वात्। यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥५२१॥

(ध्व. आ. २।२१ टी.)

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमय-शंसिना कमलनिमीलनेन लीलया प्रतिपादितः।

उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥१२३॥

परः पर्यन्तभागोऽवधिर्यस्य, धाराऽधिरोहिकया तत्रैवोत्कर्षस्य विश्रान्तेः। उदाहरणम्—राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम्।

सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥५२२॥ (रु. का. अ. ७।९७)

---

**प्रबन्धा** अनुबन्धाः। स्वेदकृतकुङ्कुमभेदरूपभेदेनाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गलेखनेन प्रकाशितम्। विटसम्बन्धिनर्थेङ्गितस्य प्रतीयमानता ज्ञात्वेत्यादिना स्फुटैव। लीलापद्मनिमीलनरूपात् सामर्थ्यादाक्षिप्तस्य रात्रावागन्तव्यं त्वयेति प्रतीय-मानस्यापि **संकेतकालमनसं हसन्नेत्रार्पिताकूत**मित्युक्त्यैव निवेदितत्वान्न ध्वनिव्यवहारः। उभाभ्यां यथा (का. आ. २।२६३) मदर्पितदृशस्तस्या[95]गीतगोष्ठ्यामवर्धत। उद्दामराग-पिशुना च्छाया काऽपि मुखाम्बुजे॥ इत्यत्र 'मदर्पितदृश' इतीङ्गितं, 'छाया काऽपी'त्याकारः। इष्टाभिप्रायानुकूलप्रवृत्तिविशेषो भाव इति भावाख्यमलङ्कारान्तरं केचिदाहुः। (रु. का. अ.) तस्य च वाच्यप्रतीयमानरूपतया द्विभेदेऽस्मिन्नेवालङ्कारेऽन्तर्भावो द्रष्टव्यः।

विभज्यमानस्य स्वरूपतया सूक्ष्मत्वात्तदनन्तरं सारमाह—**उत्तरोत्तर**मिति। पूर्वपूर्वा-पेक्षया क्रमेणोत्तरोत्तरस्योत्कृष्टत्वे निरतिशयसर्वस्वायमानोत्कर्षशाली पर्यन्तविश्रान्तः पदार्थः सार इत्यन्वर्थं नाम। **राज्य** इत्यादि। सप्ताङ्गेऽपि राज्ये 'राष्ट्रात् सर्वं प्रवर्तते' (का. नी. सा. ४।५४) इत्युक्तत्वात्।[96] तदितरापेक्षया स्वामिनं प्रति वसुधायाः सारत्वम्।

---

95 अत्र 'त्वदर्पिते'ति प्रचलितकाव्यादर्शानुवादी पाठः 'क' पुस्तके।

96 'ईदृग्जनपदः शस्त' इत्यादि का. नी. सारीयश्लोकस्योत्तरार्धे। 'तं वर्धयेत् प्रयत्नेन तस्मात् सर्वं प्रवर्तते।' जनपदस्येति—सर्वकर्मणां योनित्वादिति जय-मङ्गलाकारः। अत्र 'भृगुणैर्वर्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये' इति का. नी. सा. ४।४८ द्र.।

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ।

युगपद् धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥१२४॥

इह यद्देशं कारणं तद्देशमेव कार्यमुत्पाद्यमानं दृष्टं यथा धूमादि । यत्र तु हेतुफलभूतयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनं सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः । उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअं ।

दन्तक्खअं कवोले वहुइ वेअणा सवत्तीणं ॥५२३॥ ( गा. स. वे. ६८१ )

एषा च विरोधबाधिनी, न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधिताया: प्रतिभासात् । विरोधे तु विरोधित्वमेकाश्रयनिष्ठमनुक्तमपि पर्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः । तथा चैवं निदर्शितम् ।

समाधिः सुकरं कार्यं कारणान्तरयोगतः ।

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्ध सम्यगाधीयते स समाधि र्नाम । उदाहरणम्—

---

एव वसुधाऽपेक्षया पुरस्थैत्यादिकमङ्गनाप्रकर्षपर्यवसायि । गुणपताकाप्रश्ने मूलदेवोऽप्याह 'सारं महिलारत्न स मिति (कु म)। अत एवा(209b)ङ्गनाविशेषणमनङ्गसर्वस्वमिति । भिन्ने "यद्देशमेव कारण तद्देशमेव कार्य दृष्टम् । न हि महानसस्थो वह्निः पर्वतदेशस्थ धूम जनयति । यदा त्वन्यदेशस्थ कारणमन्यदेशस्थ च कार्यमुपनिबध्यते तदोचितसङ्गति-निवृत्तेरयमलङ्कार" (अ स १२८ पृ)। तत्र हेतु—केनाप्यतिशयेनेति, अतिशय कारणस्य कारणान्तरतो विलक्षणता । जस्सेअ इत्यादि—यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् । दन्तक्षतं कपोले वध्वा वेदना सपत्नानाम् ॥ अत्र क्षत-वेदनाऽन्या अन्या च तद्दर्शनादीर्ष्यासमुत्थेति तयोरभेदाध्यवसाय इत्यतिशयोक्तिर्मूलम् । एवं यथा—(अ स. १६४ पृ) सा बाला वयमप्रगल्भवचस सा स्त्री वय कातरा. सा पीनोन्नतिमत्पयोधरयुग धत्ते सखेदा वयम् । सा कान्ता जघनस्थलेन गुरुणा गन्तु न शक्ता वय दोषैरन्यसमाश्रयैरपटवो जाता स्म इत्यद्भुतम् ॥ इत्यत्र बाल्यनिमित्तक-प्रागल्भवचनत्वमन्यत् अन्यच्च स्मरनिमित्तकमिति तयोरभेदाध्यवसाय इत्यतिशयोक्तिमूलत्व-मवगन्तव्यम् । अस्याश्च न विरोधमूलत्वम्, भिन्नाश्रयत्वेन तदपवादत्वात् (का. अ. सू. वृ ४।३।१२)। एवं विषमादिष्वपि द्रष्टव्यम् ।

समाधिरिति—असङ्गतिवैपरीत्यादस्य निर्देशः । "केनचिदारब्धस्य कार्यस्य सहकारि-

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥५२४॥ ( का. आ. २।२९७ )

**समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥१२५॥**

इदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत् तदा समम् । उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो[97] दत्तपत्रः स्मरस्य ।
जातं दैवात् सदृशमनयोः सङ्गतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥५२५॥

यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥५२६॥

---

कारणान्तरसम्बन्धात् सुकरत्वं सम्यगाधानात् समाधिः ।" (अ स. २०५ पृ.) 'सहकार्यन्तरसम्बन्धश्च विवक्षितपूर्वोऽन्यथा चेति द्विविधः । अत्रापि प्रत्येकं दैवादैवकृतत्वेनायं चतुर्धा' (स. क. आ. ३०७पृ.) । मानमित्यादि—दिष्ट्येत्यानन्दोक्तौ । (२१०a) उदीर्णमुद्गतं 'प्रणामान्तो मान' इति माननिराकरणे कार्ये प्रणतिरुपायः । तत्सौकर्यार्थं घनगर्जितस्य कारणान्तरस्य प्रक्षेपः । सौकर्यं चोपकारायेत्यादिना प्रकाशितं, तदियं दैवकृता सहायसम्पत्तिः । 'अविवक्षितपूर्वैव दैवकृता यथा ( कि. अ. २।५४ ) अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् । स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ अत्र भीमानुशासनोपक्रमकाल एव व्यासागमनस्य तदुपकाराय प्रक्षेप.' ( स. क. आ. ३०७ पृ. ) । एवं चिन्तितपूर्वोऽपि द्रष्टव्यः ।

**सम**मित्यन्वर्थं नाम । सम्यक् साम्यादस्य प्रस्तावः । योग्यतास्वरूपमाह—**इदमनयोः श्लाघ्यमिति** । एतच्चाभिरूपानभिरूपविषयत्वेन द्विविधमिति क्रमेणोदाहरणमाह **धातुरि**त्यादि—अत्राभिरूपस्यैव नायकयुगलस्य संघटनमुचितमुपात्तम् । द्वितीयं यथा **चित्र**मित्यादि—अत्रानभिरूपाणां निम्बानां काकाभिलाषानुरूप्यात् समत्वव्यपदेशः ।

---

97 'मनुपमो दत्त....' इति क्वचित् पाठः ।

क्वचिद् यदतिवैधर्म्यान्न श्लेषो घटनामियात्।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेद् ॥१२६॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।
क्रमेण च विरुद्धे यत् स एष विषमो मतः॥१२७॥

द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते, यच्च किञ्चिदारभमाणः कर्ता क्रियायाः गुणाद्यात् केवलमभीष्टं तत्फलं न लभेत यावदप्रार्थितमप्यनर्थं विषयमासादयेत्, तथा सत्यपि कार्यस्य कारणरूपानुकारे यत्तयोर्गुणौ च क्रिये च परस्परं विरुद्धतां भजतः, स समविपर्ययात्मा चतूरूपो विषमः। क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥५२७॥

(न सा च १६।२८)

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥५२८॥
सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥५२९॥

(न सा च ११६२)

आनन्दममन्दमिमं कुवलयदललोचने। ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥५३०॥

(रु का अ ८।४७)

अत्रानन्ददानं शरीरतापेन विरुध्यते। एवम्—

---

क्वचिदिति समवैधर्म्यादत्र लक्षणम्। श्लेषोऽत्र संयोगः। अयं चतुर्धा। शिरीषादित्यादि—कुकूलं तुषाग्निः। सिंहिकेत्यादि—सिंहिकासुतः सिंहो राहुश्च। अत्र न परं शशेनात्मरक्षा समासादिता यावदेव स्वयमेवाधिगतमहाबाधः। आश्रय-बाधनमाश्रयणक्रियायाश्च चकारेणानर्थावरप्रापिकाऽऽश्रयणक्रिया। 'तीर्थान्तरेषु मलपङ्कमयी विहाय पुण्यां तनुं तनुभृतः प्रभवं लभन्ते। वाराणसि त्वयि तु मुक्तकलेवराणां लाभो (२१०b)ऽस्तु मूलमपि शात्मपुनर्भवाय॥ (अ स १६६५)। अत्रानर्थोत्पत्तिर्व्याज स्तुतिपर्यवसायिनीति सङ्कीर्णता। सद्य इत्यादि—अत्र कृष्णवर्णात् शुक्लवर्णस्योत्पत्तिः।

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमं सकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥५३१॥
( शि. पा. व. १३।४० )

इत्यादावपि विषमत्वं यथायोगमनुसर्तव्यम् ।

महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥१२८॥

आश्रितमाधेयम्, आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यदधिकतरतां भजतस्तदिदं द्विविधमधिकं नाम । क्रमेणोदाहरणम्—

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥५३२॥ ( का.श्रा. २।२१७ )

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥५३३॥
( शि. पा. व. १।२३ )

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥१२९॥

निकृतिपरमपि विपक्षं साक्षान्निरसितुमसमर्थेन केनापि यत्तमेव प्रतिपक्षमुत्कर्षयितुं तदीयस्य तिरस्करणं, तदनीकप्रतिनिधितुल्यत्वात्

---

आनन्दमित्यादि—अत्र कारणगतयोः क्रिययोर्विरोधः । एवं विपुलेनेत्यादि—अत्र हीनेन गुरु कार्यं कृतमिति विषमत्वम् । एवमधिकोऽपि यत्र स्वल्पमपि प्रयोजनं न विदधाति तदपि विषमं यथा—(ह-सं. ७० पृ.) किं ददातु किमश्नातु भर्तव्यभरणाकुलः । उदारमतिराप्तोऽपि जगत्त्रितयसाम्रके ॥ इति ।

महतोरित्यादि—वैषम्यप्रस्तावात्तदनन्तरमस्य लक्षणम् । महतोराधेयाधारयोर्विषये यथाक्रममाधाराधेयौ तनुत्वेऽपि यन्महीयांसौ स्यातां तदधिकं नामालङ्कार इति योजना । प्रयोजनञ्च वर्णनीयप्रकर्षः । तदाधारस्य तनोरप्याधिक्यं यथा अहो विशालमित्यादि—माति वर्तते । अत्राधेयस्य यशसो वैपुल्येऽपि तदपेक्षया तनोरपि भुवनत्रितयोदरस्याधारस्य महत्त्वमुक्तम्, अन्यथा मानस्यासम्भवात् । तदेतदाधिक्यमेव चारुत्वहेतुः । युगान्तेत्यादि—अत्र कैटभारितनोराधारस्य वैपुल्येऽपि तदपेक्षया तन्वीनामपि मुदां यन्महत्त्वमुक्तं तचाहृताऽऽस्पदम् ।

प्रत्यनीकमभिधीयते। यथाऽनीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः। उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः॥५३४॥

यथा वा—यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते॥५३५॥

( शि. पा. व. १४।७८ )

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात्।

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते।
निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम्॥१३०॥

सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं तद्द्वारेण किञ्चिद् वस्तु केनचिदिह यद्वस्तुस्थित्यैव[98] बलीयस्तया तिरोधीयते तन्मीलितमिति द्विधा स्मरन्ति। क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥५३६॥

अत्र दृक्तरलताऽऽदिकमङ्गकस्य लिङ्गं स्वाभाविकं साधारणं च, मदोदयेन तत्राप्येतस्य दर्शनात्।

---

प्रतिपक्षमित्यभिहिताश्रयप्रस्तावादस्य सङ्गतिः। निकृतिरपकारः। अन्वर्थतामाह—अनीकेत्यादि—प्रतिपक्षगतत्वेन बलवत्त्वख्यापनं प्रयोजनम्। त्वमित्यादि—अत्र त्वत्सम्बन्धिनीं सरस्तापयतीति तद्विषये स्मरस्याबलत्वं ख्याप्यते। यस्येत्यादि—'अत्र राहोर्भग-(२।१२)वान् कृष्णो बलवान् प्रतिपक्षः, तत्सम्बन्धि वक्त्रं, तेनेन्दोः सादृश्यमुखेन सम्बन्धः। तस्य दुर्बलस्य तिरस्काराद् भगवतः प्रकर्षोऽवगम्यते।' (प्र.स. २०७ पृ.)

समेनेति—तिरस्कारप्रस्तावादस्य सङ्गतिः। वस्तुना वस्त्वन्तरतिरोधानं मीलितमित्यन्वर्थं नाम। न चायं सामान्यालङ्कारः। "तथा हि सहजेनापाङ्गतरल इत्यादावङ्गत्वेन मदोदयस्य न

---

98 'यत्किञ्चित् केनचिद्वस्तु' इत्यादि पाठान्तरम्।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो वत भियां न बुधोऽप्यभिज्ञः ॥५३७॥

अत्र तु सामर्थ्यावसितस्य शैत्यस्यागन्तुकतया तत्प्रभवयोरपि कम्पपुलकयो-स्ताद्रूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात् ।

स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।
विशेषणतया यत्र वस्तु सैकावली द्विधा ॥१३१॥

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैरेकावलीति भण्यते । क्रमेणोदाहरणम्—

"पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासः कुसुमायुधस्य ॥
( न सा. च ११२२ )

---

धर्मसाम्यादैकात्म्यमतिशयाया विवक्षितमपि नासादितम् । तत्स्वभावमिद वस्तु, अत एव बलीयस्तया तस्य तिरोधानहेतु । सामान्येन तु यत्रैकात्म्य तदसदेव, प्रस्तुततिरोधानाति-शयोक्त्या विवक्षितमिति सिद्धोऽस्य ततो व्यतिरेक" (रु स ७० पृ)। तेनात्र रकृतारल्यादिना स्वाभाविकेन चिह्नेन मदोदयो दैवकृता बाधा विधीयत इति मीलितम् । आगन्तुकेन यथा **ये कन्दरास्वित्यादि** । त्वत्पातेति—पात पातकम् । अत्र हिमाद्रिकन्दरनिवाससामर्थ्य-प्रतिपन्नेन शैत्येन समुद्भावितावागन्तुकौ । कम्परोमाञ्चयोरुभयकृतयोस्तिरोधायकत्वादेव च मीलितव्यपदेश ।

**स्थाप्यत** इति मीलितवैपरीत्यादस्य सङ्गति । **यथापूर्व**मिति पूर्ववदव्ययी-भाव । तेन पूर्वं पूर्वं प्रति यत्र परम्पर विशेषणत्वेन स्थाप्यते स एकावली-ग्रथनन्यायादेकावल्याख्योऽलङ्कार । तत्र विशेषणत्व स्थापनेन वा निवर्तनेन वेति द्विधेति । अत्र स्थापनेन यथा **पुराणि यस्यामित्यादि** । **पुराणि** गृहाणि । अत्र **वराङ्गना** पुराणा विशेषण स्थापनीयत्वेन स्थितम् । एव वराङ्गनाना रूपमित्यादि ज्ञेयम् ।

---

99 गृहाणीति मुद्रितपुस्तके पाठ । उज्जयिनीवर्णनमत्र प्रकरणम् । पुराणी-त्यन्त पुराण्यस्यर्थं नामैकदेशग्रहणे नामग्रहणमिति कृत्वा वा । एवमप्यलङ्कार-सर्वस्वे गृहीत पाठ ।

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥५३९॥

(भ का २।१९)

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपं, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते। उत्तरत्न निषेधेऽप्येवमेव योज्यम्।

यथाऽनुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः।

स्मरणम्

यः पदार्थः केनचिदाकारेण नियतो यदाकदाचिदनुभूतोऽभूत् स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत्तथैव स्मर्यते तद् भवेत् स्मरणम्।

उदाहरणम्—

निम्ननाभिविवरेषु यदम्भः प्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहरुतैः सुरकन्याः स्मारिताः सुरतकण्ठरुतानाम् ॥५४०॥

यथा वा—

करजुअगहिअजसोआत्थणमुहविणिवेसिआहरउडस्स।
संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चं ॥५४१॥

(गा स. वे ६७४)

---

निवर्तनेन यथा न तज्जलमित्यादि—अत्र जलस्य सुचारुपङ्कजत्वं विशेषण प्रतिषेधत्वेन निबद्धम्। एवं पङ्कजानां लीनषट्पदत्वमित्या(211b)दि।

*यथाऽनुभवमिति*—दृष्ट इति दर्शिरत्नोपलब्धिमात्रवचन। तत्सदृश इति सदृशानुभवात् सदृशस्य वस्तुन स्मृति स्मरण नामालङ्कार.। "अविनाभावाभावादिद नानुमानम्। सादृश्य विना तु स्मृतिर्नायमलङ्कारो यथा—(र. व १३।३५) अत्रानुगोद मृगयानिवृत्तस्तरङ्गवातेन विनीतखेद। रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्त ॥ प्रेयसोऽलङ्कारस्य तु सादृश्यव्यतिरिक्तनिमित्तोपस्थापिता स्मृतिर्विषय." (अ. स. ४१-४२ पृ.)। यथा—"अहो कोपेऽपि कान्त मुखम्" इति (५३ श्लो॰)। निम्नेत्यादि—स्मारिता इति घटादिषु पठितस्य स्मरतेर्मित्वेऽपि 'मितां ह्रस्व' (पा ६।४।९२) इति न ह्रस्व.। तद्विभाषा वति (६।४।९२) व्यवस्थितविभाषायास्तत्रानुवृत्ताया आश्रयणात्। करजुअ इत्यादि—करयुगगृहीत

**भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥१३२॥**

तदित्यन्यदप्राकरणिकं निर्दिश्यते[100]। तेन समानस्यार्थादिह प्राकरणिकस्य तथाविधस्य दृष्टौ सत्यां यदप्राकरणिकतया संवेदनं स भ्रान्तिमान्। न चैष रूपकं प्रथमा वाऽतिशयोक्तिः, तत्र वस्तुतो भ्रमस्याभावात्, इह चार्थानुगमेन संज्ञायाः प्रवृत्तेस्तस्य स्पष्टमेव प्रतिपन्नत्वात्।

उदाहरणम्—कपाले मार्जारः पय इति करॉल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥५४२॥

( स. क. आ. ३।३८ ; सु. र. को. ६०५ )

**आक्षेप उपमानस्य प्रतीपमुपमेयता।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥१३३॥**

---

यशोदास्तनमुखविनिवेशिताधरपुटस्य। संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥ अत्र भगवतो देहदेशान्तरानुभूतार्थस्मरणं सुप्रतिबुद्धस्येव पूर्वयुगशतानामर्थानाम्। अत एव तदनुभावरोमाञ्चस्य नमस्कारः।

**भ्रान्तिमानि**ति भ्रान्तेः स्मृतिपूर्वकत्वात्तदनन्तरमस्य सङ्गतिः। अतस्मिन् तदिति निश्चयो भ्रान्तिश्चित्तधर्मः, स विद्यते यस्मिन् भणितिप्रकारे स भ्रान्तिमानिति। उत्तरकालभाविना सम्यग्ज्ञानेन यत्र बाधस्तदेव विपर्ययज्ञानम्, अतस्तद्रूपत्वा-च्छुक्तिकाऽऽदौ रजतादिबुद्धेरिव भ्रान्तेर्मुख्यत्वमेव, न तु गौणत्वमित्युक्तमेव। **तुल्यदर्शन** इत्यनेन गाढमर्मप्रहारादिजन्यभ्रान्तिरस्य न विषयः। यथा ( अ. मं. ५८ पृः ) दामोदर-कराघातव्याकुलीकृतचेतसा। दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ इति। सादृश्यहेतुकाऽपि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते, न तु स्वरसोत्थापिता शुक्तिकारजतवदिति। यथा **कपाल** इत्यादि—कपालं घटादेः शकलं, कपोल इत्यपि पाठः। **विप्लवयति** विद्रवयति। अत्र प्रभामत्तस्य शशिनः करेषु मार्जारादीनां पयःप्रभृतिरूप-भ्रान्तिः कविप्रतिभोत्थापितैव। **प्रथमाऽतिशयोक्तिभेदेऽभेदरूपा**।

**आक्षेप** इति—सादृश्यप्रस्तावादस्य प्रस्तावः। 'उपमेयस्यैवोपमानमारोढुमन-

---

100 'तेन समानम् अर्थादिह प्राकरणिकम् आश्रीयते। तस्य तथाविधस्य दृष्टौ'-इति वाक्यद्वयविशिष्टः पाठः क्वचित्पुस्तकेषूपलभ्यते।

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थक्येन यदुपमानमाक्षिप्यते, यदपि च तस्यैवोपमानतया प्रसिद्धस्योपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तदुपमेयस्योपमानं प्रति प्रतिकूलवर्तित्वादुभयरूपं प्रतीपम्।

क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव ! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥५४३॥

ए एहि दाव सुन्दरि ! कण्णं दाऊण सुणसु वअणिज्जं।
तुज्झ मुहेण किसोअरि ! चन्दो उपमिज्जइ जणेण ॥५४४॥

(गा. स. श. ६७२)

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वादुपमित्यनिष्पत्तया 'वअणिज्जं' इति वचनीयपदाभिव्यङ्ग्यया निरस्कारः। क्वचित्तु निष्पन्नैवोप-

---

सामर्थ्योदुपमानस्य चन्द्रादेः वैमर्थक्येनाक्षेप आलोचनं क्रियते तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीप इति व्यपदेशः। यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतिविष्ठापयिषयाऽनादरादुपमानत्वं कल्प्यते तत् पूर्वोक्तिगत्या द्वितीयं प्रतीपम् (अ. स. २३० पृ.)। तथाचोक्तं वामनेन 'उपमानेनाक्षेपश्चाक्षेप' इति (का. अ. सू. वृ. ४।३।२७)। क्रमेणोदाहरति लावण्येति—अत्र लावण्यनिदानत्वादित्थं वोढुं वर्णनीयो राजैव समर्थ इतीन्दुप्रभृतीनामुपमानानां कैमर्थक्यनिबन्धन आक्षेपः[101]। अत्र यद्यपि यथासंख्यत्वमप्यस्ति (अ.स. २०८पृ.) तथापि तदपेक्षयाऽऽक्षेपरूपैव विच्छित्तिश्चारुतरेत्युदाहृतवान्। ए एहीत्यादि—अभ्येहि तावत् सुन्दरि कर्णं दत्वा शृणुष्व वचनीयम्। तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन॥ अयीति सम्बोधनमभिमुखीकरणाय। 'अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम्। वदनस्य चोपमानत्वविवक्षाऽत्र

---

101 कोऽर्थो यस्य स किमर्थकः शैषिकः कप्। तस्य भावः। कैमर्थ्येनेत्यन्येषां पाठो मूले। कैमर्थक्यं प्रसाधनमिति श्रीविद्याचक्रवर्ती। यथासंख्यत्वमस्तीति टीकायां (यदुपमान.........यदपि च...उपमेयभावः कल्प्यत इति) वृत्तिरेव बीजम्। परं नात्र पारिभाषिक'यथासंख्य'पदप्रत्यायितार्थेन किमपि वैचित्र्यं येनालङ्कारः स्यात्।

मितिक्रियाऽनादरनिबन्धनम्। यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे !

सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥५४५॥

( ऊ. ना. अ. ८।८७ )

इत्युपमेयीकरणमेवोत्पलानामनादरः।

अनयैव रीत्या यदसामान्यगुणयोगान्नोपमानभावमप्यनुभूतपूर्वं सहते, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल ! मास्म तात ! दृप्यः।

ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥५४६॥

अत्र हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धम्।

---

प्रयोजिका। क्वचित् पुनर्निष्पन्नमेवौपम्यमनादरकारणम्। यथा ( अ. स. २०६ पृ. ) गर्वमित्यादि—असंवाह्यं गुरुतरं, भद्र इति वाच्यं चिन्त्यम्[102]। 'असोत्कर्षभाज उपमानस्य प्रादुर्भाव एव न्यक्कारकारणम्' ( अ. स. २०६ पृ. )। अनयैव रीत्येति—"अनेन बहुप्रकारेण वैचित्र्यं सम्यगदर्शितं तेनोपमानस्योपमेयताऽभिधानं विनाऽर्थकल्पनयाऽस्य प्रतिपादनमपि [103]प्रतीपमू। यथा वदनमिदं सममिन्दोः सुन्दरमपि ते इत्यादि' ( रु. स. ७१ पृ. )। तेयकल्पना प्रतीपमेव यथा अहमित्यादि—गुरुः प्रधानं, सुदारुणानां सम्प्रयुक्तदोषत्वादसम्भाव्यमानोपमानत्वमप्युपमेयत्वेन[104] निबद्धम्।

---

102 'भद्र इलस मुग्ध' इति पाठे वाच्यं सुस्थितं स्यात्। स च पाठः कैश्चिद् गृहीतः। *'मुग्धः सुन्दरमूढयो'रिति।*

103 अत्रादर्शपुस्तकयोर्द्वयोः पाठस्तुच्छिन्नः। शुद्धपाठस्त्वधोदर्शितो रुचककृतसङ्केत उपलभ्यते यस्मादयमंशः सङ्कलितो यथेतरत्र बहुत्र। 'तेनोपमानस्योपमेयतोऽनुकम्पत्वमात्रप्रतिपादनमपि प्रतीपम्। यथा—वदनमिदं सममिन्दोः सुन्दरमपि ते कियच्चिरं न भवेत्। मलिनाधः कपोलौ लोचनसलिलं हि कज्जलवत्॥' इति ( रु. स. ७१ पृ. )।

104 "प्रतिपादनमपी"त्यादि'रसम्भाव्यमानोपमानत्व'मित्यन्तः सन्दर्भः 'क' पुस्तके नास्ति।

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं वध्यते योगात्तत् सामान्यमिति स्मृतम् ॥१३४॥

अताद्दशमपि ताद्दशतया विवक्षितं यदप्रस्तुतपदार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत् समानगुणसम्बन्धात् सामान्यम्। उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसरिकाः ॥५४७॥
( का. अ. सू. वृ. ४।३।१० )

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः । अत एव पृथग्भावेन न तयोरुपलक्षणम् । यथा वा—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सलीलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥५४८॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितमुत्सहते, प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात् ।

---

प्रस्तुतस्येति—गुणाः शुक्लादिधर्माः । अपरित्यक्तनिजगुणमेवेति तद्गुणादस्य विशेषं दर्शयति । अत्रैकस्य स्वगुणपरिहारात्तदेकात्मता । भेदानध्यवसायादेकरूपत्वं 'समासकृत्तद्धितेषु सम्बन्धोऽभिधाननिमित्त'मिति[105] समानत्वसम्बन्धात् सामान्यम्। न चेदमपह्नुतिः किञ्चिन्निषिध्य कस्यचिदप्रतिष्ठापनात् । मलयजेत्यादि—सिततरदन्तपत्रं शङ्खतादङ्कः । अत्र मलयजरसविलेपना-(२१३२)दीना[106] चन्द्रप्रभया महाविभाव्यता गता इत्यादि भेदप्रतीतिर्दर्शिता । यथा वा वेत्रत्वचेत्यादि । पूर्वोदाहरणाद्विशेष दर्शयति प्रतीतेश्चेति । न हि ज्ञानमज्ञानं भवतीति' ( ह. स. ७१ पृ. ) ।

---

१०५ एवञ्च चतुष्टये कातन्त्रीयमतानुवादि । पाणिनीये भाष्ये 'परार्थाभिधानं वृत्तिः' 'इमे तर्ह्येकार्थीभावकृतविशेषाः सङ्ख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणम्' इत्यादिना समर्थसूत्रभाष्ये प्रपञ्चिताः ।

१०६ महाविभाव्यता गतेत्यादि 'ख' पुस्तके पाठः । महाविभाव्य आवितेत्यादि 'क' पुस्तके पाठः । अनियतवृत्तपरिमाणत्वात् श्लोकेऽस्मिन् पादाकुलकं छन्दः । अत्र प्रतिपादमष्टाविंशतिर्मात्राः ।

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥१३५॥
अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणञ्चेति विशेषस्त्रिविधः स्मृतः ॥१३६॥

प्रसिद्धाधारपरिहारेण यदाधेयस्य विशिष्टा स्थितिरभिधीयते स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥५४९॥

( ह. का. अ. ६।६ )

एकमपि वस्तु यदेकेनैव स्वभावेन युगपदनेकत्र वर्तते स द्वितीयः । उदाहरणम्—

सा वसइ तुज्झ हिअए सा चिअ अच्छीसु सा अ वअणेसु ।
अम्हारिसाण सुन्दर ! ओआसो कत्थ पावाणं ॥५५०॥

( गा. स. वे ६४७ )

यदपि च किञ्चिद् रभसेनारभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते सोऽप्यपरो विशेषः । उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥५५१॥

यथा वा—गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वत किं न मे हृतम् ॥५५२॥

( र. व. ८।६७ )

---

**विना** प्रसिद्धमिति—इहाधारमन्तरेणाधेयं न वर्तत इति यत् परिहारेणाधेयस्योपनिबन्धः स एको विशेषालङ्कारः । **दिवमित्यादि**—अत्र कवीनामाधाराणामभावेऽप्याधेयानां गिरामवस्थितिः । **रमयन्तीत्यत्र** भावो विपयार्थ इति विषयत्वेन तेषामाधारत्वात् । **द्वितीयो** यथा—**सा वसइ** इत्यादि । सा वसति तव हृदये सैवाक्षिषु (?) सा च श्रवणयोः । अस्मादृशानां सुन्दर अवकाशः कुत्र पापानाम् ॥ अत्रैकस्या एव योषितो हृदयादौ युगपदवस्थानम् । **स्फुरदित्यादि**—अत्र रभसेन त्वां सृजतो विधेस्तेनैव प्रयत्नेनासम्भाव्यमानं भुवि मनोभुवः सवितुर्बृहस्पतेश्च कारणं निबद्धमिति लोकोत्तरवस्तु-

सर्वत्र चैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विनाऽलङ्कार्यालङ्करणत्वायोगात्। अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥ इति।

( भा. का. अ. २।८५ )

स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥१३७॥

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणया स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव यत् समासादयति स तद्गुणः, तस्याप्रकृतस्य गुणोऽस्मास्तीति। उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचं रुचा स्वामानिन्यिरे वंशकरीरनीलैः ॥५५३॥

( शि. पा. व. ४।१४ )

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता।

---

सम्पादनरूपोऽयं विशेषः। संहारे यथा—गृह्णिणीत्यादि। मिथः सखी रहस्यसखी। अर्तकामेव नायिकां हत्वा मृत्युना गृहिण्यादिकमनेकप्रकारं वस्तु हृतमिति विशेषोक्तिः। 'अतिशयोक्तिश्च सर्वप्राणितमित्युक्तमेव।[107]

स्वमुत्सृज्येति—'यत्र परिमितगुणस्य वस्तुनः समीपवर्तिप्रकृष्टगुणेन स्वीकरणं तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा। न चेदं मीलितम्। तत्र हि प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते, इह त्वपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्य-(213b)नयोर्भेदात्।' (अ. स. २१३ पृ.)। विभिन्नेत्यादि—गरुडाग्रजोऽरुणः। रथे साधवः रथ्याः, सूर्यस्येत्युक्तेरश्वप्रतीतिः। करीरमङ्कुरः, वंशपदसमभिव्याहारात्तु तत्सम्बन्धोऽत्रोऽधिकृतः। स एवात्र नीलः प्रतीयते। अत्र रविरथाश्वानामरुणवर्णस्वीकारः, तथापि गारुत्मतमणिप्रभास्वीकार इति तद्गुणत्वम्।

---

107 'अत्र सैषेत्युद्धृताया भामहकारिकाया विवरणं टीकायामपेक्ष्यते।

तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः ।

यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायामिदं न्यूनगुणं न गृह्णीयात् तदा भवेदतद्गुणो नाम । उदाहरणम्—

धवलो सि जइ वि सुन्दर ! तहवि तुए मज्झ रञ्जिअं हिअअं ।
राअभरिए वि हिअए सुहअ ! णिहित्तो ण रत्तोसि ॥५५४॥

( गा. स. ७।६५ )

अत्रातिरिक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः । किञ्च तदित्यप्रकृतमस्येति च प्रकृतमत्र निर्दिश्यते । तेन यदप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् । यथा

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥५५५॥ (सुरभे.)

---

तद्गुणप्रस्तावात्तद्विपर्ययरूपमतद्गुणं कथयति—**तद्रूपे**ति । "इह न्यूनगुणस्योत्कृष्टगुणपदार्थस्वीकारः प्रत्यासत्त्या न्याय्यः । यत् पुनरुत्कृष्टगुणसन्निधानेन योग्यतायामपि तद्रूपस्याननुहरणं न्यूनगुणेनाननुवर्तनं भवति सोऽतद्गुणः, तस्योत्कृष्टस्य गुणा अस्मिन् सन्ती"ति ( अ. स. २१४ पृ.) । **धवलोऽसी**ति—'धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् । रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥ धवलो धुरन्धरवृषः कामुकश्च । रञ्जितं जनिताभिष्वङ्गं रागप्रसक्तिरपि" ( ठ. म. ७१ पृ. ) । अत्र पूर्वार्धे विरोधो न तूत्तरत्र[108] भिन्नाधारतयैव रक्तारक्तयोः प्रतीतेः । तेनातिरक्तहृदयसम्पर्कात् कामुकस्य धवलपदवाच्यस्य प्राप्तमपि रक्तत्वं निष्पन्नमित्यतद्गुणः । '**किञ्चे**ति—स्फीततमोऽपि गुणो गुणान्तरसम्पर्केण किञ्चिदन्यथात्वं गतो दृष्टः । यदा तु न गच्छति तदाऽप्यतद्गुण इति प्रकारान्तराश्रयणम्' (अ स. ७१-७२ पृ.) । **गाङ्गमि**ति—अत्राप्रकृतस्य गङ्गायमुनाजलसम्पर्केऽपि हंसस्य प्रकृतस्य न तद्रूपतेत्ययमप्यतद्गुणः । अङ्गेस्वमोघागन्तणे[109] । **सैव** नान्यादृशी(2140)या न **चीयत** इत्यध्याहृतेन यच्छब्देन योजना ।

---

108 उत्तरार्धे त्वतद्गुण एवालङ्कारो यदाहुः प्रदीपकृतो विवेकग्रन्थमनुवदन्तः "अत्रातिरिक्ते मनसि धृतस्याप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणमिति । कामुकस्य 'धवल' पदवाच्यस्येति द्वावेवार्थौ सूचितौ । वृषतुल्यत्वाच्च त्वमेतं ममानुरागं नोपलभसे' इति 'धवल'पदोपचरितवाच्यस्येति च ।" (Cf. Transferred epithet).

109 एवं प्राचीन का. प्र. मा. पाठः । 'गाङ्गमम्बि'ति प्रायिकः पाठः ।

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥१३९॥**

**तथैव यद् विधीयेत स व्याघात इति स्मृतः ।**

**येनोपायेन यदेकेनोपकल्पितं तस्यान्येन विजिगीषुतया तदुपायकमेव यदन्यथाकरणं स साधितवस्तुव्याहतिहेतुत्वाद् व्याघातः ।** उदाहरणम्—

**दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**

**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥५५६॥**

( वि. शा. भ. ११४ )

**सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥१४०॥**

**एतेषां समनन्तरमेवोक्तस्वरूपाणामलङ्काराणां यथायोगमन्योन्यनिरपेक्षतया**

---

यद्यथेति—'कश्चिदुपायविशेषमवलम्ब्य केनचिन्निष्पादित तत्ततोऽन्येन केनचित् तत्प्रतिद्वन्द्विनोपायविशेषेण यदन्यथा क्रियते स ह्यनिष्पादित वस्तुव्याहतिहेतुत्वाद्व्याघाताख्योऽलङ्कार-' ( अ. स. १७३ पृ. ) । दृशेत्यादि—''अत्र हरिलक्षणोपायेन स्मरस्य हरेण दाहविषयत्व निष्पादितम् । मृगनयनाऽऽदिभि पुनस्तेनैवोपायेन तस्य जीवितस्य क्रियते, तच्च दाहविषयत्वस्य प्रतिपक्षभूतमिति व्याख्यातव्यम् । एतच्च व्यतिरेकनिमित्तत्वेनोक्तम् । विरूपाक्षस्येति वामलोचना इति च व्यतिरेकगर्भावेव वाचकौ । जयिनीरिति व्यतिरेकोक्ति.'[110] ( अ. म १७४-१७५पृः ) ।

अधुना सर्वेषामलङ्काराणा सश्लेषसमुत्थापकमलङ्कारद्वयमुच्यते । सेष्टेति—'एतेषामिति—शब्दार्थवर्त्यलङ्काराणा, न सर्वेषामेव प्रागुक्तानामलङ्काराणामपि तु केषाञ्चित्तत्रापि तेषा मध्ये क्वचिद्द्वयो क्वचित्त्रिचतुर्णामित्याह यथायोगमिति । संसृष्टिश्च विषयभेदेन द्विरूपाया अपि 'संसृष्ट्या चैकरूपये'ति ( १३० पृ. ) प्रागुक्त' न विरुध्यते,

110　काव्यप्रकाशवृत्तिग्रन्थस्य सङ्गतत्वादत्तैतद्विषये तदसङ्गतिर्मृग्या । रुचककृतसङ्केत मङ्गेतायमानस्तूष्णीमास्ते । साहित्यचूडामणिरपि ''व्यतिरेकोऽप्यत्र निमित्त'' यतो विरूपाक्षस्य चारुलोचना इति तद्गर्भौ वाचक'मित्यनुवदति । परमानन्दचक्रवर्ती स्वकृतायां का. प्र. विस्तारिकाटीकायामित्थ समाधत्ते । 'यद्यपि विरूपाक्षवामलोचनादृशोर्नैक्य तथा च न व्याघातस्तथाप्येकजातीयत्वादैक्यं विवक्षित्वेदमुपपादनीयमिति ।' वस्तुतस्तु सादृश्यविवक्षायामपि व्यतिरेकस्य प्राचीनैर्दण्डिप्रभृतिभि परवर्तिभो रुचकादिभिरपि सद्भावस्वीकृतेरय पक्षो न नितान्तमनादेयः ।

यदिह शब्दभाग एवार्थविषय एवोभयत्रापि वा सहावस्थान सैकार्थसमवायस्वभावा ससृष्टि.।

तत्र शब्दालङ्कारससृष्टि.—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥५५७॥

(शि पा व ६।१४)

अर्थालङ्कारससृष्टि.—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जन नभ.।
असत्पुरुषसेवेव दृष्टिर्विफलता गता ॥ (४ १ श्लो)

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ ससृष्टि प्रयोजयत, उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे।

शब्दार्थालङ्कारयोस्तु ससृष्टि.—

*सो णत्थि एत्थ गामे जो एअ महमहन्तलाअण्ण।*
*तरुणाण हिअअलुण्ठि परिसक्कन्तीं णिवारेइ* ॥५५८॥ (गा श ते ६१७)

---

नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। सङ्करस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र तिरूपतया व्यवहार' (ह स ७२पृ)। ससृष्टि. सयोग सम्बन्ध इत्यनर्थान्तरम्। सम्बन्धश्चापरार्जनयो। एवञ्च मिथोऽनपेक्षयोरेव घटत इत्यत आह—एकार्थेति। स्वपरसयत् सहैवोपलभ्यमानत्वादेकस्मिन् धर्मे समवायलक्षण सम्बन्ध। यथा पाद्यालङ्काराणा सौवर्णमणिमयप्रभृतीना पृथक् चारुताहेतुत्वेऽपि सघटनाकृत चारुताऽन्तरमुपजायते (214b) तद्वत् प्रकृताप्रकृतालङ्काराणा सयोजने चारुत्वान्तरमुपलभ्यत इतीदमलङ्कारान्तरमेव न त्वलङ्कारा पृथक्त्वपर्यवसायिन' इति (अ स २४१ ४२ पृ)। तदुक्तम् (रसार्णवालङ्कारे २)—परोऽपि भूषा ससृष्टिर्वर्णालङ्कारयोगत। रचिता रत्नमालेव पृथगेवावभासते॥ 'अलङ्कारान्तरत्वे च स्फुटावगमे भेदस्योत्कटत्वमस्फुटावगमे भेदस्यानुत्कटत्वम्। पूर्वत्र ससृष्टिरुत्तरत्र सङ्कर.। अतश्च तिलतण्डुलन्याय क्षीरनीरन्यायश्च यथाक्रममनयोर्द्रष्टव्य (अ स २४७-२४८ पृ)। कुसुमेत्यादि—अलकवल्लोले दृशौ यस्या। 'अत्रानुप्रासयमकयोर्विजातीययो ससृष्टि। अत्रैवालकलोलकलोल इति तथा कलोलकलोल इति सजातीययोर्यमकयो ससृष्टि' (अ स २४५ पृ)। लिम्पतीवेत्यादि—अत्र पूर्वार्ध उत्प्रेक्षा उत्तरार्ध उपमेति विजातीययो ससृष्टि सो णत्थीत्यादि। स नास्त्यत्र ग्रामे य एता

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात्।

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः।

एत एव तु यद्यात्मन्यनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति स एषां सङ्कीर्यमाणस्वरूपत्वात् सङ्करः। उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताडङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥५५९॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्येतयोरङ्गाङ्गिभावः। यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिप्रेङ्खत्तारापरिकरकपालाङ्कितलले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥५६०॥

---

सर्वत्र प्रसरल्लावण्याम्। तरुणानां हृदयलुण्ठं परिष्वक्रमाणा निवारयति ॥ एता हृदयलुण्ठमिति रूपकम्। णत्थि एत्थ इति पूर्वार्धेऽनुप्रास उत्तरार्धं तु रूपकमिति कथमनयोः संसृष्टिरिति, अत आह संसर्गश्चेति। एकत्र छन्दसि गाथारूपे।

अविश्रान्तीति—स्वातन्त्र्येणात्मलाभमनास्वादयन्त इत्यर्थः। एतेन संसृष्टेर्वैलक्षण्यं दर्शयति। सङ्कीर्यमाणस्वरूपत्वादित्यनेनान्वर्थतामाह—आत्त इत्यादि। ताटङ्कः कर्णाभरणभेदः। लुप्तायामिति 'लुप्लृ छेदने' छिन्नायामित्यर्थः। तुलाकोटिर्नूपुरः। गुञ्जा रक्तिका। हारो मुक्ताहारः। भ्रान्तिम-(२१५२)तेति भ्रान्तिमदलङ्कारेण। अत्र बिम्बोष्ठगतशोणत्वाकान्तिनिबन्धना मुक्ताहारे गुञ्जाहारभ्रान्तिरिति तद्गुणालङ्कारो भ्रान्तिमतः समुत्थापकः। स च समुत्थितः समुत्थापकस्य तद्गुणस्य चमत्कारितानिबन्धनमित्यङ्गाङ्गिभावः। न केवलं द्वयोरेवालङ्कारयोर्यावद्बहूनामप्येवं सङ्करो भवतीत्युदाहरति जटाभिरित्यादि—लक्षणे तृतीया। "कराः रश्मयः, करश्च पाणिः। व्यापत्तिर्निधनं, वैराग्यं लौहित्यापगमो विषयवैतृष्ण्यञ्च।" (ह. सं ५२ पृ.)। भस्मनेवापाण्डुः।

उपमा रूपकमुत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववदङ्गाङ्गितया प्रतीयन्ते। कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्करूपमक्षवलयमेव मुख्यतयाऽवगम्यते। तस्यैव च करग्रहणयोग्यतया सार्वत्रिकी प्रसिद्धिः। श्लेषच्छायया तु कलङ्कस्य करधारणमसदेव प्रत्यासत्त्योपचर्य योज्यते, शशाङ्केन कलङ्कस्य मूर्त्यै योद्वहनात्। कलङ्कोऽक्षवलयमिवेति तूपमायां कलङ्कस्योत्कृष्टतया प्रतिपत्तिः। न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्।

एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि दृश्यते। यथा—

राजति तटीयमभिहतदानवरासातिपातिसारावनदा।

गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥५६१॥

(रु. वि. ५।१३७)

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे।

---

चत्वारोऽत्र पूर्ववदिति—"तथा ह्युपमा श्लेषस्योत्थापकत्वेनोपकारिणी, श्लेषोऽपि तथैव रूपकोत्प्रेक्षयोः, तैस्तु समस्तैः साक्षात् पारम्पर्येण च यथासम्भवमुपमोपकृतायाः एव तस्याः सचेतसामतिशयेन चमत्कृतिहेतुत्वात्। मुख्येऽपीति—उपमापक्षे कलङ्क उपचार एवेति, न च तदाश्रयणं युक्तं, तस्यागतिकगतित्वात्" (रु. सं. ७२ पृ.)। एवं द्वयोरर्थालङ्कारयोर्बहूनाञ्च सङ्कर उदाहृतः।

एवंरूपश्चेति—शब्दालङ्कारः कैश्चिदुदाहृतो यथा राजतीत्यादि। "अतिपातिनो जवेन व्रजन्तः सारावाः सशब्दा नदा यत्र तादृशीयं तटी भासते। अभिहतो दानवानां रासो रवः सिंहनादो येनेति शम्भोः सम्बोधनम्। सा चेयं [गजता] गजसंहतिः यूथमतिपाति विशेषेण परित्रायते। अविरतेन सन्ततेन दानेन मदेन वरा श्रेष्ठा। साराः स्थिरा वनं दयते रक्षति दैङ् (?)रक्षणे, अथवा रक्षणं ददाति, वनानि वा द्यति खण्डयति वा। (यत्नकृतटीका रु. वि. ७६ पृः)। अत्र प्रथमपादगतोऽनुलोमप्रतिलोमाख्यश्चित्र(२:5b)भेदो न यमकमपेक्षत इत्यत आह—पादद्वयगते परस्परापेक्षे इति इतरेतरविवेकेन द्वयोरिह वृत्तेरसम्भवात्। अपेक्षैव च परस्परमनुग्राह्यानुग्राहकभावः, तद्दर्शने तयोर्विदग्धानां चेतसि परं चमत्कारकरणात्। 'वस्तुतस्तु शब्दालङ्कारसंसृष्टिरेवात्र श्रेयसी।'

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥१४१॥**

द्वयोर्बहूनां वाऽलङ्काराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानं, न चैकतरस्य परिग्रहे साधकं तदितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन सङ्करस्यैवाक्षेपात्। उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।
तह किं विहिणा एसो सरसवाणीओ जलणिही ण कओ ॥५६२॥

(गा. श. वे. ६८२)

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः, किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समानगुणतया प्रस्तुतस्य प्रतिपत्तेरियमप्रस्तुतप्रशंसेति सन्देहः। यथा वा—

---

(र. सं. ७२-७३पृ.)। यद्वाऽत्र शब्दालङ्कारद्वयमेकवाचकानुप्रविष्टमिति वक्ष्यमाणस्तुरीयोऽत्र सङ्करो ज्ञेयः।' (अ. स. २५० पृ.)

अथ द्वितीयसङ्करस्य प्रकार लक्षयति **एकस्य चेति**। इह 'उभयालङ्क्रियोल्लेखे[111] समे तद्वृत्त्यसम्भवे। एकस्य च ग्रहे न्यायदोषाभावे च सङ्कर' इति केचिल्लक्षयन्ति (का. अ. सा. सं. ६२ का.)। तत्र, बहलङ्कारसन्देहस्यापि दर्शनादित्यत आह—**द्वयोर्बहूनां वेति**। न चास्योपमाश्लेषादिरूपतेत्यत आह **विरोधादिति**। **युगपदवस्थानमिति**—एककालावस्थितिः। क्रमेण विरुद्धयोरपि समावेशः सम्भवत्येव येन नैक एव गृह्यते तादृगपि साधकम्। नापि तदितरस्य त्यागे बाधकं प्रमाणं यदा तदा न्यायप्राप्तः संशय इति निश्चयाभावरूपो द्वितीयः सङ्करो न त्वयमनिश्चयाख्यः पृथगलङ्कार इत्याह—**स निश्चयाभावरूप** इत्यादि। अत्र हेतुमाह—**समुच्चयेनेति**। **एकस्य चेति** समुच्चयद्योतिना 'च' शब्देन। **जहेत्यादि**—यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः। तथा किं विधिनैषः सरसपानीयः सरसवाणीकश्च जलनिधिर्न कृतः॥ **तहेति** तथेत्यर्थे निपातः। (र.सं. ७१पृ.)। अत्र प्रस्तुताप्रस्तुतगोचरतया समासोक्त्यप्रस्तुतप्रशंसयोर्विरोधो न च कश्चित् साधकबाधक-(२।६०)प्रमाणसद्भाव इति सन्देहसङ्करः।

---

111 अनेकालङ्क्रियेति मुद्रितपुस्तके पाठः। स एव तट्टीकाकृद्भिर्धृतः।

नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति ।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥५६३॥

( श्री· वि· च· ४६ पृ: )

अत्र च किं कामस्योद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तम्, उत वदनस्येन्दुबिम्बतयाऽध्यवसानादतिशयोक्तिः, किं वा एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद् रूपकम्, अथवैतयोः समुच्चयविवक्षायां दीपकम्, अथवा तुल्ययोगिता, किमु प्रदोषसमये विशेषणसाम्यादानन-स्यावगतौ समासोक्तिः, आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशंसेति बहूनां सन्देहादयमेव सङ्करः ।

यत्र तु न्यायदोषयोरन्यतरस्यावतारस्तत्रैकतमस्य निश्चयान्न संशयः । न्यायश्च साधकत्वमनुकूलता । दोषोऽपि बाधकत्वं प्रतिकूलता ।

तत्र—सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ॥५६४॥

इत्यत्र मुख्यतयाऽवगम्यमाना हासद्युतिर्वक्त्रे एवानुकूल्यं भजते इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

---

नयनेत्यादि—'आशा दिशः प्रत्याशाश्च—तमस्तिमिरं मोहश्च । दीपकमिति—यथेकस्य प्रकृतत्वमपरस्य चाप्रकृतत्वम् । तुल्ययोगितेति—यदि द्वयोरपि प्राकरणिकत्वमप्राकरणिकत्वं वा । सन्देहादयमेवेति—सन्देहरूप एव सङ्कर इत्यर्थः ।' (रु· सं· ७३-७४ पृ·)

यत्र त्विति—शब्दस्यार्थे प्रवृत्तिनिमित्तं भाव· । यदाहुः 'यस्य गुणस्य भावाद्द्रव्ये शब्द-निवेशस्तदभिधाने त्वतलौ' इति (पा· ५।१।११९ भा· वा ) । तत्र सम्बन्धोपाधिभावरूपतया-ऽनुगते रूपे निरुक्तया भावात् व्युत्पन्नस्य न्यायशब्दस्यार्थमाह साधकत्वमिति । सहकारित्वा-परत्वख्यापनायेदमपि विवृणोति अनुकूलत्वमिति[-तेति] । एवं दोषोऽपीत्याह—बाधकत्व-मित्यादि—यद्यपि सन्देहविरहस्योभयत्रापि समत्वं तथाऽप्येकत्र साधकप्रमाणसद्भावेनापरत्र बाधकप्रमाणसद्भावेनेति विशेषः । न च किमनेनेति वाच्यं साधकप्रमाणस्य स्वरूपतोऽनुकूलत्वेन सर्ववादिसम्मतत्वात् । तत्र साधकत्वमुदाहरति सौभाग्यमित्यादि । अत्र वक्त्रं शशी-वेति किमुपमा, वक्त्रमेव शशीति वा रूपकमिति संशयः । तत्रोपमां प्रति हासद्युतेः साधकत्वं चन्द्रापेक्षया वक्त्रे तस्यानुकूल्यात् । न च रूपकं प्रति बाधकता, उपचरितायास्तस्याः शशिन्यपि सम्भवात् । अत एव साधकतया विशिनष्टि मुख्यतयेति । शशिनि तु न तथेति—यथा वक्त्रेऽनुकूला तथा तु न प्रतिकूला, तत्रोदासीनेत्यर्थः ।

वक्त्रेन्दौ तव सत्यय यदपर शीतांशुरभ्युद्गतः ॥५६५॥ (रत्ना ३।१३)
इत्यत्रापरत्वमिन्दोरनुगुण न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकता प्रतिपद्यते, न तूपमाया बाधकताम्।

राजनारायण लक्ष्मीस्त्वामालिङ्गति निर्भरम् ॥५६६॥ ( उ वि. ४६ पृ )
इत्यत्र पुनरालिङ्गनमुपमा निरस्यति, सदृश प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यासम्भवात्।

पादाम्बुज भवतु नो विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥५६७॥ (पद्यस्रवा ३।१)

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम्, असम्भवादिति रूपकस्य बाधक, न तु पादेऽनुकूलमित्युपमाया साधकमभिधीयते, विघ्नुपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्ते। एवमन्यत्रापि सुधीभिः परीक्ष्यम्।

---

एव वक्त्रेन्दाविलत्ता[112]परशब्दस्य साधक-(216b)त्वादानुकूल्य द्रष्टव्यम्। बाधकत्व यथा पादाम्बुजमित्यादि[113]—उपमाया॰ साधकमभिधीयत इति। "यद्यपि साधकत्व बाधकत्वञ्चोभयमस्ति तथापि 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायाद्बाधकत्वेनवास्य तु व्यपदेशो न्याय्य बाधकत्वस्य बलीयस्त्वेनोत्कटतया प्रतीते। प्राधान्याद्रूपकत्व प्रति बाधकत्व यत तदेवोपमाविषय इह साधक पर्यवस्यति प्रकारा तराभावात्" (ह स ७४ पृ)। ननु साधकप्रमाणसद्भावेऽपि सामान्यालङ्कारोक्तन्यायेन सन्देहस्य प्रथमप्रतिपन्नत्वात् प्रतीतेश्च बाधाभावात् सन्देहालङ्कारप्रसङ्ग ? मैव, आकाङ्क्षाऽनुसारेण वाक्यार्थप्रतीते। आकाङ्क्षा तु प्रतियोगिषु सर्वेषु न सहसैव युगपदुपजायते, अपि तु

---

112 'कि पद्मस्य रुचि हन्ती'त्यादौ रत्नावलीपद्ये ( ३।१३ ) नास्ति सन्देहसङ्कर इति मूलकृत्तात्पर्यम्। पर काव्यप्रकाशकारादिमतेऽत्र प्रतीपालङ्कार इति बहव॰, प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् प्रधानतश्च पद्मेन्दुप्रभृतीनामुपमानानामाक्षेपस्य विवक्षितत्वात्। अलङ्कारसर्वस्वे रुचकस्तु 'अत्र वक्त्रेण रूपणामहेतुक पीयूषेणाधरामृतस्य श्लिष्टशब्द निरूपण'मिति रूपकमध्ये श्लोकमिम पठति। विशेषप्रतिपत्त्यर्थ निषेधाभासाभावामात्रप इति हि तदाकूतम्।

113 श्लोकस्य पूर्वार्ध तु आनन्दमन्थरपुरन्दरमुक्तमाल्य मौलौ हठेन निहित महिषासुरस्ये ति।

स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।

व्यवस्थितं च

अभिन्ने च पदे स्पष्टतया यदुभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः । उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखाऽवतारबद्धान्धकारमधुपावलि सञ्चुकोच ॥५६८॥
(ह वि १८।१)

अनेकपदानुप्रविष्टौ रूपकानुप्रासौ ।

तेनासौ त्रिरूपः परिकीर्तितः ॥१४२॥

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थित स्यात् त्रिप्रकारतयैव[115] सङ्करो व्याकृतः । प्रकारान्तरेण तु न शक्यो

कारणोपनिपातात् क्रमेण । तथाहि क्रियाया कर्तारमन्तरेण[ना][114]रम्भात्तदवगतौ कर्तारं प्रथममपेक्षते । स च निष्करणो व्यापारे न प्रवर्तत इति स्वकर्मापेक्षते । व्यापारश्च करणेन शक्यः साधयितुमिति करणापेक्षा । एवमधिकरणादय क्रियाकारकविशेषणा-दयथापेक्षणोया । तदुक्त—कारणोपनिपात स्याद् क्रियाऽऽदिषु यथा यथा । जिज्ञासा जायते बोद्धु सम्बन्धेन तथा तथा ॥ तदिह 'वितनोती'ति क्रियाया हासद्युति कर्ता । सा च सौभाग्यमिति कर्माकाङ्क्षति । कर्म न धर्मरूप धर्मिणमाकाङ्क्षति । ततो वक्त्रे शशिन इति पद हासद्युतिसामर्थ्यादुपमानसमासच्युतपथमेवोत्तीयत इति सन्देह-प्रतीति नात्र भवति । एव वक्त्रेन्दावित्यादावप्युन्नेयम् ।

तृतीयस्तु सङ्करो यत्रैकवाक्यानुप्रवेश । स्पष्टेत्यादि—दिवसारविन्दमिति कर्तृपदम् । **उपाऽवतार**॰ प्रदोष । यद्यपि (2172) साङ्गमिद रूपकमखिलवाक्यव्यापि तथापि प्रत्यवयव रूपकस्य सद्भावात्तथा व्यपदेश इत्येकपदानुप्रवेशो निरूप्यते ।

यस्तु भिन्नपदाभिधेयतया शब्दार्थगतालङ्कारसङ्करो भट्टोद्भटादिभि प्रकाशित स संसृष्टावङ्गाङ्गिभावनिबन्धनसङ्करे वाऽन्तर्भावनीय इति त्रिरूप एवात्र सङ्कर इत्युपसंहरति—

114 'नारम्भा'दित्यादि 'करणेने'त्यन्तोऽश 'क' पुस्तके नास्ति ।

115 उद्भटमतमनुसृत्य संसृष्टिसङ्करयोरत्र वैलक्षण्यमूला द्वैधकल्पना । एकत्र समवाय सम्बन्धेनान्यत्र संयोगसम्बन्धेन भेदविन्यास इति वा पाक्षिकी प्रथा । निरपेक्षत्वे संसृष्टिस्तदभावे सङ्कर । रुद्रटेन तदनुसारिभिर्निबन्धकृद्भि केचि

व्याकर्तुम्, आनन्त्यात् तत्प्रभेदभेदानाम्।[116] इति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

कुतः पुनरेष नियमो यदेषां तुल्येऽपि काव्यशोभाऽतिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्य, इति चेत्—उक्तमत्र यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्। ततश्च योऽलङ्कारो यदीयौ भावाभावावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यत इति। एवञ्च

---

तेनासावित्यादि। 'तत्प्रभेदभेदानामिति—तत्प्रभेदाश्रयः प्रकारास्तेषां भेदास्तत्तदलङ्कारयोगेनावान्तरविशेषा उत्प्रेक्षाऽवयवादयः' (र. सं. ७४ पृ.)। "तत्रोत्प्रेक्षायाः साधक उत्प्रेक्षाऽवयवो (का. अ. सू. वृ. ४।३।३३) यथा—(कु. स. ८।६३) अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः। कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥" अत्राङ्गुलीभिरिवेत्युपमा। मुखमारम्भवक्त्रयोरिति। आभ्यामभेदाध्यवसायरूपाऽतिशयोक्तिरनुगृह्यते। सा च चुम्बतीवेत्यस्या उत्प्रेक्षायाः समुत्थापिका। **इति प्रतिपादितेति** इतीति पूर्वोक्तालङ्कारप्रस्तावोपसंहारः। प्रतिपादिताः स्वकण्ठेनोक्ताः। **त्रैविध्यजुष** इति संक्षिप्य प्रकारस्वरूपनिर्देशः। शब्दालङ्कारोऽर्थालङ्कार उभयालङ्कारश्चेति तिस्रो विधाः।

तत्रैव प्रतिपाद्य जिज्ञासामनूद्य प्रमाणमवतारयति कुत इत्यादि। उक्तमत्रेति शब्दश्लेषप्रस्तावे। **एवञ्चे**ति—यथा लोके बधिरोऽपि चक्षुष्मानालोकयति सत्यपि श्रोत्रे उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुःश्रोत्रसन्निधाने रूपालोकनं चक्षुष(217b)एव व्यवस्थाप्यते न श्रोत्रस्य, तथेहापि शब्दार्थात्मनि काव्ये शब्दार्थयोरत्यन्तसंसृष्टत्वेऽप्यलङ्कारा मिथःसम्बन्धित्वेनान्वयव्यतिरेकाभ्यामेव प्रविभज्यन्त[117] इति व्यवस्थितौ।

---

देकस्यैव संज्ञया प्रकारद्वयस्य ग्रहणं कैश्चिच्च शोभाकरादिभिः सङ्करस्यैव ग्रहणं कृतं न संसृष्टेः। भोजदेवेनैतस्यैवालङ्कारसङ्करः संसृष्टिरिति संज्ञान्तरमेव स्वीकृतः। परमभियुक्तैरलङ्कारसर्वस्वकृद्भिर्यथाऽत्रोभयोरेव ग्रहणं सिद्धान्तितम्।

116 प्रभेदानामिति तु प्रायिकः पाठः। मूलस्थः पाठ एव प्राचीनतमायां का. प्र. मा. दृश्यते।

117 'क' पुस्तके एतदर्थांशस्य स्थानव्यत्यासो लिपिकरप्रमादकृतोऽनुमीयते।

यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितयो-भयालङ्कारौ, तथा 'हि' शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः। अर्थस्य तु तत्र वैचित्र्यमुत्कटतया प्रतिभासत इति ते वाच्यालङ्कृतिमध्ये वस्तुस्थिति-मनपेक्ष्यैव लक्षिताः। योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनाया-मन्वयव्यतिरेकावावश्यमाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयि-भावस्याभावात्—इत्यलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान्।

---

**परम्परितरूपकञ्चे**ति श्लिष्टशब्दनिबन्धनम्। **'हि'शब्दहेतुकोऽर्थान्तरन्यासस्तेन** समर्थकतायाः प्रतिपादनात्। **एतत्प्रभृतय** इति—अपि-सह-विनेत्यादिशब्दहेतुका विशेषादयः। तर्हि अर्थालङ्कारमध्येऽमीषामपि परिगणनमन्याय्यमित्याह **अर्थस्य त्वि**ति – अनयैव दिशा श्रौत्युपमाऽऽदीनामप्युभयालङ्कारता। तदुक्तं रसार्णवालङ्कारे—इव हीवादिभिः शब्दैः सादृश्यादिः प्रतीयते। (218a) यथोऽसात् सूरयः प्राहुरुभयालङ्क्रिया इमाः॥[118] अथ येऽपि प्राचीनाः 'शब्दोभयगतत्वेऽन्वयव्यतिरेकौ न निबन्धनं तौ तत्कार्यत्वे प्रयोजकौ, न तु तदलङ्कारत्वे, अन्यथा श्रौत्युपमाऽऽदीनामपि शब्दालङ्कारप्रसङ्गः स्यात्। लोकवदाश्रयाश्रयिभाव एव विभागव्यवस्थाया निमित्त'माहुः, (अ.स. २५६-२५७पृ. द.) तैरप्यन्वयव्यतिरेकावावश्यमाश्रयणीयावित्याह[119] **योऽलङ्कार** इति। **विशिष्टस्ये**ति—यत्राश्रयस्य नित्यता नास्ति। नित्यत्वेऽपि हि न तस्यान्वयव्यतिरेकौ निबन्धनं, नित्यस्य व्यतिरेकाभावात्।

उपसंहरति—**इत्यलङ्काराणा**मिति। संसृष्टिसङ्करयोश्चानयोर्व्यतिरेको विषयः। व्यङ्ग्यत्वेन प्रतिभासमानेऽलङ्कारान्तरे यत्र तत्कृता चारुत्वातिशयप्रतीतिस्तत्रालङ्कारध्वनित्व-मेव "यथा—होइ ण गुणाणुराओ खलाण सिद्धिमरणाण। किर पहियो सरइ

---

118 कारिकेयं शब्देभ्यः यः पदार्थेभ्य उपमाऽऽदिः प्रतीयते। विशिष्टोऽर्थः कवीनान्ता उभयालङ्क्रिया मता॥ इति स. क. आ-मूला। सुविदितमेतत् यत् रसार्णवालङ्कारो भोजमतमनुवदति।

119 उद्भटरुद्रटावनुसृत्य राजानकतिलकादयोऽपि मूलग्रन्थकृतः प्राचीनतरा एवं व्याहरन्ति। अत्र मूलकृन्मतं दोषपरिच्छेदे सुस्पष्टं सयुक्तिकं चोक्तमिति स एव नवीनालङ्कारिकाणां मुख्यतः सिद्धान्तः। विरुद्धवादिनां काश्मीरकाणां रुचकादीनां तथा भोजस्य तदनुयायिनां विद्यानाथादीनां मतं न विचारसहम्।

एषां दोषा यथायोग सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ।।१४२।।

तथाहि—अनुप्रासस्य प्रसिद्धयभावो वैफल्य वृत्तिविरोध इति ये त्रयोऽनर्था[120]स्ते प्रसिद्धिविरुद्धतामपुष्टार्थत्व प्रतिकूलवर्णतां च यथाक्रमं नातिक्रामन्ति, तत् स्वभावत्वात् ।

क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्ता-
नक्ष नक्षत्रनाथोऽरुणमपि वरुण· कूवराग्र कुवेर· ।
रंह· सङ्घ· सुराणा जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचे सोऽवतात् स्यन्दनो वः ।।५६९।।

( सु श ७१ )

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव प्रतिपादिता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोध· ।

भण तरुणि ! रमणमन्दिरमानन्दस्यन्दि सुन्देरेन्दुमुखि !
यदि सल्लीलोल्लापिनि ! गच्छसि तत् किं त्वदीयं मे ।।५७०।।

( रु का अ २।२२)

---

ससिमणी चन्दे ण पिआमुहे दिट्ट ।। ( ध्व आ लो ४२५ )। अत्रार्थान्तरन्यासो वाच्य । व्यतिरेकापह्नुतौ तु व्यङ्ग्यप्राधान्येन प्रतीयेते ।

अथास्य ग्रन्थस्याव्यापकत्व निरस्यति एषामिति—अलङ्काराणाम् । सम्भवन्तोऽपीति—न कस्याप्यत्र विमतिरिति दर्शयति । तथाऽप्यत्र यन्नोक्तास्तत्र हेतुमाह—उक्त ष्विति । प्रागुक्तेषु दोषप्रकारेष्वन्तर्भावान्न पृथक् कीर्तिता । चक्रीत्यादि—चक्रेष्वराश्रकान्तास्तेषा पङ्क्तिरिति । चक्री नारायण । हरिरिन्द्रो हरयोऽश्वा । धुरि रथाग्रे ध्वजास्तेषामन्तानिति। चक्रस्य मध्यभागोऽक्ष", अरुण· सारथि । कूवरो युगन्धर । रंहो वेग । तदिह विष्णुप्रभृतय कर्तारश्वकारपङ्क्तिप्रभृतीनि कर्माणि। भणेत्यादि—रमणमन्दिर रतिवेश्म रमणस्य प्रेयसो मन्दिरमिति नु व्याख्याया

---

120 अत्र प्राचीनास्त्रयोऽनर्था इति वृत्तिग्रन्थ पठन्ति । नार्थ्यन्त न प्रार्थ्यन्त इत्यनर्था दोषा इति व्याकुर्वन्ति च । अप्रयुक्त दोष इति मूलोपरि वृत्ता । अप्रयुक्त कविभिरनादृतमिति पददोषप्रसङ्गे सप्तमे वृत्ति । नैव विषस्य

अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।

परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥५७१॥

( रु. का. अ. ३।२१ )

अत्र वाच्यस्य विवेच्यमानं न किञ्चिदपि चारुत्वं प्रतीयत इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ।

'अकुण्ठोत्कण्ठया पूर्ण'—( श्लो. ३१० ) मित्यादौ शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तया नीत्या विरुध्यत इति परुषानुप्रासेऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः। यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तं दोषः। यथा—

भुजङ्गमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।

दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रमुखे सदम्भाः ॥५७२॥

उपमायामुपमानस्य जातिप्रमाणगतं न्यूनत्वमधिकता वा तादृश्यनुचितार्थत्वं दोषः। धर्मांश्रये तु न्यूनताऽधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः। क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥५७३॥

( का. आ. सू. वृ. ४।२।१६ )

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥५७४॥

( का. आ. सू. वृ. ४।२।१६ )

---

मकारणमित्यसंगतं स्यात्। परिसरणं परिभ्रमणं, रणरणकमुत्कलिकायास्तरलता ।

भुजङ्गमस्येत्यादि—[सदम्भाः] सततप्रभावो मणिः[121] सदमिति सदेत्यस्यार्थे निपातश्छान्दसः। सत् शोभनमम्भो यस्य सदम्भः, दम्भेन सह वर्तन्त इति सदम्भाः। अथोपमायां हीनत्वाधिक्यवादयो ये दोषा अन्यैरुक्तास्तेषामुक्तेष्वेवान्तर्भावं दर्शयति—उपमायामिति। तत्रैवोपमानस्य जातिगतन्यूनत्वे यत्, चण्डालैरित्यादि प्रमाणगतं, वह्निस्फुलिङ्ग इवेत्यादि[च]।

---

यमकस्य चतुरः प्रयोग इति यमकविदतिप्रसङ्गरसाभिः प्रमाणिकबुद्धितः कृता । प्राचां मेधाविरुद्रप्रमुखानां ततोऽर्वाचां वामनरुद्रटप्रभृतीनां पद्धतिमनुसृत्येयलङ्कारदोषचर्चेति मन्तव्यम् ।

121 सदं सततं भाः प्रभा यस्येति कृत्वा ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥५७५॥

( भा. का. २।२४ )

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥५७६॥

( का. अ. सू. वृ. ४।२।११ )

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥५७७॥ (का.अ.सू.वृ. ४।२।६)

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान् निशायां संसृज्यमानः शशिनेव मेघः ॥५७८॥

( रामशर्मणः —भा. का. अ. २।२८ )

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यत इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽप्युपमानोपमेययोः साधारणं चेद्धर्ममन्यरूपं कुर्यात्, तदैकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेनापि धर्मेण प्रतीयत इति प्रकान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमत्वम् ।

---

एवमुपमानस्य जात्याधिक्यं यथा—अयमित्यादि । प्रमाणेन यथा पातालमिवेत्यादि । कालिन्दीपातः यमुनाप्रवाहः । एषामनुचितार्थत्वं दर्शयति ( 2184b ) अत्रेत्यादि । अत्र मौञ्जीप्रतिवस्तु तडिन्नास्त्युपमानमिति तडिद्रूपधर्मन्यूनत्वं, नवकृष्णाजिनपटमात्रस्यैवोपमेयस्य युक्तः मौञ्ज्या व्यर्थत्वप्रसङ्गात् । नवनीलजीमूतपदखेनैव तडित् प्रतिपाद्यते तत्र व्यभिचारात् । यत्र त्वव्यभिचारादेकधर्मनिर्देशादेवापरधर्मप्रतिपत्तिस्तत्र धर्मन्यूनता नास्त्येव । तदुक्तं वामनेन—धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यादिती ( का. अ. सू. वृ. ४।२।१० )। (2184b) धर्माधिक्यं यथा स पीतेत्यादि—अत्र शशिनेवेत्याद्युपमा । तस्योपमानस्योपमेयो न निर्दिष्ट इत्युपमेयाभावाद्धर्माधिक्यम् ।

लिङ्गभेदवचनभेदयोर्भग्नप्रक्रमरूपतामाह लिङ्गेत्यादि । अन्यरूपमिति—उपमानोप-

यथा—चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे ॥५७९॥

सक्तवो भक्षिता देव ! शुद्धा कुलवधूरिव ॥५८०॥

( नमिसाधुटी रु का. अ ११।२० )

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथाऽप्यस्यानुगमक्षमस्वभावत्वात्। यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥५८१॥

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।

दधते स्म परां शोभां तदीया विभ्रमा इव ॥५८२॥ इति।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा—

---

मेययोरेकतरविशेषणत्वे न्यग्भावना प्राप्तमित्यर्थ। तत्र लिङ्गभेदो यथा—चिन्तारत्नमिति। उपमेयः पुंलिङ्ग च्यवन सामान्यधर्म, स चात्रोपमेयगतत्वेनोपात्त। वाक्यार्थपर्यालोचनया तु लिङ्गवचनपरिमाणानामुपमानगतत्वेन प्रतीतावपि प्रतीतिस्खलनाद्भग्नप्रक्रमता। यत्तु पुनपुंसकयोर्लिङ्गभेदमिच्छन्ति तत् प्रायिक, तथा च 'इष्ट' पुनपुंसकयोः प्रायेणे'ति ( का अ सू वृ ४।२।१३ ) लिङ्गभेदानुमतौ 'प्रायो ग्रहण वामन. कृतवान्। मुख चन्द्रमिव पश्यामीत्यादिवदिन्दुरिव मुख भातीत्येवप्राय नेच्छन्त्येन। वचनभेदो यथा—सक्तव इति। शुद्धत्व सामान्यधर्म। क्वचित्त्वय दोषत्वेनावतरतीत्याह यत्र त्विति—स्वरूपभेदभिन्नवचनयोरुपमानोप (२१९a)मेययोरेकतरनिष्ठत्वेन परित्यक्तसाधारणरूपत्वमित्यर्थ। गुणैरिति—अनर्घ्यत्व सामान्यधर्म, स च गुणाना पुलिङ्गाना विशेषणत्वे तुल्यरूप इति नास्ति प्रतीतिखेद। एव 'खीव गच्छति षण्ढोऽय वक्त्येषा स्त्री पुमानिवे'त्यादावपि ( का अा २।५२ ) प्रतीतिखेदाभावाददुष्टत्व द्रष्टव्यम्। अत्र हि गमनभाषणवचनप्रागल्भ्यादय सामान्यधर्मा सन्तो लौकिकव्यवहारप्रसिद्धत्वात् झगित्येव प्रतीतिपथमवतरन्ति। तथा च 'लिङ्गभेद प्रायेणे'त्यस्यानन्तर 'लौकिक्यासुपमायां समासाभिहितायामुपमाप्रपञ्चे चे'ति ( का अ सू वृ ४।२।१३-१४ ) वामन। वचनभेदे दुष्टत्व यथा—तद्वेष इति। वेष उपमेयो विभ्रमा उपमानानि। एषाञ्च सदृशत्वादय सामान्यधर्मा, तत्र कथन्तत्वादेकवचनान्त्व क्विवन्ताद्बहुवचनान्तत्व। मधुरतया भृतो धृत, मधुरताञ्च बिभ्रति। दधत इति दध धारण इत्यस्य दधातेर्न यथाक्रममात्मनेपदैक-

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥५८३॥ ( र. वं. १७।१ )

अत्र चेतना प्रसादमाप्नोतीति न पुनरापेति कालभेदः ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपिप्रभवा लतेव ॥५८४॥
( रत्नावली १।२० )

अत्र लता विभ्राजते न तु विभ्राजस इति सम्बोध्यमाननिष्ठस्य परभागस्या-सम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्ति(५८५)-रित्यादौ च गङ्गा प्रवहति न तु प्रवहत्वित्यप्रवृत्तप्रवर्तनात्मनो विधेः । एवञ्जातीयकस्य चान्यस्यार्थस्योपमान-गतस्यासम्भवाद् विध्यादिभेदः ।

ननु च समानमुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसिताया-मुपमायामुपमेयस्य प्रकृतधर्माभिसम्बन्धाय कश्चन कालभेदोऽस्ति, यत्राप्यु-पात्तेनैव सामान्यधर्मेणोपमाऽवगम्यते यथा 'युधिष्ठिर इवायं सत्यं वदती'ति

---

वचनबहुवचनयोरपि । कालभेदो यथा—अतिथिमित्यादि[122] । विभक्तिविपरिणामे वाक्यभेदः स्यादित्यभिधायोदाहृतम् । पुरुषः प्रथममध्यमोत्तमरूपः । तद्भेदे यथा—**प्रत्यग्रे**ति—**मज्जनं** स्नानमासेचनञ्च । स्फुरन्नंशुकस्यान्तो यस्याः, स्फुरद्भिरंशुभिः कान्तेति च । मकरकेतनः समुद्रः कामश्च । कालादिभेदे दोष एव नास्ति तदाऽस्यान्य-स्यान्तर्भाव इत्यभिधानं गगनालेहनप्रख्यमित्याशयवानाशङ्कते नन्विति । **समानमुच्चारित**मिति शब्दतः प्रादुर्भूतम् । **प्रतीयमानं वा धर्मान्तर**मिति (२।७१) कालाद्युपहितोपात्तधर्माति-रिक्तं यथा 'प्रत्यग्रे'त्यादौ विविक्तकान्तमूर्तित्वादिकं धर्ममुपादाय नायिकयोरौपम्ये पर्यवसिते-ऽनन्तरमुपात्तेन **विभ्राजस** इत्यनेन धर्मेण नायिकाया एवाभिसम्बन्धात् क्व पुरुषभेदः ? एवं 'राम इवायं राजा विभाती'ति 'भासि त्वं हरिरिवावनीनाथे'ति 'दहतु भवान् दहन इति दिशः समग्रा'नित्यादौ रामादिगतप्रतीयमानसमानधर्मनिमित्तोपमानसम्बन्धादनन्तर-मुपादीयमानेन 'विभाती'त्यादिनोपमेयस्य सम्बन्ध इतरथा तु दुःसमन्वयत्वात् । नन्वेवं यत्र कालविशिष्टेनोपात्तेनैव धर्मेणोपमायाः प्रतीतिस्तत्रेदमुक्तं कथं सङ्गच्छते ?

---

122 एवमादिषु दोषबहिर्भावे 'सिद्धानुगममात्रं हि युक्तं वक्तुं परीक्षकैः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तन'मित्यभियुक्तोक्तिर्युक्तियुक्तेति प्रतिभाति ।

तत्र युधिष्ठिर इव सत्यवादी सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम्। रैपोषं पुष्णातीतिवद् युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेवैतत्। किन्तु स्थितेषु प्रयोगेषु समर्थनमिदम्, न तु सर्वथा निरवद्यं, प्रस्तुतवस्तुप्रतीतिविघातादिति सचेतस एवात्र प्रमाणम्।

**असादृश्यासम्भवावप्युपमायामनुचितार्थतायामेव पर्यवस्यतः। यथा**

*ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्* ॥५८६॥

(का. अ. सू. वृ. २।४।१९)

**काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम्।**

---

आह **यत्रापीति**। सत्यं वदतीति **सत्यवादी**, आवश्यके णिनि। **युधिष्ठिर इव सत्यवादीति** प्रतीतेरत्रापि पूर्ववदेव कालभेदः। (219b) क्रिया कर्मोभयवत्त्वाऽपि कुत सम्भवति, अतोऽत्र न **पौनरुक्त्यमाशङ्कनीयमि**त्याह **रैपोषं पुष्णातीतिवदि**ति। तदित्थं प्रत्यवस्थित निरूढशङ्काऽहङ्कार शुद्धभावेनोत्तरयति **सत्यमेवैत**दिति। **स्थितेष्वि**ति प्रामाणिकप्रयुक्तेषु। **समर्थन** यथाकथञ्चिदुपपादनम्। तदेतदाह **न तु सर्वथे**ति। अत्र हेतु **प्रस्तुते**ति। सवितुसिद्धतामत्र दर्शयति **सचेतस** इति—अप्रतीतेरेव गुणैर्यत्र सादृश्य तदप्रतीतगुणसादृश्यमेकस्मिन्नुपमाने प्रतीत उपमाना-न्तरप्रयोगो न कथञ्चिदर्थविशेष पुष्णाति (का अ सू वृ ४।२।१७ १८)। अत एवा-सादृश्यहता ह्युपमा तन्निष्ठाश्च कवय इत्यस्य याथार्थ्यमुपमाऽऽधिक्यात्तद्दोष' (४।२।१७-१८) इत्याहु,[123] यथा 'कर्पूर-(220a)हारहरहासित यशस्त इत्यादौ कर्पूरादिभिरुपमानैर्यथा सौसादृश्य भवति, तेषां शुक्लगुणातिरेकात्। तत्राप्याहु —'नाधुष्टार्थत्वमिति यत्र बिन्दु सिन्धुरिव क्षुभित" इति प्रयुक्तम्। (का. अ. सू. वृ ४।२।१६)।

उपमानस्याप्यनुपपन्नत्वमसम्भवः। तत्राह यथा **ग्रथ्नामीति**—काव्यस्य शशि-नाऽसादृश्य, तत्र न कोऽपि प्रसिद्धो गुण। "ननु चार्थानां रश्मितुल्यत्वे सति काव्यस्य

---

123 अत्रार्थालङ्कारविवेचनमलङ्कारोत्तमयोपमयाऽऽरब्ध, तथैव च निर्वोढ इति नाट्य पन्था। अपरथालङ्कारदोषनिर्धारणे उपमादोषा एव दिग्दर्शनरूपा इति तेषामेव विस्तरतो निर्देश। स च मेधाविरुद्रोद्दिष्टानां सप्तानामेव स्वरूप-निर्वाचनेन वरावर्तीति त एवोदिष्टा। नवाना विदानाथादय उपमादोष

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुमुत्सहन्ते न 'यथा'शब्दोऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा—

उदयौ दीर्घिकागर्भात् कुड्मलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥५८८॥

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥५८७॥

( भा. का. अ. २।४७ )

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितं निरुपाख्यप्रख्यम् । तत्समर्थनाय यदर्थान्तरन्यासस्योपादानं तदालेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः । यथा—

---

शशितुल्यत्वं भविष्यति । काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वं सिध्यति, न त्वर्थानां रश्मीनाञ्च कश्चित् सादृश्यहेतुः प्रतीतो गुणोऽस्ति । तदेवमन्योन्यान्वयदोषो दुष्परिहर इति ( का. अ. सू. वृ. ४।२।१६ ) । द्वितीयं यथा निपेतुरिति । प्रथमतो दिनं शशाङ्क इति दिनानुभावः । अत्रानुचितार्थं व्यक्तमेव । तदाह भामहः—( का. अ. २। ४८-४९ ) कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः । पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ॥ सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोर्जितम् । असम्भवादयं युक्तया तेनासम्भव उच्यते ॥ तत्रान्यदुपमात्वेन क कुर्यादुपमां कृती । को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥ यस्त्वत्रातिशयवानर्थः[124] कथं सोऽसम्भवः मतः । इष्टं चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा ॥ तस्माद्विरुद्धव्याप्तिसंग्रहो न कर्तव्य इति तात्पर्यार्थः । **उत्प्रेक्षायामपीति**—उपमायामतिशयस्येष्टत्वात् । **केवलस्येति**—असमासस्य, यथाशब्दस्य समासे त्वसौ योग्यताऽऽशयपि प्रतिपादयति—उदयाविति । **मेचकोत्पलमिति**—

---

प्रस्तावे चैतभिर्मुक्तिं सूचितवन्त इत्यपि येषां मतं ते चित्रमीमांसाकारादिभिः प्रत्युक्ताः । श्रीधरेण 'उपमाऽऽधिक्यात्तदपोह' 'इत्याहु'रिति च संक्षेपेण वामनवचनेन परामृष्टं सर्वम् ।

124 'यस्यातिशयवानर्थः'……'इष्टञ्चातिशयार्थ'मिति प्रचलितपुस्तकेषु पाठः ।

दिवाकराद् रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥१८९॥

(कु. स. १।१२)

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न सम्भवति, कुत एव तत्प्रयोजितमद्रिणा परित्राणम्। सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः।

साधारणधर्मविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषणं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयतायां यत्तदुपादानं तदपुष्टार्थत्वं पुनरुक्तता वा दोषः।

यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया ॥१९०॥

(इ. शि. ३।३७)

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ?

श्लेषोपमायास्तु स विषयो यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तस्याः प्रतीति। यथा—

---

भीते वक्तव्ये भेचकमपि चिन्त्यम्। (220b) निरुपाख्यप्रख्यं निर्विकल्पतुल्यमित्यर्थः। असमीचीनमसङ्गतम्।[125] उच्चैःशिरसामनवनतशिरसाम्।

समासोक्तावुपमानमनुपादेयं प्रयोजनाभावादिति यदुक्तं तदप्रस्तुतार्थव्यपोहक्रमाभ्यां नातिरिच्यत इत्याह स्पृशतीत्यादि। कराः पाणयोऽपि, तापः खेदोऽपि, मानः परिमाणञ्च। दिनश्रिया इति—दीर्घाहो निदाघः। व्यक्तेर्लिङ्गस्य विशेषः

---

125 अत्र समासोक्तिसमर्थनमसङ्गतं तस्या उपमानभूतधर्मिमात्रप्रतीतिसामर्थ्योपगमात्, इह तु सम्भावनाया एवोपरितनयुक्तिनिदर्शिताया: सोढारसौलभ्यात्। वृत्तिकृन्मन्तव्यादवसीयते यदयाऽर्वाचो मञ्जिलाभादयोऽस्यार्थान्तरन्यासं मन्यन्ते तथा प्राचोऽपि केचनेति। तान् प्रति चेदायः। शिरसामतीवेति क्वचित्कः पाठः।

स्वय च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसन्ध्येवास्वापफल्लुब्धेहितप्रदा ॥ इति ( ३६८ श्लो )

अप्रस्तुतप्रशसायामप्युपमेयमनयैव नीत्या प्रतीत न पुन प्रयोगेण कदर्थता नेयम् । यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वर्सस्तृणमणिर्धत्ते मणीना रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विना
धिक् सामान्यमचेतन प्रभुमिवानामृष्टतत्त्वान्तरम् ॥५९१॥

( भ श ६६ )

अत्राचेतस प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेरयुक्तमेव पुन कथनम् ।

---

पुस्त्व स्त्रीत्वञ्च । **नायकतयेति**—नायको नायिका चेत्येकशेष । अत्र तिग्मरश्मिर्नायको दिशश्च नायिका इति प्रतीति श्लिष्टविशेषणमहिम्ना । एव नायिका वरानुरक्तनायक दर्शनसमुत्पद्यमानविशिष्टत्वेन द्वितीयतिथि प्रतिनायिकात्वप्रतीतौ **दयितयेति** पद मपुष्टार्थमर्थपुनरुक्त वा । **स्वयञ्चेति**—अस्य प्राग् व्याख्यात एव ( ६म उ ) ।

**आहूतेष्विति—तृणमणि** काच **न कम्पते** न बिभ तीत्यर्थ । एवमनेकवृत्ति सामान्यमनामृष्टतत्त्वान्तरमिति तद्विशेषणम् **अचेतनं प्रभुमिवेति** तु पूर्ववदत्ताप्यपुष्टार्थ च मर्थपौनरुक्त्यम् वा[126] । यत्र तु प्रस्तुताप्रस्तुतनिबन्धन नास्ति तत्र तदुक्तिरुपपन्नैव । यथा—निम्नमुन्नतमवस्थित चल वक्रमार्जवगुणान्वितञ्च यत् । सर्वमेव तमसा समीकृत धिङ्महत्त्वमसता हृता तरम् । इति तमसां प्रस्तुतत्वात्तदुक्तेरसत्पुरुषमहत्त्वप्रतीतावसामर्थ्यमिति तद्वक्तुमेव याच्यम् ( व्य वि ३८३ पृ ) ।

**अन्येऽप्येवञ्जातीया इति** । तत्र विरोधस्यासम्भवो यथा—या घर्मभासस्तनयाऽपि शीतले स्वसा यमस्यापि जनस्य जीव (2213)न । कृष्णाऽपि शुद्धेरधिक विधातृ बिभिर्विहन्तुमहांसि जलै पटीयसी ॥ ( शि पा व १२।६७ ) । अत्र घर्मभासस्तनयत्वा दीनां शीतलत्वादीनाञ्च धर्माणा भिन्नाधारतया विरोध उक्त । स च न

---

126 अचेतनत्वे विशेषित यत् साम न्यद्वारेण प्रस्तुतस्य प्रभोरवगमात् प्रभुमित्यधिक मित्यपौनरुक्त्यमेवेति व्यायान् पन्था । प्रतिज्ञाया एव तावद्गम्यमानार्थाया वचन पुनर्वचन कि पुनरस्या पुनर्वचनमित्यपार्थक निगमनमिति तार्किक नयोद्भून व्यक्तिविवेकेऽत्र तुलनीयम् ।

तदेतेऽलङ्कारदोषा यथासम्भविनोऽन्येऽप्येवञ्जातीया पूर्वोक्तयैव दोषजात्याऽन्तर्भाविता न पृथक् प्रतिपादनमर्हन्ति ।

इति सम्पूर्णमिदं काव्यलक्षणम् ॥

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता सङ्घटनैव हेतुः ।

---

सम्भवस्यैकाश्रयतयैव तस्योपपत्ते, अन्यथाऽतिप्रसङ्ग स्यात् । 'यद्यपि यमुनाशात्मलादीनामत्र तात्त्विकमेकत्व तथापि तेषां शब्देन कर्तृकरणतया निर्देशाच्छाब्द भिन्नत्वमनुभूयते, शाब्द एव च विरोधो वक्तुमिष्ट कवे । तथा च तेषा भिन्ना [श्रयतयाऽन-] भिहित वा यस्व एव पर्यवस्यति, एकाश्रयतया विवक्षिताना तथाऽभिधानात् । एवमन्येषामप्यलङ्कार दोषाणामुक्तेष्वन्तर्भाव उचित्त ' ( रु स ७६ पृ ) ।

अथास्य ग्रन्थस्य व्यापकत्वमितरग्रन्थभ्यो वैचित्र्य दर्शयति—**इतीति** – दशभिरुल्लासैरुक्तरूपप्रकारेणेत्यर्थः । **विदुषां** ध्वनिकृत्प्रभृतीनां सुधियाम् । **एष मार्गः** स्वसिद्धान्तस्वतद्ग्रन्थगतत्वेन पृथक पृथक् व्यवस्थितोऽप्येकरूपतया यत् प्रतिभाति तत्र सङ्घटनैव निमित्तम् । विक्षिप्तस्य सुखबोधार्थैकत्र सग्रह सङ्घटना तद्वशादेवैकात्मताप्रतिभासात् । एतेन महाजनानां प्रसरणहेतोरस्य ग्रन्थस्य सहृदयहृदयाह्लादिकाव्यस्वरूपज्ञान क्रिया प्रयोजनम् । तथा कवेरैहिकामुष्मिकामोदहेतु कीर्त्यादि प्रयोजनम । श्रोतु पुन प्रीति प्रयोजन चतुर्वर्गादिप्राप्तिकारण व्युत्पत्तिप्रयोजनमुक्तमित्यभिधेयसम्बन्धप्रयोजनोपसहार । ग्रन्थश्चाय राजानकमम्मटेन कथमप्यसमाप्तत्वात् राजानकाल्लकेन च पूरितावशेषत्वाद् द्विखण्डोऽप्यखण्डतया यदवभासते तत्र सघटनैव समीचीनो हेतु । न हि सुघटितस्य सन्धिबन्ध कदाचिदपि लक्ष्यत इत्यर्थशकला (221b) ध्वन्यत इति'[127] (रु स ७६ पृ)।

---

127 ध्वन्यत इति—इयमेव बहुभिरनुसृता व्याख्यासरणि । अत्र यदाधुनिकेन केनैतमर्थमङ्गीकुर्वताऽपि मूलग्रन्थस्य नमस्कारश्लोके 'भारती कवे रिति काव्यपर्यायस्यादावन्ते च प्रतिभासत' इति प्रकाशपर्यायस्य दर्शनात् काव्यप्रकाश इत्येव सूचितेत्यनुमान कृत ( T S S vol II Intro ) तदकिञ्चित्कर कष्टकल्पनत्वादसाम्प्रदायिकत्वाच्चेति मन्तव्यम् । सम्पूर्णमिदं काव्यलक्षणमिति मूलनिर्देशो ग्रन्थस्य जातिलक्षणसूचको न विशिष्टनामनिरूपणपर इति ।

## इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम

## दशम उल्लासः ।

इति उर्यचार्यश्रीश्रीधरविरचिते काव्यप्रकाशविवेके

दशम उल्लास ।[128]

---

128 'क' पुस्तकस्यान्ते श्लोकोऽय दश्यत इति—
गीर्वाणस्व [ यश प्र ]-बन्धमुपरि भ्राम्यन्तु पोता सुख
दु शीला जलजन्तव कटु रटन्त्वम्भोनिधे कष्टरम्(?) ।
यस्यैतस्य निज स कोऽपि महिमा जागर्ति येन स्वय
विश्वायासभर-[ प्रती ]-क्षचमरो नागस्य विश्राम्यति ॥
गीर्वाणानां स्वयश प्रबन्ध समुद्रस्तस्य मन्थनेनैव पुराणदर्शितेन देवानां स्वयशस पुनरुद्धारात् । पद्येनैतेन समुद्रप्रख्यस्य काव्यप्रकाशग्रन्थस्य प्रशस्तिस्तस्य चोचित-व्याख्यानेन सुमधारता, तस्मिन् दोषदर्शिनां ( यथा मैथिलश्रीधरादिभङ्गीपरिपन्थिनां चण्डीदासादीनां ) निन्दा च युगपदुद्घाटिता स्यात् । सुसधारत्व-शसनेन टीकाकृता विनयोऽप्यूहनीय । यथा तार्किकमूर्धन्यस्य कवि-पण्डितस्य ज्ञानमूर्तेर्ज्ञानश्रीमितस्यानवद्ये पद्ये पोतेनेप्सितगाप्यते जलनिधावित्युक्ति-मात्रान्वयादारब्धं शिशुनाऽपि चापलबलाच्छ्‌त्वाऽपि भीतिर्यत । तत्तीरान्त मियाद्दिनाशमविशन् यचेप सुहृय सुधासिन्धोरस्य गुण स वेपितवियद्वेला-वलीमालिन ॥ इति शम् ।
काल्या चेके वसतिमुशता शिष्यधीवर्धनेपा-
टीकाकल्पेऽशङ्कितमनसाऽकारि सारोऽन्तलेपा ।
वाशिष्ठेनान्वयमहिमतोऽन्विष्टपित्रामतेन
श्रद्धाशुद्धाऽनुपधि विदुषागाधवेनाधमेन ॥
शाके महाब्धिवसुचन्द्रमिते सहस्ये पक्षे सिते प्रतिपदीनदिने प्रशस्ये ।
येयं विवेकविवृति समपूरि नव्या सा स्वान्मदेशकृपया शिवतातिभव्या ॥

---

## ( APPENDIX A ) ( 'क' परिशिष्टम् )

### काव्यप्रकाशोदाहृतनिदर्शनाना वर्णक्रमानुसारिणी सूची

* तारकाचिह्निताना निदर्शनानामाकरोद्धारोऽत्रैव प्रथम विधीयत इति मन्तव्यम् । प्राय सर्वेषामुद्देशो यथास्थल सूचित । इतरत्र तु बन्धनीमध्ये सूच्यते । ( ना म = नाटके मध्यम् । )

## ( App. B. ) ( ख )

## काव्यप्रकाशे प्रमाणोद्धृतयः

### ( क ) ग्रन्थकृतः



### ( ख ) ग्रन्थाः

( App. C. ) ( ग )

काव्यप्रकाशे तद्वृत्तौ च स्मर्यमाणानि प्रमाणानि :—

पृः प्रथम उल्लासः

(२) एतद्विलक्षणा तु कविवाङ् निर्मितिः=ध्व. आ. लो. (२२२पृ.)

तथा चेदमुच्यते—अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते ॥

(४) प्रभुसम्मित...सुहृत्सम्मित...=ध्व. आ. लो. (१४८ पृ.)

इह प्रभुसम्मितेभ्यः श्रुतिस्मृतिप्रभृतिभ्यः कर्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः, शास्त्रेभ्यो ये न व्युत्पन्नाः, न चाप्यस्येदं वृत्तमसुष्मात् कर्मण इत्येतद्युक्तियुक्त-कर्मफलसंबन्धप्रकटनकारिभ्यो मित्रसम्मितेभ्य इतिहासशास्त्रेभ्यो लब्धव्युत्पत्तयः...

(८) काव्यानाञ्च महाकविसम्बन्धिनाम्...=ध्व. आ. (१६पृः)

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥
...येनास्मिन्...संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते ।

(८) हेतुर्न तु हेतवः=तु. का. आ. (१।१०३)

नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् । तु. का. आ. १।१४
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥

(१२) रसस्य हि प्राधान्यान्नालङ्कारता=ध्व. आ. (२१४)

वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥

(१४) न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य=ध्व. आ. (३३ पृ.)

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥

(१७) चित्रमिति गुणालङ्कारयुक्तम्=ध्व. आ. (२२०-२२१ पृः)

चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।......किन्तु यदा रसभावादि-विवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति तदा तद्विवक्षाऽपेक्षया रसादिशून्यताऽर्थस्य परिकल्प्यते । (२२१पृ.) काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम् । (ध्व.आ.वृ. २२०पृ.) ।

## द्वितीय उल्लास

(१६) तात्पर्यार्थोऽपि केषुचित्=ध्व आ ( १८६ १६० पृ ) तु

शब्दान्तरेण स्वार्थाभिधायिना यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता । न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययो ( ध्व आ ३।१० ११ ) । यत पदार्थप्रतीतिरसत्यैवेति कैश्चिद्विद्वद्भिरास्थितम् ।

(२४) वस्तुधर्मोऽपि द्विविध —अ ह मा ( ४ पृ ) यस्य च वस्तुधर्मत्वेनोपाधेरवस्थान तस्यापि द्वैविध्य साध्यसिद्धताभेदात् ।

पदार्थस्य प्राणप्रदो जाति गौ इति=अ ह गा ( ४ ५ पृ ) कस्यचित् खलु सिद्धस्योपाधिपदार्थस्य प्राणप्रदता यथा जाते । न हि कश्चित् पदार्थो जाति सम्बन्धमन्तरेण स्वरूपं प्रतिलभते । यदुक्त वाक्यपदीये न हि गौ स्वरूपेण गौ नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौ रिति ।

(२५) साध्य पूर्वापरीभूतावयव क्रियारूप म भा (१।३।१)

क्रियावचनो धातु क्रिया नामेयमत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुम् । आख्यातपदवाच्या पूर्वापरीभूतावयवा ( म भा प्र )

(२५) चतुष्टयो महाभाष्यकार =म भा ( १।१।२ ) चतुष्टयी शब्दाना प्रवृत्तिर्जातिशब्दा गुणशब्दा क्रियाशब्दाश्चतुर्था । अ ह मा ( ४ पृ ) तस्य मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदत ।

(२५) डित्थादिशब्दानां सज्ञारूपो =प्र प्र ( २०= पृ )

एव डित्थादिशब्दानां सत्त्वविदितात्मनाम् ।

अभिधयस्य सामान्यशून्यत्वाद्यक्तिरुच्यते ॥

(२५) गुणक्रियायदृच्छानां भेदात्—अ ह मा ( ६ ५ पृ ) गुणक्रिया शब्दस ज्ञिव्यक्तीनामेव तदुपाधिनिबन्धनभेदमुपामेकाकारताऽवगतिनिबन्धनत्व न तु जातेरिति भगवतो महाभाष्यकारस्याभिमतम् । यथा ह्येकमेव मुख तैलखड्गोदकादर्शादीनां प्रतिबिम्बाधारतिनिबन्धनानां भेदान्नानाऽऽकारत्वेन प्रत्यवभासते । अतश्च न शुक्लादिशब्दानां जातिशब्दत्वम् । प्र प्र (२०६१) यथा कावादर्शादकादिषु यथा जलादिभिर्व्यक्त मुखमेवाभिधीयते ।

तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते ॥

(२६) हिमपयः...जातिरेव प्रवृत्तिनिमित्तमित्यन्ये=श्र. प्र. (२०५-२०६ पृ:)
जातिरेव हि शब्दार्थ इति जैमिनीया...कथं पुनराश्रयाः शब्देनासंस्पृश्यमानभेदा अपि जातिभेदावगमाय कल्पन्ते ? यथा चक्षुरादयो...प्रतिपत्तये।

(२७) तद्वान्...शब्दार्थः=न्या. म. (१५-२६३ पृ.) जातिमती व्यक्तिः शब्दार्थः। गवादिशब्दैस्तद्वतोऽभिधानात्।...ननु कोऽयं तद्वान्नाम ? तस्यास्तीति तद्वान् विशेष एवाकारसामान्यवानुच्यते। (श्र. प्र. २०८ पृ.)

(२७) अपोहो वा शब्दार्थः......=नाप्यन्यव्यावृत्तिमात्रं किन्त्वन्यापोहविशिष्टो विधिः शब्दानामर्थः।...शब्दैस्तावन्मुख्यमाख्यायतेऽर्थस्तत्रापोहस्तद्गुणत्वेन गम्यः।... (ज्ञानश्रीमित्रनिबन्धावली—अपोहप्रकरण २०३ पृः) *Vide* the paper *The Neo-Buddhistic Nucleus in Alankāraśāstra. J. As. Soc. Lett.* vol. xxii no. 1. p. 52.

(२७) शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा=श. व्या. वि. (२ पृ.) एवं वाच्यवाचकार्थनिष्ठो व्यापारावभिधालक्षणे। अ.वृ.मा. (४ पृ.) मुख्यलाक्षणिकार्थविषयोपवर्णनद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च।

(२७) गौरनुबन्ध्य इत्यादौ...लक्षणा नोदाहर्तव्या।=श्र. प्र. (२०६ पृ:) ननु च व्यक्तिलक्षणया सर्वमुपपद्यते। नैवम्...व्यक्तिमेव शक्तिसंख्याऽनुरञ्जितां कार्योपयोगिनीं पश्यामः। अत एव चालम्भनप्रोक्षणविशसनादयो जातौ न विधीयन्ते।

(३३) भेदाविमौ...गौणौ शुद्धौ च विज्ञेयौ...=तु. श्र. प्र. (२४६ पृ:) यदुपात्तशब्देषु मुख्यगौणीलक्षणाभिः शब्दशक्तिभिः...अभिधीयते तदभिधीयमानम्।

(३४) अत्र हि...उपयान्तीति केचित्=श. व्या. वि. ३ पृ.
...'न परार्थोऽभिधीयत इत्यपरे। ('अपरे''अन्ये'शब्दयोर्व्यत्यासः)...परार्थ एव लक्ष्यत इत्यन्ये। उद्भट (N. S. edn का. अ. सा. सं. ल. वृ. १० पृ.) :— (भा. वि. ?) केचिच्छब्दारोपपूर्वमर्थारोपं ब्रुवते। अपरे विपर्ययम्। अन्ये यौगपद्यम्। एष एव शुक्रः पन्था इव दृश्यते। अ. वृ. मा. (८ पृ.)—गौर्वाहीक इति, अत्र हि गोशब्दगोत्वयोरुपचारः।...

(३६) क्वचित् स्वस्वामिभावात्...अवयवावयविभावात्=म. भा. (४।१।४८.२१८ पृ.) चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति। तादर्थ्यात् ताद्धर्म्यात् सामीप्यात् साहचर्यादिति। (प्रदीप and उद्योत तु.)

(३६) लक्षणा। तेन यद् विधा=अ २ मा (८ पृ.) एतेन चतुर्विधेनोपचारेण शुद्ध पूर्वोक्तौ द्वौ लक्षणाभेदौ सकलाय षट्प्रकारा लक्षणा वक्तव्या।

(४०) नाभिधा समयाभावात् लक्षणा=ध्व आ लो (१८ पृ)

व्यापारश्च नाभिधाऽऽत्मा समयाभावात्। न तात्पर्यात्मा तस्यान्वयप्रतीतावेव परिक्षयात्। न लक्षणाऽऽत्मा, उक्तादेव हेतोः स्खलद्गतित्वाभावात्।

(४०) न न शब्द स्खलद्गति —=ध्व आ (१।२०)

मुख्या वृत्ति परित्यज्य गुणवृत्त्यार्थदर्शनम्।
यदुद्दिश्य फल यत्र शब्दो नैव स्खलद्गति ॥

(४१) एवमप्यनवस्था स्यात् =तु न्या म (२१ पृ)

मूलक्षतिकरीमाहुरनवस्था हि दूषणम्।
मूलसिद्धौ त्वरुच्याऽपि नानवस्था निवार्यते ॥

(४४) सामर्थ्यौचितीदेश =वा प (२।३१६)

वाच्यात् प्रकरणादर्थादौचित्याद्देशकालत ।
पदार्थ प्रविभज्यन्ते न शब्दादेव केवलात् ॥ (वा प्र २२का ८६पृ ४)

## तृतीय उल्लास

पृ

(५४) आदिग्रहणाच्चेष्टाऽऽदे =ध्व आ (१८६ पृ)

अशब्दस्यापि चेष्टाऽऽदेरर्थविशेषप्रकाशनप्रसिद्धे ।

(५५) लक्ष्यव्यञ्जकयोश्च व्यञ्जकत्वमुदाहार्यम्=पदे चालक्ष्यक्रमव्यङ्ग्यस्य द्योतकत्व यथा (ध्व आ १३१ पृ) विभावादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति तदा पदस्यैवासौ महिमा समर्प्यते। (ध्व आ लो १३१ पृ)

(५६) न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जक =ध्व आ (१८६ पृ)

भिन्नविषयत्वात् भिन्नरूपत्वाच्च स्वार्थाभिधायित्वमर्थान्तरावगमहेतुत्व न शब्दस्य। शब्दव्यापारगोचरत्व तु तस्यास्माभिरिष्यत एव।

## चतुर्थ उल्लास

पृ

(६०) उपकृत बहु तत्र =ध्व आ लो (५६ पृ)

यथा शत्रुमुद्दिश्य कश्चिद्ब्रवीति— किमिवोपकृत न तेन ममे ति।

(६०) रसस्तैर्न लक्ष्यते=ध्व. आ. (१८५ पृ.)

तत्र तु शब्दस्य क्रियापौर्वापर्यमनन्यसाध्यतत्फलघटनास्वाशुभाविनीषु ··रसादौ न प्रतीयते। ध्व. आ. ( पृ. २६ ) वाच्येन त्वस्य सहैव प्रतीतिः। ( ध्व. आ. लो. पृ. २६ ) 'इव' शब्देन विद्यमानोऽपि क्रमो न संलक्ष्यते।

(६१) गुणीभूतव्यङ्ग्ये रसवद्······=ध्व. आ. (२१६)

रसभावादितात्पर्य'''अलङ्कारत्वसाधनम्॥'''एवं ध्वनेः...रसवदलङ्कारस्य न विभक्तविषयता भवति।...अनेन भावाद्यलङ्कारा अपि प्रेयस्वूर्जस्विसमाहितादयो गृह्यन्ते। (ध्व. आ. लो. ७५ पृ.)

(७५) व्याघ्रादयो विभावा...अनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।=तत्रानुभावानां विभावानां व्यभिचारिणां च पृथक् स्थायिनि नियमो नास्ति बाष्पादेरानन्दाक्षिरोगादिजत्वदर्शनात्, व्याघ्रादेश्च क्रोधभयादिहेतुत्वात्।

( अ. भा. १म खण्ड २८४ पृ. )

(७८) अपरस्तु शापहेतुक इति पञ्चविधः=तु. द. का. अ. (१४।१)

अथ विप्रलम्भनामा शृङ्गारोऽयं चतुर्विधो भवति।

प्रथमानुरागमानप्रवासकरुणात्मकत्वेन॥ तु. शृ. प्र. (२५४ पृ.) स (विप्रलम्भः) चतुर्धा प्रथमानुरागो मानः प्रवासः करुण इति।

(८६) निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः=तुः ना.शा अ. भा. (३३२-३३ पृ.)

शान्तो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः।···व्यभिचारिणश्चास्य निर्वेदस्मृति'''रोमाञ्चादयः।

(९२) आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया=तु. ना. शा. अ. भा. (३४१ पृ.)

आर्द्रतास्थायिकः स्नेहो रस इत्यसत्। एवं वृद्धस्य पुत्रादाविति द्रष्टव्यम्। ···एवं भक्तावपि वाच्यमिति।

(९३) तदाभासा अनौचित्यप्रवर्तिताः—ध्व. आ. लो. (२४ पृ.)

औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो व्यभिचारिण्या भावः। अनौचित्येन तदाभासः रावणस्येव सीतायां रतेः। ( औ. वि. च. १२९ पृ. )

कुर्वन् सर्वाशये व्याप्तिमौचित्यरुचिरो रसः।
मधुमास इवाशोकं करोत्यङ्कुरितं मनः॥

(६४) तस्य प्रशान्तिरुदय ''=ध्व आ लो (६५-६६ पृ)

व्यभिचारिण उदयस्थितिरपायतिधर्मका । कस्मिंश्चित्तु व्यभिचारिणि प्रशमावस्थया प्रयुक्तश्चमत्कार । कस्मिंश्चित्तु व्यभिचारिणि सन्धिरेव चर्वणास्पदम् । कस्मिंश्चिद्व्यभिचार्यन्तरशबलतैव विश्रान्तिपदम् । '' एवमन्यदप्युत्प्रेक्ष्यम् । एतानि चोदयसन्धिशबलत्वादिकानि कारिकायामादिग्रहणेन गृहीतानि ।

(१०१) अलङ्कारोऽसापि ब्राह्मणश्रमणन्यायेनालङ्कारता=ध्व आ लो (१५ पृ)

य पूर्वं क्वापि काव्यालङ्कारभावमुपमाऽऽदिरूपतयाऽन्वभूत्, इदानीं त्वनलङ्काररूप एवान्यत्र गुणीभावाभावात् पूर्वं प्रत्यभिज्ञानबलादलङ्कारध्वनिरिति व्यपदिश्यते ब्राह्मणश्रमणन्यायेन ।

(१०६) अत्र विरोधालङ्कारेण =का अ सू वृ (४ ३।२६)

विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ।

(१ ६) अत्र किमिति उत्तरालङ्कारेण=छ का अ. (८।७२)

यत्र ज्ञातादन्यत् पृष्टस्तस्वेन वक्ति तत्तुल्यम् ।
कार्येणानन्यसमाख्यातेन तदुत्तर ज्ञेयम् ॥

(११०,११७) अत्र हेत्वलङ्कारेण =छ का अ (७।८२)

हेतुमता सह हेतोरभिधानमभेदकृद्भवेद्यत्र ।
सोऽलङ्कारो हेतु स्यादन्येभ्य. पृथग्भूत ॥

(११६) यथा गृध्रगोमायुसवादादौ=ध्व आ (१४२ पृ)

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्योऽपि य प्रभेद उदाहृतो द्विप्रकार. सोऽपि प्रबन्धेषु केषुचित् द्योतते । यथा गृध्रगोमायुसवादादौ महाभारते ।

(१२३) पदैकदेश रसादय =अ प्र तु ३य प्र ६१-६६पृ, ४र्थ प्र. १५८ पृ, ६ष्ठ प्र १७३ १८२ पृ, व जी २यउ ११२-१३१ पृ द्र.

(१३३) अत्र 'लिप्ते ति सङ्कर =ध्व आ लो ६१-६२ पृ

तथासख्यत्वादभिधाव्यापारेणाशक्यसमर्पणमपि एकधीविषयीभावाभावाच्च चित्तचर्वणापदमिति न चारुत्वातिशयकृत् । प्रतीयमान तु तदसख्यमनुद्भिन्नविशेषत्वेनैव किं किं रूप न सहत इति चित्तपानकरसगुडमोदकस्थानीय विचित्रचर्वणापद भवति ।

पृ॰

## पञ्चमः उल्लासः

(१४०) एते च रसवदाद्यलङ्काराः...=का. प्र. सा. स (४२ का, ४७ पृ.)
प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ।...यदुक्तं भट्टोद्भटेन चतूरूपा भावा (४८पृ.) इति ।...पञ्चरूपा रसा इति (४६ पृ.) । अत्र च भावानामलङ्कारता काव्यमलंकार्यम् । (का. प्र. सा. स ल. टृ. ४८ पृ.) रसाः खलु तस्यालङ्काराः । (ल. टृ. ५० पृ.)

(१४७) मध्नामि कौरवशतं...... =ध्व. आ. लो. (२१३ पृ.) काकुयोजनायां सर्वत्र गुणीभूतव्यङ्ग्यतैव । अत एव 'मध्नामि कौरवशतं समरे न कोपात्' इत्यादौ ये विपरीतलक्षणामाहुस्ते न सम्यक्परामर्शाः ।

(१४७) वाणीरकुडङ्गुड्डीण ......=ध्व. आ. (११६-१२० पृ.)
एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम् ।

(१५१-५२) रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य =ध्व. आ लो. (१५ पृ॰)
यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुदितप्राङ्निविष्टरत्यादिवासनाऽनुरागसुकुमारस्वसंविदानन्दचर्वणव्यापाररसनीयरूपो रसध्वनिरिति ।

(१५४) शब्दवृद्धाभिधेयाश्च......=श्लो वा. सम्बन्धाक्षेपपरिहारश्च (१४०-४१ श्लो).
वक्ता वाक्यं प्रयुङ्क्ते च सङ्घातार्थविवक्षया । न्या. प्र
तथैव बुध्यते श्रोता तथैव च तदस्थितं ।.....
अतो न शक्त्यन्तरमपेक्ष्यते ।
...वृद्धव्यवहारो वाक्येन न पदेन । (न्या म १म ख ३६४ ७२ पृ)

(१५७) यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन =ध्व आ (६० पृः)
सोऽयमित्यभिसंबन्धसामर्थ्ययोगी शब्दस्य कश्चन ।
यत्नात्‌ प्रत्यभिज्ञेयौ तौ शब्दार्थौ महावचे ॥

(१५७) 'निःशेषच्युतचन्दनं' इत्यादेश्चर्चा=यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते स न वस्तुतत्त्ववेदी । विभावानुभावप्रतिपादके हि वाक्ये तात्पर्यशक्तिर्भेदसंसर्गे वा पर्यवस्येत् । न तु रस्यमानतासारे रसे । (ध्व आ. लो. २६ पृः)

(१५८) यदप्युच्यते नैमित्तिकानुसारेण... ..=निमित्तेषु सकेत. नैमित्तिकस्त्वसावर्थ इति

सङ्केतानपेक्ष एवेति चेत्, पश्यत श्रोत्रियस्यानुवाक्हृतबुद्देकक्लिष्टोशालम्। यो ह्यसौ पर्यन्तकक्षाभागार्थः प्रथमं प्रतीतिपथमवतीर्णस्तस्य पश्चात्तनाः पदार्थां निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रतीतं प्रति नैमित्तिकत्वमभिमतम्।
(ध्व. आ. लो. १८-१९ पृ.)

(१५९) सोऽयमिषोरिव...=ध्व. आ. लो. ( १८ पृ. ) योऽप्यन्विताभिधानवादी "यत्परः शब्दः स शब्दार्थः" इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घ-मिच्छति तस्य यदि दीर्घदीर्घो व्यापारस्तदेकोऽसाविति कुतः ? भिन्नविषयत्वात्।
यदप्यन्ये मन्यन्ते वाच्यावगमोपक्रमः प्रतीयमानार्थान्तरावसायपर्यन्तोऽयमेक एव दीर्घदीर्घः शब्दस्येषोरिव व्यापारः······तदयुक्तम्।······क्वचायं विषमः शरदृष्टान्तोपन्यासः। (व्य. वि. १२२-२३ पृः)

(१६१) यत्तु 'विषं भक्षय'·=व्य. वि. ( १२१-१२२ पृ. ) 'विषं भक्षय मा चास्य गृहे भुङ्क्था' इत्यादावपि यदेतत् विषभक्षणानुज्ञानं तदर्थप्रकरणादिसहायम्······ न शब्दस्य तत्र व्यापारः परिकल्पनीयः।

(१६२) यदि च शब्दश्रुतेरनन्तरं···=ध्व आ. लो ( २४-२५ पृ. ) विभावाद्यर्थोऽपि पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेवोच्यते।

(१६२) श्रुतिलिङ्गवाक्यप्रकरण···सिद्धं व्यञ्जयत्वम्=ध्व. आ. लो. (१९ पृ)
अन्यथा गौणलाक्षणिकयोर्मुख्याद्भेदः श्रुतिलिङ्गादिप्रमाणषट्कस्य परदौर्बल्यम् इत्यादिप्रक्रियाविघातः। निमित्ततावैचित्र्येणैवासां सामर्थ्यान्निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया।...काव्ये वाक्यधर्मास्तदुदाहरणानि च श्टं. प्र. ६ प्र. ( ३०५-३२८ पृः )।

(१६४) कुरु रुचिम् इति=श्रुतिदुष्टा अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिणः···। यथा कुरु रुचिमित्यत्र क्रमव्यत्यासे (ध्व. आ. लो. ८२पृ.)

(१६५) अयमेव हि भेदो भेदहेतुर्वा=
यदाह...'अयमेव हि भेदो...( ज्ञानश्रीमित्रनिबन्धावली क्षणभङ्गाध्याय ४६ पृः ) न तु तावतासौ नास्त्येवेति शक्यः कल्पयितुं तत्सद्भावस्य न्यायसिद्धत्वात्। न हि भङ्गिभणितिविषमे वर्त्मनि प्रवर्तमाना प्रतीतिरपरिस्खलितक्रमेणैव प्रवर्तेत इत्युपपद्यते कारणभेदस्यापि कार्यभेदहेतुत्वोपगमात्। (व्य. वि. २५४ पृ.)

(१६७) तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थं स्वशब्दानभिधेय कस्य व्यापारस्य विषयतामवलम्बताम्=ध्व आ ( १६२-१६३ पृ ) अत्र नास्य स्वरूपभेद — यद्गुणवृत्तिरमुख्यत्वेन व्यवहित वाचकत्वमेवोच्यते व्यञ्जकत्वन्तु वाचकादत्यन्त विभिन्नमेव ।

(१६८) लक्षणीयस्यार्थस्य नानात्वे नियतत्वमेव द्योत्यते=ध्व आ (२३ पृ) क्वचिद्वाच्याद्वि भिन्नविषयत्वेन व्यवस्थापितो यथा—ध्व आ लो २३ पृ. द्र

(१६९) न च लक्षणाऽऽत्मकमेव ध्वनन =ध्व आ लो (१८ पृ) अत एव यत् केनचि च्चक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रम् । न खलु लक्षणाऽत्यन्ततिरस्कृतान्य संक्रमणयोरभावात् । न ह्यर्थशक्तिमूलेऽस्या व्यापार । सहकारिभेदाच्च शक्तिभेद स्पष्ट एव । तु लक्षणामार्गावगाहित्व तु ध्वने सहृदयैर्नूतनतयोपवर्णितस्य विद्यत इति दिशमु न्मीलयितुमिदमवोक्तम् । तदेव वाच्यस्य तिरस्कृतविवक्षाया विषय विभागो निरूपित । (अ द्र भा २१ पृ)

(१७१) अखण्डबुद्धिर्निर्ग्राह्यो वाक्यार्थं एव वाच्य तैरप्यविद्यापदपतितै पदपदार्थकल्पना कर्तव्यैव ।–ध्व आ लो ( १६ पृ ) येऽप्यविभक्त स्फोट वाक्य तदर्थं रूपमित्याहुस्तैरप्यविद्यापदपतितै सर्वैयमनुसरणीया प्रक्रिया ।

(१७) अत्र गृहे भ्रमणमनुमापयति –व्य वि तु ( ४०० पृ ) अत्र हि द्वावर्थौ वाच्यप्रतीयमानौ विधिनिषेधात्मकौ क्रमेण प्रतीतिपथमवतरत तयोर्धूमाग्न्योरिव साध्यसाधनभावेनावस्थानात् । द्वितीयस्तत एव हेतो पर्यालोचितनिजार्थस्य विवेकिन प्रतिपत्तुः प्रयोजकस्वरूपनिरूपणेन सामर्थ्यात् प्रतीतिमवतरति ।

(१७७) व्यक्तिवादिना वाचकपदसहायानामेषा व्यञ्जकत्वमुक्तम्=ध्व आ (२०२पृ) वक्त्रभिप्रायरूपव्यङ्ग्ये लिङ्गतया शब्दाना व्यापार । तद्विषयीकृते तु प्रतिपाद्यतया प्रतीयमाने सम्बन्धान्तरे व्यञ्जकत्वमेव ।

पृ. षष्ठ उल्लास

(१८०) गुणप्राधान्यतस्तत्र =ध्व आ ( १६० पृ ) गुणप्रधानभावेन तयोर्व्यवस्था नात् । ( तु -गुणप्राधान्यम् । )

(१८३) स्फुटस्य रसस्यानुपलम्भात् =ध्व आ ( २२० २२१ पृ ) न च तदस्ति वस्तु किञ्चिद्यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव न स्यात् ।

अतोच्यते । सत्यम्, न तादृक् काव्यप्रकारोऽस्ति यत्र रसादीनामविप्रतिपत्तिः । किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति तदा तद्विवक्षाऽपेक्षया रसादिशून्यताऽर्थस्य परिकल्प्यते ।

पृ: सप्तम उल्लासः

(१८४) उपयोगिनः स्युः शब्दाद्याः...=व्य. वि. ( १५०-१५२ पृ. ) अन्तरङ्गबहिरङ्ग-भावस्थानयोः साक्षात् पारम्पर्येण च रसभङ्गहेतुत्वादिष्टः ।

(१८७) दुष्टं पदं...=द. का. श्र ( ६।२ )

असमर्थमप्रतीतं विसन्धि विपरीतकल्पनं ग्राम्यम् ।
अव्युत्पत्ति च देश्यं पदमिति सम्यग्भवेद् दुष्टम् ॥

अपरं पुनर्बहिरङ्गं बहुप्रकारं सम्भवति । तद्यथा... । अन्तरङ्गभावस्थानयोः साक्षात् पारम्पर्येण च रसभङ्गहेतुत्वादिष्टः । ( व्य. वि. १५०-५२ पृ. )

(१८८) विधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्...=रु. का. अ. ( ६।१७-२२ )

यदनुचित तत्र पदं तत्तद्दोषोपजायते ग्राम्यम् ।
पदमिदमनुचितमपरं सभ्यासभ्यार्थवाचि ॥...

(१८७) विरुद्धमतिकृद्यथा अकार्यमित्रमेकोऽसौ=रु. का. अ. ( ६।१६ )

पूर्वार्थप्रतिपन्थी यस्यार्थः स्पष्ट एव संभवति ।
विपरीतकल्पन तद्भवति पदमकार्यमित्रमिव ॥

(१८८) अपास...वाक्येऽपि...=रु. का. अ. (६।१)

पदवाक्यस्थौ दोषौ वाक्यविशेषप्रयोगनियमेन ।
यः परिहृतस्ततोऽन्यस्तदतिव्याप्तिश्च सह्यते ॥

नमिसाधुटीका—कथमिहोच्यते पदवाक्यस्थ इति ।...यतः कश्चिदाशङ्केत यथा वाक्यस्य एव दोषस्ते परिहृतो न पदस्य इति तथा पदमहणाभावे ततोऽन्य इति । पृथक्करणं तु तस्य दोषस्य महीयस्त्वख्यापनार्थम् । ग्र. प्र. ( ६म प्र: ) तत्राद्युक्तैव पददोषनिरूपणा ।

(२११) तथाऽप्यन्यैरलङ्कारकारैर्विभागेन दर्शिता इति...=व्य.वि. (१५०-१५१पृः) व्य. वि. ( ३७६ पृ. तु. ) अनेन च वाच्यावचनेन सामर्थ्यादवाच्यवचनमपि सगृहीतं वेदितव्यम् ) ।

रु. का. अ. ( ६।२,८,११ )—असमर्थमप्रतीतं विरोधि विपरीतकल्पनं ग्राम्यम् ।
अव्युत्पत्ति च देश्यं पदमिति सम्यग्भवेद्दुष्टम् ॥
···युक्तधा तमर्थं न च रूढं यत्र यदभिधानतया ।
द्वेधा तदप्रतीतं संशयवदसंशयं पदम् ॥

(२११) प्रतिकूलवर्णम्···=रु. का. अ. (६।४०)
वाक्यं भवति तु दुष्टं संकीर्णं गर्भितं गतार्थं च ।
यत् पुनरनलंकारं निर्दोषं चेति तन्मध्यम् ॥

(२२०) अर्थोऽपुष्टः···=रु. का. अ. (११।२)
अपहेतुरप्रतीतो निरागमो बाधः यत्र संबद्धः ।
ग्राम्यो विरसस्तद्वानतिमात्रश्चेति दुष्टोऽर्थः ॥

(२२८) सुकुमारविचित्रमध्यमात्मकत्रिमार्गी भारती=व. जी. (४५ पृ.)
सन्ति तत्र त्रयो मार्गाः कविप्रस्थानहेतवः ।
सुकुमारो विचित्रश्च मध्यमश्चोभयात्मकः ॥

(२४१) वक्त्राद्यौचित्य...=रु. का. अ. ( ६।४७ ) :—
अनुकरणभावमविकलमसमर्थादिस्वरूपतो गच्छन् ।
न भवति दुष्टमतादृग्विपरीतक्लिष्टवर्णं च ॥

(२३६) स्थितेष्वेतत्समर्थनम्=का. आ. सू. वृ. ( २।१।१६ ) तदिदमुक्तं प्रयुक्तेषु नाप्रयुक्तेषु ।

(२४१) अनुकरणे तु सर्वेषाम् ·· मृगचक्षुषमद्राक्षम्=रु. का. अ. ( ६।४७ )
अनुकरणभावमविकलमसमर्थादि स्वरूपतो गच्छन् ।
न भवति दुष्टमतादृग् विपरीतक्लिष्टवर्णं च ॥

ध्व. आ. लो. (३ पृ.)—एवं हि ध्वनिशब्दः···गविलयमाहेति यथा । रु.का.अ. ( २।४ न. सा. टीका ) यथा गविलयमाहेति ।

(२४४) अश्लीलं क्वचिद्गुणो यथा=का. आ. सू. वृ. ( २।१।१६-१६ )

(२५२) व्यभिचारी रसः······रसदोषाः स्युरीदृशा =रु. का. अ. ( ११।६-१२, १४ )
ग्राम्यत्वमनौचित्यं व्यवहाराकारवेषवचनानाम् ।
देशकुलजातिविद्यावित्तवयःस्थानपात्रेषु ॥............

य सावसरोऽपि रसो निरन्तर नीयते प्रबन्धेषु ।
अतिमहती वृद्धिमसौ तथैव वैरस्यमायाति ॥

ध्व श्रा ( ७।१० १४ )

विभावानुभावसञ्चार्यौचित्यचारुण ।

न तु केवलया शास्त्रस्थितिसपादनेच्छया ।

(२४६) तद्वर्णन हि पित्रो सम्भोगवर्णनमिव =ध्व श्रा ( १४४ १४७ पृ )
तस्मादभिनेयार्थे च काव्ये वदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभि सह यत् ग्राम्यसम्भोगवर्णन तत् पित्रो सम्भोगवर्णनमिव सुतरामसभ्यम् । स तु न लक्ष्यते श्री वि च (श्री मा १म यु १२० पृ )—यथा वा कालिदासस्य कुमार अताम्बिकासम्भोगवर्णने त्रिलोचनस्य भगवतस्त्रिजगद्गुरोर्यदुक्त तेनानौचित्यमेव पर प्रबन्धार्थं पुष्णाति ।

(२४६) अनङ्गस्य =ध्व श्रा ( १४५-१५० पृ ) रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थिति । न न राजादिष्वप्रसिद्धग्राम्यश्रृङ्गारोप निबन्धन प्रसिद्ध नाटकादौ । तथैवोत्तमदेवताविषयम् । न तु केवल शास्त्र-स्थितिसम्पादनेच्छया यथा वेणीसहारे द्वितीयेऽङ्के । पुनरारब्धविश्रान्ति रसस्याङ्गिनोऽनुसन्धिश्च ।

(२६१) तस्य मनोरमा रामा =ध्व श्रा श्लो ( १८० ८१ पृ )
न खल्वलीकवैराग्यकातुककल्पि प्रकटयाम- अपि तु यस्य कृते सर्वमभ्यर्थ्यते तदेवेद चलमिति तत्र मत्ताङ्गनाऽपाङ्गभङ्गस्य लोलश्रृङ्गार प्रति सम्भाव्यमान विभावानुभावत्वेनाङ्गस्य लोलतायामुपमानतोक्तेति प्रियतमाकटाक्षो हि सर्व स्याभिलषणीयो भवतीति तत्प्रतीत्या प्रवृत्तिमान् गुडजिह्विकया प्रसक्तानुप्रसक्त-वस्तुतत्त्वसवेदनेन वैराग्ये पर्यवसति विनेय ।

श्री वि च ( का मा १म यु १३२पृ ) अत्र भगवता जन्तुहिताभिनिविष्टेन मोक्षलक्षणोपदेशेऽङ्गिन शान्तरसस्य रागिजनानिष्टत्वात् सकलजनन प्रह्लादने बालगुडजिह्विकया श्रृङ्गारेऽङ्गभावमुपनीते पर्यन्ते परिनिर्वाहेण परममौचित्य मुच्चैः कृतम् ।

(२६६) अथ स रसानौत्वर्षो करुण परिपोषयति=ध्व श्रा ( १३६ पृः )
तस्माद्वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी यो रस स रसविरोधीति वक्तु

न्याय्यः। न त्वङ्गभूतस्य कस्यचित्।...अथवा वाक्यार्थीभूतस्यापि कस्यचित् करुणरसविषयस्य तादृशेन शृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते।

(२६७-६८) क्षिप्तो हस्तावलग्नः......करुणेन मुख्य एवार्थ उपोद्बल्यते

=ध्व. आ. लो. ( १३८ पृ॰ ) एतदुक्तं भवति......यद्यप्यत्र करुणोऽपि पराङ्गमेव तथापि विप्रलम्भापेक्षया तस्य तावन्निकटं प्राकरणिकत्वं...ततः प्रतीयमानोऽप्यसौ विप्रलम्भः समनन्तराभिधीयमाने 'स दहतु दुरित'मित्यादौ साटोपाभिनयसमर्पितो यो भगवत्प्रभावस्तत्राङ्गतायां पर्यवस्यतीति न कश्चिद्विरोधः। ...ध्व. आ. लो. ( १७१ पृ. ) अङ्गीभूतान्यपि रसान्तराणि......स चमत्कारस्तावत्येव न परितुष्य विश्राम्यति।...अयमेवोदन्तः। यदाह तत्रभवान् गुणः कृतात्मसंस्कारः...।

पृ. अष्टम उल्लासः

(२७०) रसस्यैव माधुर्यादयो न वर्णानाम्...गुणवृत्त्योपचारेण=ध्व. आ. ( ७८पृ॰ )
तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
( ध्व. आ. लो. ७६-८७ पृ. )
ननु शब्दार्थयोर्माधुर्यादयो गुणास्तत् कथमुक्तं रसादिकमङ्गिनं गुणा आश्रिता इत्याशङ्क्याह...एतदुक्तं भवति—वस्तुतो माधुर्यं नाम शृङ्गारादे रसस्यैव गुणः। तन्मधुराभिव्यञ्जकयोः शब्दार्थयोरुपचरितम्। मधुरशृङ्गाररसाभिव्यक्तिसमर्थता शब्दार्थयोर्माधुर्यमिति हि लक्षणम्।

(२७१) हारादिवदलङ्काराः...=ध्व आ ( ३१७ ) अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।

(२७२) तत् कथमसमस्तगुणा गौडी.........काव्यस्यात्मा=का. अ. सू. वृ. ( १।२।११, १२, १३-१७ )
समग्रगुणोपेता वैदर्भी।.......ओजःकान्तिमती गौडीया।.......तासां पूर्वा ग्राह्या गुणसाकल्यात्।.......न पुनरितरे स्तोकगुणत्वात्। इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये स्तोकगुणत्वात्।

(२७३) माधुर्यं शृङ्गारे द्रुतिकारणम्=ध्व. आ. ( २१८ )

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥······

(ध्व. आ. लो.) सम्भोगशृङ्गारान्मधुरतरो विप्रलम्भः, ततोऽपि मधुरतमः करुण इति तदभिव्यञ्जनकौशलं शब्दार्थयोर्मधुरतरमधुरतमत्वं चेत्यभिप्रायेणाह··· ।

(२७६) ओजो वीररसस्थिति=ध्व. आ. (२।१०) रौद्रादयो रसाः···· ।
···ओजो व्यवस्थितम् ॥

(२७६) श्रव्यत्वं पुनरोजसोऽपि=ध्व. आ. ( ३।८ ) श्रव्यत्वं पुनरोजसोऽपि ।
( ध्व. आ. लो. ) ननु श्रव्यं नातिसमस्तार्थं···नेत्याह ।

(२७७) शुष्केन्धनाग्निवत्=ध्व. आ. लो. ( ८२ पृ: )
झगिति शुष्ककाष्ठाग्निदृष्टान्तेनाकलुषोदकदृष्टान्तेन च तदकालुष्यं प्रसन्नत्वं नाम सर्वरसानां गुणः । ( द्र. का. प्र. वि. २७७ पृ: शुष्केन्धनेति—अनार्द्रकाष्ठवह्नि-दृष्टान्तेन हृदयसंवादेन······झटिति व्यापकत्वम् । अकलुषोदकदृष्टान्तेन च भावाकालुष्यं प्रसन्नत्वम् । )

(२८३) वर्णाः समासो···=तु. ध्व. आ. (३।३-४)

(२८७) कश्चिद्वक्तृप्रबन्धापेक्षया······रचनाऽऽदय=ध्व. आ. ( ३।७-६ )
विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति ।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ॥
···  ···  ···
रचनाविषयापेक्षं तत्तु किंचिद्विभेदवत् ॥

(२८७) कश्चिद्वक्तृवाच्यानपेक्षया प्रबन्धाचिता एते=ध्व. आ. वृ. ( ३।६ )
प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम्···अभिनेयार्थे तु सर्वथा रसबन्धे अभिनिवेशः कार्यः । शृ. प्र. ११प्र. श्रव्यकाव्यप्रबन्धभेदलक्षणं द्र. ।

## पृ. नवम उल्लासः

(२६२) छेका विदग्धाः=का. अ. सा. स. ल. वृ. ( ४ पृ. )
छेकशब्देन कुलायाभिरतानां ·· । अथवा छेका विदग्धा ।

(२६८) पादतद्भाग···रूपताम्=रु. का. अ. (३।४०)
आवृत्तानि तु तस्यार्धान्य··· , रु. का. अ. (३।४२) पादास्त्रिधा विभक्ता··· दशधा यमकानि जनयन्ति ॥

(२६६) तदेतद् काव्यान्तर्गडुभूतमिति···=रु. का. श्र. ( ३।५६ न. सा. टीका )
कवेः क्लिष्टानि शक्तिमात्रं पोषयन्ति न तु रसवत्ताम्। यदुक्तम्—
यमकानुलोमतदितरचक्रादिभिदो हि रसविरोधिन्यः।
अभिधानमात्रमेतद्गड्डलिकाऽऽदिप्रवाहो वा॥

(३१४) तच्चित्रम्...=रु. का. अ. ( ५।१, ४ )
भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि।
साङ्गानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्॥
... ... .
भेदैर्विभिद्यमानं संख्यातुमनन्तमस्मि नैतदलम्।

पृ. **दशम उल्लासः**

(३२५) तेन तुल्यं क्रिया चेद्वतिः=का. श्र. सा. सं. ( १।१५-१६ ल. वृ. ) 'यथा'शब्दश्च श्रौतेन रूपेणोभयाधारमुपमानोपमेयभावमवद्योतयति। तेनेयं श्रौती······'तत्र तस्येवे'त्यनेन हि यो वतिर्विधीयते तस्येवार्थे विधीयमानत्वादिवशब्दवच्छ्रौतेन रूपेणोभयानुयायितयोपमानोपमेयभावावगतिनिबन्धनत्वम्।

(३२८) तद्रहितत्वेन तूदाह्रियमाणा विरसतामावहन्ति=ध्व. श्रा. लो. ( २।१७ )
अपृथग्यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः॥
...यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः। तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः।

(३३७) समेनोपमानेन=रु. का. अ. ( ८।९२ )
अतिसारूप्यादैक्यं विधाय सिद्धोपमानसद्भावम्।
आरोप्यते च तस्मिन्नतद्गुणादीति सोत्प्रेक्षा॥

(३५०) प्रतिपादकवाक्येन न तु विशेष्यसामर्थ्यादपि=का. अ. सा. स. २।३० ( लघुवृत्ति ३९पृ.)—यत्र प्रस्तुतार्थनिष्ठं वाक्यं तत्समानैर्विशेषणैः...सादृश्यवशादप्रस्तुतमर्थमुपमानभूतं कथयति सा संक्षेपेणोपमानोपमेयलक्षणार्थद्वितयाभिधानात् समासोक्तिः।

(३५०) श्लिष्टविशेषण···=( ध्व.श्रा.लो. ३७पृ. ) समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरात्मानं प्रालभत।

(३५६) एतत्तस्य मुखात् =ध्व आ लो ( ४२ पृ )
अस्तास्थाने ममत्वसम्भावन प्रस्तुतम् । अप्रस्तुतन्तु जलविन्दो वाच्यम् ।

(३५७) सुहृद्वधू कृष्ण निह्नल कथित =का अ सा स उ वि ( ४३ पृ )
परममित्रनरकासुरवधूर्यदि शार्ङ्गिण निह्नल नि शोका करोषि तत् त्वमेव श्लाघ्य
इति विशेषे प्रस्तुते क्वचित सामान्याभिधान यथा सुहृद्वधू

(३६२) वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा=का आ रा स ( ल वृत्ति २६पृ )
एतेय वस्तुनि वस्तुनि साधारणयोपनिबन्धात प्रतिवस्तूपमा ।

(३६४) सैव क्रियासु बह्वीषु दीपकम्=रु का आ (७।६४)
यदैकमप्यनेकेषा वाक्यार्थानां क्रियापद कारकपदमपि ।
भवति तद्वत् तदेतदिति दीपकपद द्वेधा ॥

(३८३) प्रत्यक्षा इव भूतभाविन =भा का अ ( ३।५२ )
भाविकत्वमिति प्राहु प्रबन्धविषय गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविन ॥

(३८३) भाव कवेरभिप्रायो =का आ ( २।३६९ )
भाविकत्वमिति प्राहु प्रबन्धविषय गुणम् ।
भाव कवेरभिप्राय काव्यष्वासिद्धि सस्थित ॥

(३८७) यं प्रेक्ष्य अस्तैरावणशक्री =का अ सा स उ वि (?) ( ४४ पृ )
यदा हयग्रीवदर्शने शक्रैरावणौ निर्मदा जाताविति वक्तव्ये य प्रेक्ष्य
इति भङ्ग्यन्तरेणाभिधीयते सा पर्यायोक्तता ।

(४०१) आयुर्घृतमित्यादिरूपो --रु का अ ( ७।८३ न सा टीका )
इदन्तूदाहरण यथा
आयुर्घृत नदी पुण्य भय चौर सुख प्रिया ।
वैर द्यूत गुरुर्ज्ञान श्रेयो ब्राह्मणपूजनम् ॥

(४२१) नयनानन्ददायीन्दो इति बहूनां सन्देहात् =का आ सा स उ वि (४४ ४६ पृ)
नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति इति मुखस्याध्यवसानात् किमतिशयोक्ति
कि दीपकम् कि तुल्ययोगिता किं मदनोद्दीपक कालो वर्तत इति
पर्यायोक्तमिति बह्वलकारसन्देहो भवतीत्युभयशब्दमत्रास्मानेकग्रहणम् ।

(४२७) तेनासौ त्रिरूपः परिकीर्तितः=तु. रु. का. अ ( १०।२५)

योगवशादेतेषां तिलतण्डुलवच्च दुग्धजलवच्च ।

व्यक्ताव्यक्तांशत्वात् संकर उत्पद्यते द्वेधा ॥ ध्व. आ. लो. ( ४०-४१ पृः ) ;

का. अ. सा. स. ( ५।२०, २२, २५ )

(४२८) उपमायामुपमानस्य...अधिकपदत्वं च=रु. का. अ. ( ११।२४-२५ )

सामान्यशब्दभेदो वैषम्यमसंभवोऽप्रसिद्धिश्च ।

इत्येते चत्वारो दोषा नासम्यगुपमायाः ॥

सामान्यशब्दभेदः सोऽयं यत्रापरत्र शक्येत ।

योजयितुं नाभम् तत् सामान्याभिधायिपदम् ॥

(४२९) एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः=का. अ. सा. सं. ( ५।२० )

अनेकालङ्क्रियोल्लेखे समं तद्वृत्त्यसंभवे ।

एकस्य च ग्रहे न्यायदोषाभावे च संकरः ॥

(४३१) क्रमेणोदाहरणम्=यथा स मारुताकम्पितपीतवासाः........यथा स पीतवासा

प्रगृहीतशार्ङ्गो...यथा निपेतुरास्यादिव तस्य दीप्ताः...यथा अयं पद्मासनासीनः=

भा. का. अ. ( २।४१, २।५७, २।५८, २।४७ )

(४३६) तदेते...न पृथक् प्रतिपादनमर्हन्तीति=रु. का. अ. ( ११।२४ नमिसाधु टी. )

ते च नासम्यक् । अपि तु स्फुटा एव ।......यथा भक्षिताः सक्तवो......

( App. D ) ( घ )

## काव्यप्रकाशविवेकोदाहृतनिदर्शनानां सूची

## ( App. E ) ( ङ )

### काव्यप्रकाशे का. प्र. विवेके च प्रयुक्ता न्यायाः

#### (क) काव्यप्रकाशे :—

## ( App. F ) ( च )

### काव्यप्रकाशविवेके प्रमाणोद्धृतयः

अलङ्कारग्रन्थकृतः ( ग्रन्थाश्च )

( App G ) ( छ )

काव्यप्रकाशविवेके समुद्धङ्किता शास्त्रान्तरकृत शास्त्रचयाश्च

( App. H ) ( ज )

## दुरूहशब्दसूची

---

## ERRATA ( Part I )

| Page | Line | Read | For |
|---|---|---|---|
| xiv | 34-35 | which are in *āryā* and in the definition of the figure प्रतिवस्तूपमा, uses | which are in prose, uses |
| 25 | 10 | समवायिपदम् | समाधिपदम ?) |
| ,, | 18 | कालानुपाति | कालानुयाति |
| 43 | 17 | प्रसिद्धाभिधाना | प्रसिद्धयाभिधाना |
| 45 | 12 | लोकेऽस्ति | लोकेऽनु |
| 48 | 18 | परस्परासङ्कीर्णा | परस्पराऽसङ्कीर्ण |
| 49 | 2 | विवक्षिततया | विवक्षितनये |
| 50 | 12 | सा नियतप्रतिबन्धाऽनियत | साऽनियतप्रतिबन्धा |
| ,, | 14 | अप्रतिबन्धा त्वेक | अनियतप्रतिबन्धा त्वे |
| 54 | 8 | ध्वन्यते | ध्वन्वते |
| 55 | 19 | विच्छित्ति· | विच्छित्तिः |
| 76 | 2 | च्छेदपाण्डुः | च्छेदकान्तः |
| 78 | 6 | अपरस्तु | अपरन्तु |
| 101 | 12 | ...ण एत्थ' 'अत्ताण एत्थ' | ...ण एत्थ' |
| 105 | 3 | अरमशिरमणी | अरसशिरोमणि |
| 108 | 5 | रहमुज्जग्रम्मि | रहमुज्जुग्रम्मि |
| 110 | 28 | ...ण एत्थ' 'अत्ताण एत्थ' | ...ण एत्थ' |

## ERRATA ( Part II )

| Page | Line | Read | For |
|---|---|---|---|
| 142 | 25 | तरङ्गभ्रूभङ्गे | तरङ्गभ्रुभङ्गे |
| 143 | 10 | समाहितमित्य... | समाहित इत्य... |
| ,, | 17 | ·· द्वारानिदानीन्तनाः | ...द्वारा इदानीन्तनाः |
| 158 | 13 | चक्षुरादीनामिव | चक्षुरादीनामेव |

| Page | Line | Read | For |
|---|---|---|---|
| 165 | 23 | शाब्दत्वहानिः | शब्दत्वहानिः |
| 166 | 4 | संशये | संशय—. |
| 177 | 27 | निःशेषेलादौ | निःशेषेलादा |
| 191 | 17 | क्रोधशून्यस्य वैरं भयाय | कोधशून्यस्य भयाय |
| 195 | 23 | तस्य | तत |
| 201 | 17 | दीर्घकाल | दोर्घकाल |
| 209 | 10 | प्रेमार्द्रार्द्र ॥२०४॥ ( अ श. ) | प्रेमार्द्रार्द्र ( अ. श. ) |
| 240 | 17 | लीलाऽम्बुज | लीलानुम्वन |
| 242 | 10 | प्राधारः | प्राग्भारः |
| 243 | 21 | युष्माकमंहसा | युष्माकमघानां (?) |
| 245 | 10 | सन्दिग्ध | सन्दिग्द |
| 248 | 11 | परापर | परस्पर |
| 257 | 1 | चरन्ति ।३२३। | चरन्ति । |
| 261 | 27 | तथा | मता |
| 272 | 24 | Doctrine of Lakṣaṇa | Doctrine Lakṣaṇa |
| 280 | 12 | पदवाच्येऽथ | पदवाच्येऽर्थे |
| 288 | 14 | चर्याबन्धः | पर्याबन्धः |
| 296 | 4 | धरणिधव | धरणिधर |
| 298 | 9 | पादावृत्ति | पदावृत्ति |
| 320 | 5 | तनुवपुरप्यन्योऽसौ | तनुवपुरप्यनन्योऽसौ |
| 324 | 2-3 | तुल्यम् | तुल्य मुखम् |
| 229 | 13 | रूपकं | कूर्परं |
| 331 | 10 | मरिहिमि | मरिहसि |
| 337 | 17 | द्वन्योत्प्रेक्षे अपि | द्वन्योत्प्रेक्षेऽपि |
| 352 | 9 | ...वारणेन्द्रलीलाम् ॥४२२॥ | ...वारणेन्द्रलीलाम्॥४६०॥ |
| 365 | 1, 15 | खिद्यति | खिद्यति |